—• विश्वरूपसन्दर्शनयोगः •—

पार्थाय दत्वा निजदिव्यचक्षुः
स दर्शयामास शिवस्वरूपम् ।
दृष्ट्वा विभीतस्य धनंजयस्य
प्रदर्शयामास पुनस्स्वरूपम् ॥१६॥

—• भक्तियोगः •—

ये भक्तास्समुपासते परशिवं साकारमूर्तिं सदा
ये ध्यायन्ति च निर्गुणं हृदि महालिङ्गार्चना नित्यशः ।
तेषां श्रेष्ठतमान्वदन्ति सुधियो लिङ्गार्चनं कुर्वतः
दृष्टान्तोऽत्र भवेच्च द्रोणतनयः पाण्डोस्सुतो मध्यमः॥१७॥

यश्शक्तिमान्भवति शङ्करपूजने च
करोति कर्माणि च कामशून्यः ।
शत्रौ च मित्रे सदृशान्तरङ्गः
भवेत्स शम्भोः प्रियभक्तसत्तमः ॥१८॥

श्रीभगवद्गीतातत्त्वप्रभायां द्वितीयषट्कं समाप्तम् ।

---

श्रीभगवद्गीतातत्त्वप्रभायां तृतीयं षटकम् ।

—• क्षेत्रक्षेत्रज्ञविभागयोगः । •—

क्षेत्रं यच्च विकारि नश्वरमिदं षट्त्रिंशतत्त्वात्मकम्
अव्यक्तं निगदन्ति केचन परे मायेति चिच्छक्तिकाम् ।
इच्छाशक्तिमहंकृतिं मतिमुमाजानेश्च दृष्टिं च ये
नो जानन्ति विदन्तु ते पशुपते स्वाभाविकाश्शक्तयः ॥१९॥

चिदचिच्छक्तिविशिष्टम्
ब्रह्मेत्याघोष्यते दिगन्तेषु ।
कार्यस्य कारणस्याऽ-

साद्दश्यादिह परास्तमद्वैतम् ॥२०॥
यस्सर्वगतोऽप्यात्मा
नभ इव नाप्नोति कञ्चिदपि दोषम् ।
भानुरिव सर्वभुवनम्
क्षेत्री क्षेत्रं प्रकाशयत्येव ॥२१॥

—•गुणत्रयविभागयोगः । •—

रागो रजस्सत्त्वमभूच्च सौख्यं
अज्ञानजो मोह इतीड्यते बुधैः ।
य ईश्वरोपासनमातनोति
गुणानतिक्रम्य शिवत्वमीयात् ॥२२॥

• — पुरुषोत्तमप्राप्तियोगः •—

संसारवृक्षे निवसन्मनीषी
निरन्तरं कर्मफलानि भुंजन् ।
उपास्य चाद्यं पुरुषोत्तमं तं
स याति देशं न निवर्तते यतः ॥२३॥

—• दैवासुरसम्पद्विभागयोगः । •—

क्षमा धृतिश्शौचमपैशुनं दमः
दया च भूतेषु शिवस्य पूजा ।
इति प्रसिद्धैस्सुगुणैस्समेता-
न्वदन्ति तान्दैविकसम्पदुन्नतान् ॥२४॥
ये द्रव्यं समुपार्जयन्ति बहुधाऽसत्कूटसाक्ष्यादिना
ये त्वाचारपराङ्मुखा जगदिदं मिथ्येति सम्भाषिणः ।
स्त्रीपुंयोगसमुद्भवस्य जगतो देवोऽस्य हेतुर्नही-
त्यालपान्ब्रुवते च ये निगदितास्ते क्रूरदैत्याधमाः ॥२५॥

—• श्रद्धात्रयविभागयोगः •—

दानं तप आहारं
स्वीकुरुते यो गुणत्रयमधिश्रित्य ।
तं श्रद्धात्रयभाजं
कथयन्त्यार्या महीयांसः ॥२६॥

—• मोक्षोपदेशयोगः । •—

यस्मादधिकः कोऽपि
तुल्यो वा नास्ति सर्वभुवनेषु ।
तं शिवमार्या यूयम्
नित्यं पूजयत वाङ्मनःकायैः ॥२७॥

पशुपाशबन्धमोक्षण-
कर्ता परमेश एव लोकेषु ।
तं शिवमार्या यूयं
नित्यं पूजयत वाङ्मनःकायैः ॥२८॥

शिव एव परं ब्रह्मे-
त्यखिलर्षिभिरीड्यते मुमुक्षुभिर्यः ।
तं शिवमार्या यूयं
नित्यं पूजयत वाङ्मनःकायैः २९॥

मार्कण्डेयोऽपूपुज-
दुग्रं यं जीविताऽभिलाषेण ।
तं शिवमार्या यूयम्
नित्यं पूजयत वाङ्मनःकायैः ॥३०॥

रे मूढा निरतं यजन्तु भवमन्तर्यामिणं चेश्वरम्
सर्वारिष्टहरं समस्तजगतां नाथं तुरीयं शिवम् ।
किं गच्छन्ति सदा बुधेन्द्रनिकरादृज्ञातुं यथार्थं दिशः
वेदास्तच्छिन्नतत्त्वमूचुरुदिते कल्पे किमन्यैः द्रुमैः ॥३१॥

—•शुभकामना•—

श्रीकृष्णेनार्जुनाय प्रचलितसमरे बोधितेशानतत्त्वा
वर्धन्ती कल्पकेवाखिलजनमनःकामदोग्ध्री नितान्तम् ।
आचन्द्रार्कं च नित्यं सुमृदुमतिमता बोधयन्तीशतत्त्वं
गीतातत्त्वप्रभेयं कलयतु कुतुकं मानसे पण्डितानाम् ॥३२॥

श्रीशैवमहापीठाधिपतिना, शिवयोगिना, मुदिगोण्ड वीरेशलिङ्गशास्त्रिणा
विद्वच्छिरोमणिना विरचिता इयं श्रीभगवद्गीतातत्त्वप्रभा
समाप्तिमुपगता ।

श्रीः श्रीः श्रीः ॥

———



श्वेताचार्यान्तेवासिनः, शैवभाष्यरचयितारः, प्राणलिङ्गधारिणः, श्रीकण्ठा-
चार्य-नीलकण्ठाराध्येति नामद्वयविराजमानाः, षट्लिङ्गाङ्गविवेकिनः
जगद्गुरु श्री नीलकण्ठाराध्यभगवत्पूज्यपादाः ॥



शिवलिङ्गधारी, परममाहेश्वराचारसाम्प्रदायिकः,

एतद्ग्रन्थमुद्रणद्रव्यदाता

श्रीमान् कोमरवेल्लि बालराजगुप्तः ॥



ब्रह्मपथादिशताधिकग्रन्थकर्तारः, श्रीनीलकण्ठभाष्यस्य शिवचिन्तामणि
प्रभानामकव्याख्यारचनया जगद्व्याप्ताखण्डकीर्तिभाजः, जगद्गुरु
महोपाध्यायेत्यादिबिरुदाङ्किताः, शिवयोगि
मुदिगोण्ड नागलिङ्गाराध्यगुरुस्वामिनः ॥



श्रीमदुद्भटाराध्यवंशपयःपारावारराकासुधाकराः, निगमागमाथर्वणपदवाक्यप्रमाणपारीणाः, संस्कृतान्ध्रकवितारचनाधुरीणाः, लघुचन्द्रिकाव्याख्यालेखनमुद्रापणप्रोत्साहकाः, भूमिकाकर्तारः, पाशुपतव्रतदीक्षाप्रधानाचार्यस्वामिनः, शैवमहापीठाधिपतयः, 'विद्याप्रवीण, विद्वान्, जगद्गुरु लोकाराध्य' इत्यादिबिरुदांकिताः शिवयोगि —

मुदिगोण्ड वीरेशलिङ्गाराध्यगुरुस्वामिनः ।



श्रीमत्त्रिलोकगुरु चेन्न मल्लिकार्जुनपण्डितपीठस्थाः, करीनगरमण्डलस्थित
कोत्तकोण्डग्रामस्थापितशून्यसिंहासनाध्यक्षाः, षट्कालशिवपूजाधुरंधराः
कोडिमेल राजलिङ्गाराध्यगुरुस्वामिनः ॥



गुरु चरेश्वर पाद तीर्थ प्रसाद सेवा तत्परा
अन्नदान परायणा बालराज गुप्त जननी

अन्नपूर्णादेवी.



महेशमाहेश्वरसेवासक्तहृदया, श्री कोमरवेल्लि बालराजगुप्ताग्रजस्य
राजलिङ्गगुप्तस्य जाया
श्रीमती नागमाम्बा ।



गुरुचरेश्वरपूजासक्तः, वैश्यचूडामणिः,

शिवभक्ताग्रेसरः

श्रीमान् कौमरवेल्लि बालराजगुप्तः ॥



निरंतर गौरी पूजाभक्त चित्ता, सुशीला
श्रीमती बालराज गुप्तस्य धर्मपत्नी

श्रीमती वरलक्ष्मीदेवी.

श्री शिवाय गुरवे नमः ।

श्रीमद्भगवद्गीतोपनिषत्पठनादौ कर्तव्य-

# प्रार्थनाक्रमः ।

श्लो॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुस्साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥१॥
ईशानमीश्वरीं स्कन्दं केशवं पद्मसम्भवम् ।
नन्दीश्वरं कुम्भयोनिं भरद्वाजं च गौतमम् ॥२॥
दधीचिमुपमन्युं च मार्कण्डेयं पराशरम् ।
अफाललोचनं शम्भुं वेदव्यासमहं भजे ॥३॥
श्वेताचार्यं च तच्छिष्यं नीलकण्ठशिवाभिदम् ।
तच्छिष्यं हरदत्तं च भवदेवसमाह्वयम् ॥४॥
सोमशेखरभीमेशौ श्रीशिवाद्वैतबोधकौ ।
महापाशुपतज्ञानसम्प्रदायप्रवर्तकान् ॥५॥
अंशावतारानीशस्य योगाचार्याननुपास्महे ।
श्वेतादिनकुलीशांश्च द्वादशाख्यसद्गुरून् ॥६॥
सम्यङ्न्यायकलापेन महता भारतेन च ।
उपबृंहितवेदाय वेदव्यासाय ते नमः ॥७॥
यः पाशुपतविज्ञानं ददौ गीतामृतं महत् ।
कुर्वन्पार्थाय सारथ्यं तस्मै कृष्णात्मने नमः ॥८॥

—: गीतामाहात्म्यम् :—

गीताशास्त्रमिदं पुण्यं यः पठेत्प्रयतः पुमान् ।
कैवल्यं समवाप्नोति भयशोकादिवर्जितः ॥१॥
गीताध्ययनशीलस्य प्राणायामपरस्य च ।
नैव सन्ति हि पापानि पूर्वजन्मकृतानि च ॥२॥
मलनिर्मोचनं पुंसां जलस्नानं दिने दिने ।

सकृद्गीताम्भसि स्नानं संसारमलनाशनम् ॥३॥
गीता सुगीता कर्तव्या किमन्यैश्शास्त्रविस्तरैः ।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिस्सृता ॥४॥
भारतामृतसर्वस्वं विष्णोर्वक्त्राद्विनिस्सृतम् ।
गीतागङ्गोदकं पीत्वा पुनर्जन्म न विद्यते ॥५॥
सर्वोपनिषदो गावः दोग्धा गोपालनन्दनः ।
पार्थो वत्सस्सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥६॥

—: गीतास्तोत्रमहामन्त्रः :—

अस्य श्रीभगवद्गीतास्तोत्रमहामन्त्रस्य वासुदेव ऋषिः, अनुष्टुप् छन्दः, श्रीसाम्बसदाशिवो देवता,—

'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठ'तीति बीजम् ।
'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इति शक्तिः ।
'तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी' इति कीलकम्।
मम साम्बसदाशिवप्रसासिद्ध्यर्थे प्रवचने विनियोगः ।

—: करन्यासः :—

'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत' इत्यंगुष्ठाभ्यां नमः ।
'मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः' इति तर्जनीभ्यां नमः ।
'मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यत' इति मध्यमाभ्यां नमः ।
'यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पणम्' इत्यनामिकाभ्यां नमः ।
'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु' इति कनिष्ठिकाभ्यां नमः।
'मच्चित्तस्सर्वदुर्गाणि मत्प्रसादात्तरिष्य'सीति करतलकरपृष्ठाभ्यां नमः।

—: हृदयादिन्यासः :—

'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत' इति हृदयाय नमः ।
'मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः' इति शिरसे स्वाहा ।
'मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते' इति शिखायै वषट् ।

'यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पणम्' इति कवचाय हुम् ।
'मन्मना भव मद्भक्तो मद्याजी मां नमस्कु'र्विति नेत्रत्रयाय वौषट् ।
'मच्चित्तस्सर्वदुर्गाणि मत्प्रसादात्तरिष्य'सीति अस्त्राय फट् ।

—: दिग्बन्धः :—

भूर्भुवस्सुवरोमिति दिग्बन्धः ।

—: ध्यानम् :—

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं ध्याये हृद्धि महेश्वरम् ॥

—: पञ्चपूजा :—

लं पृथिवीतत्त्वात्मने साम्बसदाशिवाय नमः, गन्धं परिकल्पयामि ।
हं आकाशतत्त्वात्मने साम्बसदाशिवाय नमः, पुष्पं परिकल्पयामि ।
यं वायुतत्त्वात्मने साम्बसदाशिवाय नमः, धूपं परिकल्पयामि ।
रं तेजस्तत्त्वात्मने साम्बसदाशिवाय नमः, दीपं परिकल्पयामि ।
वं अमृततत्त्वात्मने साम्बसदाशिवाय नमः, अमृतोपहारनैवेद्यं परिकल्पयामि ।
सं सर्वतत्त्वात्मने साम्बसदाशिवाय नमः, सर्वोपचारान्समर्पयामि ।

इति साम्बमूर्तिं ध्यात्वा गीताभाष्यपूजां कृत्वा
गीतापारायणं, प्रवचनं वा कुर्यात् ।

---

श्री शिवाय गुरवे नमः ।

## श्रीमद्भगवद्गीतार्थसंग्रहः ।

स्वधर्मज्ञानवैराग्यलभ्यभक्त्यैकगोचरः ।
सदाशिवः परं ब्रह्म गीताशास्त्रे समीरितः ॥१॥

मुक्तिसाधनपर्वेदं श्रुत्यन्तार्थतयोच्यते ।
निष्कामकर्मानुष्ठानं त्यागात्काम्यनिषिद्धयोः ॥२॥

तत्रापि परमो धर्मो जपस्तुत्यादिरीशितुः ।
क्षीणपापस्य चित्तस्य विवेके योग्यता यदा ॥३॥

विमोक्षे नित्यबुद्धिश्च ब्रह्मोपास्तिफले भवेत् ।
अनित्यत्वमतिस्स्वर्गसुखे कर्मफले ततः ॥४॥

सम्पद्येत विरागो हि सर्वकर्मफलात्ततः ।
शमादिगुणसम्पत्त्या मुमुक्षा जायते दृढा ॥५॥

चतुर्भिस्साधनैरेभिरधिकारी विराजते ।
पशुपाशमतिज्ञानं विषयः परिकीर्तितः ॥६॥

वेद्यवेदकभावोऽयं सम्बन्धस्तु निगद्यते ।
परमेश्वरसायुज्यरूपा मुक्तिः प्रयोजनम् ॥७॥

ज्ञानकर्माधिके निष्ठे योगलक्ष्ये सुसंस्कृते ।
आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्के प्रकीर्तिते ॥८॥

मध्यमे परमेशस्य प्रसादान्मुक्तिदायकः ।
ज्ञानकर्माभिनिर्वर्त्यः भक्तियोगः प्रकीर्तितः ॥९॥

पशुपाशपतिख्याततत्त्वत्रयविवेचनम् ।
कर्मधीर्भक्तिरित्यादिः पूर्वशेषोऽन्तिमेरितः ॥१०॥

अस्थानस्नेहकारुण्यधर्माधर्मसमाकुलम् ।
पार्थमुद्दिश्य प्रथमे शास्त्रावतरणं कृतम् ॥११॥

नित्यात्मासङ्गकर्मेह गोचरा साङ्ख्ययोगधीः ।
द्वितीये स्थितधीलक्षा प्रोक्ता तन्मोहशान्तये ॥१२॥

आसक्त्या लोकरक्षायै गुणेष्वारोप्य कर्तृता ।
सर्वेश्वरे वा न्यस्योक्ता तृतीये कर्मकारिता ॥१३॥

प्रसङ्गात्स्वस्वभावोक्तिः कर्मणोऽकर्मताऽस्य च ।
भेदाज्ञानस्य माहात्म्यं चतुर्थाध्याय उच्यते ॥१४॥

कर्मयोगस्य सौकर्यं शैघ्र्यं काश्चन तद्विधाः ।
ब्रह्मज्ञानप्रकारश्च पञ्चमाध्याय उच्यते ॥१५॥

योगाभ्यासविधिर्योगी चतुर्धा योगसाधनम् ।
योगसिद्धिस्स्वयोगस्य पारम्यं षष्ठ उच्यते ॥१६॥

स्वयाथात्म्यं प्रकृत्याऽस्य तिरोधिश्शरणागतिः ।
भक्तभेदः प्रबुद्धस्य श्रैष्ठ्यं सप्तम उच्यते ॥१७॥

ऐश्वर्याक्षरयाथात्म्यं महेशशरणार्थिनाम् ।
वेद्योपादेयभावानामष्टमे भेद उच्यते ॥१८॥

स्वमाहात्म्यं मनुष्यत्वे परत्वं च महात्मनाम् ।
विशेषो नवमे योगो भक्तिरूपः प्रकीर्तितः ॥१९॥

स्वकल्याणगुणानन्त्यकृत्स्नस्वाधीनता मतिः ।
भक्त्युत्पत्तिविवृद्ध्यर्थं दशमे हि समीरिता ॥२०॥

एकादशेऽस्या याथात्म्यं साक्षात्कारावलोकनम् ।
दत्तमुक्ताविति प्राप्त्योर्भक्त्यैकोपायता तथा ॥२१॥

भक्तिशैघ्र्यमुपायोक्तिरशक्तस्यात्मनिष्ठता ।
तत्प्रकारास्त्विवति प्रीतिर्भक्तेर्द्वादश उच्यते ॥२२॥

देवं स्वरूपमात्माप्तिहेतुरात्मविशोधनम् ।
बन्धहेतुर्विवेकश्च त्रयोदश उदीर्यते ॥२३॥

गुणबन्धविदा तेषां कर्तृत्वं तन्निवर्तनम् ।
गतित्रयस्य मूलत्वं चतुर्दश उदीरितम् ॥२४॥

अचिन्मिश्राद्विशुद्धाच्च चेतनात्परमेश्वरः ।
व्यापनाद्भरणात्स्वाम्यादन्यः पञ्चदशोदितः ॥२५॥

देवासुरविभागोक्तिपूर्तिका शास्त्रवश्यता ।
तत्त्वानुष्ठानविज्ञानस्थेम्ने षोडश उच्यते ॥२६॥

अशास्त्रमासुरं कृत्स्नं शास्त्रीयं गुणतः पृथक् ।
लक्षणं शास्त्रसिद्धस्य त्रिधा सप्तदशोदितम् ॥२७॥
ईश्वरे कर्तृताबुद्धिस्तत्त्वोपादेयताऽन्तिमे ।
स्वकर्मपरिणामश्च शास्त्रसारार्थ उच्यते ॥२८॥
कर्मयोगस्तपस्तीर्थदानयज्ञादिसेवनम् ।
ज्ञानयोगो जितस्वान्तैः परिशुद्धात्मनि स्थितिः ॥२९॥
त्रयाणामपि लोकानां त्रिभिरन्योन्यसङ्गमः ।
नित्यनैमित्तिकानां च पराराधनरूपिणाम् ॥३०॥
आत्मदृष्टेस्त्रयोप्येते योगद्वारेण साधकाः ।
निरस्तनिखिलाज्ञानो दृष्ट्वात्मानं परानुगम् ॥३१॥
प्रतिलक्ष्य परां भक्तिं तयैवाप्नोति तत्पदम् ।
भक्तियोगस्तदर्थी चेत्तमप्यैश्वर्यसाधनम् ॥३२॥
आत्मार्थी चेत्त्रयोप्येते तत्कैवल्यस्य साधकाः ।
ऐकान्त्यमीश्वरेऽन्येषां समानमधिकारिणाम् ॥३३॥
यावत्प्राप्ति परार्थी चेत्तदेवात्यन्तमश्नुते ।
ज्ञानी तु परमैकान्ती तदायत्तात्मजीवनः ॥३४॥
तत्संश्लेषवियोगैकसुखदुःखस्तदेकधीः ।
भगवद्ध्यानयोगोक्तवन्दनस्तुतिकीर्तनैः ॥३५॥
लब्धात्मा तद्गतप्राणमनोबुद्धीन्द्रियक्रियः ।
निजकर्मादिभक्त्यन्तं कुर्यात्प्रीत्यैव कारितः ॥३६॥
उपयतां परित्यज्य न्यसेद्देवे तु तामभीः ।
ऐकान्तात्यन्ततद्भावरतिस्तत्पदमाप्नुयात् ॥३७॥
तत्प्रधानमिदं शास्त्रमिति गीतार्थसंग्रहः ।
कथितोऽयं नागलिङ्गशिवाराध्येन धीमता ॥३८॥

---



शिवाय गुरवे नमः ।

श्री शिवयोगि मुदिगोण्ड नागलिङ्गशिवाराध्यकृत-

# श्रीभगवद्गीतातात्पर्यनिर्णयः ।

श्लो॥ प्रह्लादनाय सुधियां नागलिङ्गसमाह्वयः ।
व्यक्तीकरोति भगवद्गीतातात्पर्यनिर्णयम् ॥

ननु श्रीभगवद्गीतायाश्शिवतत्त्वप्रतिपादनपरतया श्रीमद्भिर्भाष्यकारैर्नीलकण्ठभगवत्पादाराध्यैः कृतं विवरणमसङ्गतं- तस्याः केवलाद्वैतपरत्वात् । तथाहि- 'नत्वेवाहं जातु नास'मित्यादिना मुक्तिफलत्वेन तदभिमतस्याऽऽत्मज्ञानस्यैवात्र निबद्धत्वादितिचेन्न, अत्र परमप्राप्यस्य पत्युः, हातव्यस्य पाशस्य च स्वरूपनिरूपणाय पुरस्तात्प्राप्तुर्हातुश्च पशोर्याथात्म्यनिरूपणस्याऽवश्यकर्तव्यत्वेन साङ्ख्यमाश्रित्य जीवतत्त्वस्योपदिष्टत्वेऽपि परस्तात्— 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥' इत्यादिना परमेश्वराराधनभूतकर्मयोगस्यापि मोक्षसाधनत्वेनोपदेशात् । 'ज्ञानं तेऽहं सविज्ञान'मित्यादिना पाशस्वरूपेण सह परमेश्वरस्वरूपस्याऽप्यनुपदमेवोपदिष्टत्वाच्च ।

अत एव प्रजापतिवाक्ये दहरवाक्योदितपरविद्याशेषतया प्राप्तुरात्मनस्स्वरूपदर्शनम् । 'यस्तमात्मानमनुविद्य विजानाती'त्युक्त्वा जागरितस्वप्नसुषुप्त्यतीतं प्रत्यगात्मस्वरूपमशरीरं प्रतिपाद्य, 'एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यत' इति दहरविद्याफलेनोपसंहृतम् । तस्मादात्मज्ञानमात्रमसाधकम् । वेदनोपासनध्यानादिशब्दैः भक्तियोगस्याऽप्यत्रोपदेशादिति दिक् ।

ननु परैः स्वीयगीताभाष्ये- 'आत्मज्ञानस्य तु केवलनिश्श्रेयसहेतुत्वं भेदप्रत्ययनिवर्तकत्वेन कैवल्यफलावसायित्वादिति, भ्रान्तिप्रत्ययनिमित्त एव संसारभ्रमः, नतु परमार्थत इति, सम्यग्दर्शनादत्यन्तोपरम' इति च निगदितमिति चेत्तत्स्वाभिमतमेव, नतु श्रुतिसूत्रगीतासम्मतम् ।

तद्यथा परस्मिन्नद्वितीये प्रज्ञानघने ब्रह्मणि भ्रान्तिकल्पनस्याऽयुक्तत्वात्प्रकृतिविविक्तात्मज्ञानमात्रस्य कैवल्यफलावसायित्वमिति मतस्य बादरेरथ कपिलस्य वाऽभिमतत्वेऽपि वेदाचार्याऽसम्मतत्वेनाऽपरिग्राह्यत्वात् । तथाहि- 'पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्यया'विति सूत्रेण जीवगतस्य सत्यसङ्कल्पत्वादितिरोधानरूपबन्धस्यानाद्यपचारमूलपरमेश्वरसङ्कल्पनिदानत्वस्य तद्विमोक्षस्य परमेश्वरप्रसादायत्तत्वस्य च प्रतिपादितत्वेन भ्रान्तिमूलत्वकल्पनस्य तद्विरुद्धता विदिता । अत एव 'संसारमोक्षः प्रतिबन्धहेतु'रिति श्रुतिः बन्धमोक्षयोः परमेश्वरहेतुत्वमेवाश्रावयति । 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । यदा जुष्टं पश्यत्यन्यमीशं अस्य महिमानमिति वीतशोक' इति श्रुतिश्च स्वस्मादर्थान्तरस्य स्थिरभक्तिसम्प्रीणितस्य परमेश्वरस्य प्रसादेनैव चेतनस्य शोकराहित्यमावेदयति । तथैव- 'तदोकोग्रज्वलनं तत्प्रकाशितद्वारा हार्दानुगृहीतश्शताधिकया' इति सूत्रेण वेदाचार्याः शरीरादुत्क्रममाणस्य विदुषः मोक्षपथप्रवेशकमूर्धन्यनाडीद्वारस्य प्रकाशनमपि ध्यानयोगसमाराधितस्य हृदयगुहावर्तिनः परमेश्वरस्य प्रसादेनैव लभ्यमिति निर्धारयन्ति ।

एवमेव गीताशास्त्रमपि- 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः । तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वत'मिति च शाश्वतस्य मोक्षपदस्य परमेश्वरप्रसादैकलभ्यत्वमेव प्रतिपादयति । एतेन यत्परैरीश्वरमनपेक्ष्य बन्धस्य भ्रान्तिमूलत्वमात्मज्ञानमात्रस्य निश्श्रेयसहेतुत्वमभिमन्यते तत् श्रुतिसूत्राद्यसम्मतमिति निष्पन्नम् ।

अथ यद्यात्मज्ञानमात्रस्यैव कैवल्यफलावसायित्वं श्रुत्यभिमतं तर्हि-'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति श्रुत्यैव

प्रतिपादिता स्वस्वरूपाभिनिष्पत्तिरूपकैवल्यफला परंज्योतिरुपसम्पत्तिः, तदुपसम्पत्तिसाधकः- 'तेऽर्चिषमभिसंविश'न्तीत्यादिश्रुतिविहितोऽर्चिरादिमार्गः, तत्प्रवेशकं- 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भव'न्तीति श्रुत्या प्रतिपादितमूर्धन्यनाड्यानिष्क्रमणं, तादृशनाडीद्वारप्रकाशनाय- 'तस्मिन्यदन्तस्तदुपासितव्य'मित्यादिना छान्दोग्यकैवल्यादिश्रुतिशतविहितं दहरोपासनादिकं सर्वमपि नैरर्थक्यमेव नीयेत । यद्येतत्सर्वं सगुणतत्त्वविषयतया सार्थकमिति ब्रूषे ! तर्हि प्रमाणजातस्य सर्वस्यापि सगुणैकविषयतया इष्यत एव । अत एव केवलाद्वैतविषयस्य श्रुतिविरोधः । ब्रह्मपथे सूत्रविरोधो व्यासपथे उभयविरोधो वेदान्तार्थपरिष्कारे च सविस्तरं प्रदर्शितोऽस्माभिः ।

गीताशास्त्रमपि श्रुतिसूत्रप्रतिपादितार्थरीत्यैव- 'प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः । मनस्संयम्य मच्चित्तो युक्त आसीत मत्पर' इति परमेश्वरविषयं ध्यानयोगं, 'अग्निर्ज्योतिरहश्शुक्लष्षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना' इति पारमेश्वरपरमपदप्रापकमर्चिरादिमार्गं चोपदिशति ।

परे तु अष्टमे नाडीद्वारेण धारणयोगस्सगुण उक्तः, तस्य च फलमर्चिरादिक्रमेण कालान्तरे ब्रह्मप्राप्तिलक्षणमेवाऽनावृत्तिरूपं निर्दिष्टं; तत्रानेनैव प्रकारेण मोक्षप्राप्तिफलमधिगम्यते, नान्यथेति शङ्का व्यावर्तयिषया श्रीभगवानुवाचेत्यवतारिकामाहुः । इदं यथा ब्रह्ममीमांसाभाष्ये- 'प्रतिषेधादितिचेन्न, शारीरा'दिति सूत्रेण निर्धारितमर्थं प्रत्याख्यातुं सामान्यवचनेन निबद्धे- 'स्पष्टो ह्येकेषा'मिति सूत्रे प्रदर्शितं, यथा च- 'भोगमात्रसाम्यलिङ्गा'दित्यादिसूत्रजातसिद्धान्तितमर्थं विपर्यासयितुं सामान्यवचनेन निबद्धे- 'मुक्तः प्रतिज्ञाना'दिति सूत्रे प्रदर्शितं, तथैवात्रापि- 'ज्ञानं विज्ञानसहित'मिति सामान्यवचननिबद्धे श्लोके पूर्वोक्तमर्चिरादिमार्गं निराकर्तुं प्रदर्शयिषितुं याथार्थ्यविपर्यासीकरणकौशलमेव ।

अत्र हि स्वाभिप्रेताया निर्गुणमुक्तेस्सद्योमुक्तित्वात्सगुणमुक्त्यपेक्षयाऽभ्यर्हितत्वं प्रख्यापयितुं सगुणमुक्तौ कालान्तरे ब्रह्मप्राप्तिलक्षणत्वरूपं लाघवमुद्घाटितं परैः, तदिह प्रकृतं सगुणनिर्गुणमुक्त्योस्तारतम्यं न किमपि तत्स्वरूपविवेकमन्तरेण व्यक्तीभवेदिति तदधिकृत्य प्रतिपादनमावश्यकमिति मन्यामहे ।

तथाच— सगुणमुक्तिस्तावदस्मच्छरीराद्ब्रह्मनाडीद्वारेण समुत्क्रम्य देवयानेन पथा परं ज्योतिरुपसम्पन्नस्य विदुषः स्वेन रूपेणाभिनिष्पद्यत इति श्रुत्या स्वस्वरूपाभिनिष्पत्तिरूपा सम्भवतीति पूर्वोक्तैरेव प्रमाणैरवगम्यते । अथ निर्गुणमुक्तिस्तु 'न तस्य प्राणाह्युत्क्रामन्ति, अत्रैव समवलीयन्त' इति श्रुत्या विदुषः प्राणोत्क्रान्तिप्रतिषेधात्, 'ब्रह्मैव सन् ब्रह्माप्येति, यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः, अथ मर्त्योऽमृतो भवति, अथ ब्रह्म समश्नुत' इत्यादि वचनप्रामाण्यात्प्राणोत्क्रान्तिमनपेक्ष्यात्र शरीर एव ब्रह्मभावापत्तिरूपेति तेषामाशयः । एवंविधाया निर्गुणमुक्तेश्शरीरादुत्क्रम्य कालान्तरभाविपरंज्योतिरुपसम्पत्त्यपेक्षाभावात्सद्योमुक्ततेति तेषामाकूतमित्राभाति ।

ब्रह्ममीमांसायां- 'अर्चिरादिना तत्प्रथिते'रिति देवयानमार्गस्य मोक्षपदप्रापकत्वनिरूपणात्, 'तदोकोग्रज्वलनं तत्प्रकाशितद्वारा हार्दानुगृहीतश्शताधिक'येति तत्प्रवेशकस्य मूर्धन्यनाड्या निष्क्रमणस्योपदेशात्, सू- 'सम्पद्याविर्भावस्स्वेन शब्दा'दिति देवयानेन पथा परंज्योतिरुपसम्पन्नस्य स्वस्वरूपाभिनिष्पत्तिरूपमुक्तिप्रतिपादनात्, 'सङ्कल्पादेव तु तच्छ्रुतेः, प्रदीपवदाकाशः, भोगमात्रसाम्यलिङ्गा'च्चेत्यादिभिर्बहुभिस्सूत्रैस्सगुणमुक्तेरेव सम्यगुपपादितत्वाच्च सगुणमुक्तिरेव वेदाचार्यस्य परमसम्मतेति स्फुटीभवति ।

अथ निर्गुणमुक्तेस्साधकमद्यापि ब्रह्ममीमांसायां न सन्दृश्यते । सू- 'अनावृत्तिश्शब्दा'दित्युपसंहाराधिकरणेनापि सगुणब्रह्मप्राप्तेरेवानावृत्तिफलतया निर्धारितत्वात्परैरवशतस्तदप्यधिकरणं सगुणमुक्तिपरतयैव विवरणीयमासीत् । तथापि यथाकथञ्चिच्छास्त्रे निर्गुणमुक्तिं निचिक्षिपयिषुभिः परैरेव सामान्यवचनेन निबद्धा । 'मुक्तः प्रतिज्ञाना'दिति सूत्रभाष्ये स्वाभिमता निर्गुणमुक्तिर्यद्यपि प्रपञ्चिता तथापि 'छागो वा मन्त्रवर्णा'दिति न्यायेन सामान्यवचनस्य मुक्तपदस्य भोगमात्रसाम्यलिङ्गाच्चेत्यादिना विशिष्य निर्धारितसगुणविषयत्वमेव न्याय्यमिति विदितमेव सुधियाम् ।

अथ निर्गुणमुक्तेश्शास्त्रं साधकं माभविष्यत्, बाधकं वा यदि नोपालभिष्यत् । तर्हि सा ऊर्यकरिष्यत् । विमर्शचक्षुषां सन्दृश्यते हि बाधकं बहु ।

तथाहि- पराभिमताया अत्र शरीर एव ब्रह्मभावापत्तिरूपमुक्तेः प्राणोत्क्रान्ति-प्रतिषेध एव भवति परमसाधकः । स हि सात्यवतेयस्य सुतरामसम्मत एव । तथा च 'समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य' इति सूत्रं विद्वदविदुषो-रुत्क्रान्तिसाम्यं प्रतिज्ञाय, ततः श्रु- 'न तस्य प्राणा ह्युत्क्राम'न्तीति प्राणो-त्क्रान्तिप्रतिषेधे जाग्रति कथमुत्क्रान्तिर्विदुष इत्याक्षिप्य 'प्रतिषेधादितिचेन्न शारीरा'दिति सूत्रेणायमुत्क्रान्तिप्रतिषेधो न शरीरात्, किंतु शारीरादेव। तस्मा-च्छरीरादुत्क्रान्तिर्विदुष उपपद्यत इति निर्धार्य, 'स्पष्टो ह्येकेषा'मिति सूत्रेणैकेषां शाखिनां मते न तस्मादिति पञ्चमीपाठाच्छारीरादेव प्रतिषेधः, न शरीरादिति निर्धारितम् ।

परे तु 'प्रतिषेधा'दिति सिद्धान्तसूत्रमेव पूर्वपक्षसूत्रतया परिगृह्य, इति चेन्नेत्यध्याहृत्य, सामान्यवचननिबद्धपूर्वसूत्रस्पष्टीकृतार्थस्य 'स्पष्टो ह्येकेषा'मिति सूत्रभाष्यपूर्वसूत्रार्थविरुद्धतया शरीरादेव स प्रतिषेधो न शारीरादिति स्वाभि-मतं विलिलिखुः । तदनन्तरं- 'तदोकोग्रज्वलन'मिति सूत्रे मूर्धन्यनाड्या निष्क्रमणस्य प्रतिपादितत्वेन तस्य स्वोक्तार्थप्रतिषेधकतामालोच्य तत्सगुणपरमिति कथयन्तः, कथमपि शास्त्राम्भोधिमुदप्लाविषुः । तदखिलमपि सर्वथा मीमांसा-विरुद्धमेवेति गतिपरिष्कारे प्रपञ्चितमस्माभिः ।

एवं विदुषः प्राणोत्क्रान्तिप्रतिषेधस्य वेदाचार्यासम्मतत्वात्तन्मूला अत्रैव शरीरे ब्रह्मभावापत्तिरूपा निर्गुणमुक्तिरपि तस्याऽनिष्टैवेति सिद्धम् । एवं निर्गुणमुक्तिर्वेदाचार्यस्य सगुणतत्त्वाभिमानिनोऽसम्मतैव भवतु । श्रुतौ वा यत्र कुत्रापि तस्यास्साधकं यदि लभ्येत, तर्हि सा परिगृह्येत । तत्रापि तस्या-स्साधकं मास्तु बाधकं वा यदि न विद्येत; तर्हि कथमप्यस्माभिः शिरसा गृह्येत ? समीक्षणे तत्रापि सन्दृश्यते बाधकमेव बहु । तथाहि, श्रु- 'एष देवपथो ब्रह्म-पथ' इति देवयानं पन्थानं धूमादिमार्गेण सहोपदिश्य- 'अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा' वेति, 'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्रा-ण्यसकृदावर्तीनि भूतानि भवन्ति, जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं, तेनासौ लोको न सम्पूर्यते, तस्माज्जुगुप्सेर'न्निति मार्गद्वयभ्रष्टानां कष्टजुगुप्सितस्तृतीयो मार्ग आम्नातः ।

एवं धूमादेरर्चिरादेश्च मार्गादन्यस्य स्थानस्य निन्दितत्वेन पराभिमतस्यापि स्थानस्य श्रौतमार्गद्वयबहिर्भूतत्वेन तृतीयकोटावेवान्तर्भावात्पराभिमतं स्थानं श्रुत्यन्तदूषितमेवेति सिद्धम् ।

अथ कालान्तरे ब्रह्मप्राप्तिलक्षणमिति परोक्तेस्तद्रीत्या सगुणस्यैव कार्यब्रह्मतया तदन्काले ब्रह्मप्राप्तिलक्षणमित्याशयपरिग्रहेऽपि स्वाभिमतस्य पदस्य जुगुप्सितत्वश्रवणात्तदपेक्षया कार्यब्रह्मपदमपि सर्वथा श्रेय इति विदितमेव । वस्तुतस्तु परैः किं द्वे, ब्रह्मणी भवेद इति प्रतिज्ञाय, निर्गुणतत्त्वस्यैव परत्वकारणत्वरूपगुणसंयुयोजयिषया निर्गुणं परं कारणमिति सगुणमपरं कार्यमिति च सगुणान्निर्गुणस्याऽभ्यर्हितत्वमापादयितुं स्ववाङ्मात्रेण विभागस्य कल्पितत्वात् तद्रीत्यापि निर्गुणे गुणसंयोगस्यासङ्गतत्वेन परत्वकारणत्वरूपगुणयोगस्य सगुणतत्त्व एव सुसङ्गतत्वेन श्रुतिभिस्सगुणस्यैव परमेश्वरस्य परब्रह्मत्वेन कारणत्वेन चोद्घोष्यमाणत्वेन निर्गुणस्य तत्त्वस्य श्रुतिपथेऽश्रूयमाणत्वेन च कारणं परब्रह्म सगुणः परमेश्वर एव, ब्रह्मविष्ण्वादयस्तु कार्यब्रह्मरूपा इति वैदिकः पन्थाः ।

एवं च विदुषः प्राणोत्क्रान्तिप्रतिषेधस्याऽसिद्ध्या 'अत्र ब्रह्म समश्नुते' इति वचनस्यापि 'समानाचासृत्युपक्रमा'दिति सूत्रेऽनुपोष्यलिङ्गशरीरादिकमदग्ध्वा सप्राणत्वमात्रमेवाऽमृतत्वमिति प्रतिपादनात्, 'तदाऽपीतेस्संसारव्यपदेशा'दिति सूत्रेण देवयानेन पथा निर्गम्य, अविकृतब्रह्मप्राप्तिसमय एव लिङ्गशरीरादिभ्यो विमुक्त्यवगमेन तावत्पर्यन्तं संसारबन्धनिवृत्तिर्नास्तीति निर्धारणाच्च निर्गुणमुक्तिर्निष्प्रमाणैवेति सिद्धम् । एवं श्रुतौ कुत्रापि निर्गुणमुक्तेरश्रवणात्, तथैव गीतास्वप्यग्निर्ज्योतिरित्यादिना सगुणमुक्तिसाधकस्यैवोपदेशादसूयातत्परैः परैः कालान्तरे ब्रह्मप्राप्तिलक्षणमेवानावृत्तिफलं निर्दिष्टमिति वचनरूपेण हार्दस्सन्ताप एव प्रकटीकृत इति विज्ञायते ।

ननु 'परं चापरं च ब्रह्म यदोङ्कार' इति श्रुत्या परं निर्गुणमपरं सगुणं ब्रह्मेत्यवगम्यते; ततश्च निर्गुणं कारणं सगुणं कार्यमिति चावगम्यत इति चेन्न— तस्याश्श्रुतेरपि परापरब्रह्मद्वयवाचकः प्रणव इत्यर्थप्रतिपादनमात्रपरतया सगुणनिर्गुणरूपब्रह्मद्वयप्रतिपादकत्वाभावात् ।

अथ प्रकृतश्रुतिविवक्षितं परापररूपं ब्रह्मद्वयं किमित्याशङ्कायां श्रु- 'ब्रह्म-विष्णुरुद्रेन्द्रास्सम्प्रसूयन्ते न कारणं, कारणं तु ध्येयस्सर्वैश्वर्यसम्पन्नस्सर्वेश्वर-श्शम्भुराकाशमध्ये', 'परात्परतरो ब्रह्मा तत्परात्परतो हरिः । तत्परात्परतो हीशः', 'ऋतगुँ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गल'मित्यादिमिश्श्रुतिभिः कारणं परब्रह्म परमेश्वर इति कार्यभूता ब्रह्मविष्ण्वादयोऽपरब्रह्मरूपा इति चावगम्यते । श्रुतिगण एवमुद्घुष्यत्यपि तदुक्तिमनाकर्ण्याऽवाच्यस्यैव स्वपरिकल्पितस्य शून्य-कल्पस्य निर्गुणतत्त्वस्य शिरसि परत्वकारणत्वादिकं, सकलश्रुत्यभिहितस्य सगुण-तत्त्वस्योपर्यपरत्वकार्यत्वकल्पितत्वरूपदोषजातं च समारोप्य, कार्यजातस्य मिथ्यात्वनिर्धारणद्वारा सजीवेश्वरस्य जगतो मिथ्यात्वबोधनेन यथा कथमपि बौद्धसाम्राज्यप्रतिष्ठापनधौरन्धर्याभिनिवेशमन्तरेण वेदान्तनिर्धारितार्थविपर्यासी-करणे परेषां न किमपि कारणमन्यदुत्पश्यामः ।

ननु केवलाद्वैतवादस्य साधकस्सर्वकर्मसन्न्यासो गीतासु प्रदिपादित इति चेत्, उच्यते—यद्यपि स परकीये गीताभाष्येऽनेकत्र प्रतिपादित एव; तथापि गीतासु तस्य साधकं नोपलभ्यते समीक्षणे सन्दृश्यते बाधकमेव ।

वस्तुतस्तु 'विद्यां चाविद्यां च यस्तद्वेदोभयगुँसह, तेनैति ब्रह्मवित्पुण्य-कृच्च सम्यग्ज्ञानेन ब्रह्मचर्येण नित्य'मित्यादिका श्रुतिः कर्मज्ञानयोस्समुच्चयं विदधाति । तदनुरोधेन भगवान्वेदाचार्योपि 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि'ति सूत्रेण विद्यां सर्वकर्मापेक्षामेव निर्धारयामास ।

परे तु कर्मज्ञानसमुच्चयं निराकृत्य सर्वकर्मसन्न्यासमेवाऽऽमूलाग्रं गीता-भाष्ये प्रपञ्चयामासुः । तद्यथा वेदाविनाशिनमिति श्लोकभाष्ये हन्ताऽहं हतो-स्मीत्युभौ तौ न विजानीत इति । अत्र चात्मनो हननक्रियां प्रति कर्तृत्वं, कर्मत्वं, हेतुकर्तृत्वं, चाऽज्ञानकृतं दर्शितम् । तच्च सर्वक्रियास्वपि समानम् । कर्तृत्वादेरविद्याकृतत्वं अविक्रियत्वादात्मनः । विक्रियावान्हि कर्ता आत्मनः कर्मभूतमन्यं प्रयोजयति 'कुरु' इति । तदविशेषेण विदुषस्सर्वक्रियासु कर्तृत्वं हेतुकर्तृत्वं च प्रतिषेधति भगवान्वासुदेवो विदुषः कर्माधिकाराभावप्रदर्शनार्थम्-- 'वेदाविनाशिनं, कथं स पुरुष' इत्यादिना इति । अत्र वेदाविनाशिनमित्यात्म-नोऽविनाशित्वेन नित्यत्वात्तस्य हननक्रियांप्रति कर्मत्वं कर्तृत्वं हेतुकर्तृत्वं

चाज्ञानकृतमित्येव भगवतो हृदयमवगम्यते। अथ तच्च सर्वक्रियास्वपि समानमित्यादिकं परेषां हृदयमेव। यदीदं स्यात्सर्वक्रियास्वपि समानं, तर्हि भुजिक्रियायामपि तुल्यमेवेति प्रष्टव्याः परे। अत एव सर्वकर्मत्यागमसम्भावितं मन्वता भगवता- 'शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मण' इति स कण्ठरवेणैव निराकृतः।

अथ परेषां साधकान्तरं विमृशामः, तद्यथा- 'सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी' सर्वेति। सर्वाणि कर्माणि सर्वकर्माणि सन्न्यस्य परित्यज्य नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं च सर्वाणि कर्माणि तानि मनसा विवेकबुद्ध्या कर्मादावकर्मसन्दर्शनेन संत्यजेत्यर्थ इति।

ननु मनसेति वचनान्न वाचिकानां कायिकानां च सन्न्यास इति चेत्, न—सर्वकर्माणीति विशेषितत्वात्। मानसानामेव सर्वकर्मणां प्रतिषेध इति चेत्, न—मनोव्यापारपूर्वकत्वाद्वाक्कायव्यापाराणां मनोव्यापाराभावे तदनुपपत्तिरिति च समर्थितम्।

अत्र नित्यनैमित्तिकमिति साहसमेव। मनसा विवेकबुद्ध्या कर्मादावकर्मसन्दर्शनेनेत्यपि परेषां हृदयमेव, नतु भगवतो हृदयम्। यदि भगवतस्सर्वकर्मसन्न्यास इष्येत, तर्हि मनसेति न ब्रूयादेव- सर्वाणि कर्माणि सन्न्यस्येत्यनेनैवेष्टार्थसिद्धेः मनसेतिपदं निरर्थकमेव भवेत्। तस्मात् मनसा सन्न्यस्येत्यनेन मानसिक एव त्यागो विवक्षितः, नतु कायिक इत्यर्थं स्पष्टीकर्तुमेव यद्यपि मनसेति पदं प्रायुंक्त भगवान्। तथापि तत्प्रयुक्तेनैव साधनेन भगवन्तमपि परे प्रतिहन्तुमुपाक्रमिषतेति किमतश्चित्रतरम्।

किंच मनसेतिपदस्यापरिग्रहेपि सर्वकर्माणि मयि सन्न्यस्येति वाक्यस्य 'ब्रह्मार्पणं ब्रह्म हविः, यज्जुहोषि यदश्नासि' इत्यादिना च प्रतिपादितात् परमेश्वरसम्प्रदानकात्सर्वकर्मार्पणान्न कोऽपि विशेषोऽत्र प्रतिभाति। तस्मादयमपि न साधकः परेषामिति सिद्धम्।

अथ प्रायशस्सर्वत्रापि परैः प्राधान्येन सर्वकर्मसन्न्यासलाभकाभाधीनतया समभिमतो हेतुरेकोऽवशिष्यते- यथा अविक्रियत्वादात्मनः विक्रियावान्हि कर्ता।

आत्मनः कर्मभूतमन्यं प्रयोजयति- 'कु'र्विति । यद्यपि हेतुमिमम प्रतिहतमेव मन्वते परे, तथाप्येवं पृच्छामः- भवताऽविक्रियत्वेनाभिमत आत्मा मुक्तो बद्धो वेति ? आद्ये- मुक्तमात्मानं प्रति कर्म कुर्विति न भगवानपि प्रयोजयितुमुत्सहते । द्वितीये तु- 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव' इति बद्धमेवोद्दिश्य वर्णाश्रमविहितकर्मणा परमेश्वरमाराध्य तत्प्रासादान्मुक्तो भवेत्युपदिदेशेति युक्तमेव ।

अथ यद्युभाभ्यामन्यः प्रबुद्धमन्यः कथमिति कश्चिदुत्थाय भवेत्सिद्धः, तर्हि साक्षाद्भगवानपि तमुद्दिश्य विजयी भवेति मौनमेवावलम्बेत । एतादृक्षविषये किं ब्रूमो वयम् । गीताशास्त्रे तु भगवान् 'काम्यानां कर्मणां न्यासं सन्यासं कवयो विदुः । सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥' इति काम्यकर्मत्यागस्सन्यास इति केचित्, सर्वकर्मफलत्याग एव स इत्यन्य इति च मतद्वयमेवोपदिश्य- 'निश्चितं शृणु मे पार्थ ! त्यागे भरतसत्तम' इत्यारभ्य, 'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् । कर्तव्यानीति मे पार्थ! निश्चितं मतमुत्तमम् ॥ नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्तित' इत्युपदिश्य 'न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः । यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयत' इत्युपदिदेश ।

अस्येदं परकीयं विवरणं—नहीति । न हि यस्माद्देहभृता देहं बिभर्तीति देहभृत्, देहात्माभिमानवान् देहभृदित्युच्यते, न विवेकी । तेन देहभृताऽज्ञेन न शक्यं त्यक्तुं सन्न्यस्तुं कर्माण्यशेषतो निश्शेषेण । तस्मात्परमार्थदर्शिना नैवादेहभृता देहात्मभावरहितेनैवाशेषकर्मसन्न्यासश्शक्यते कर्तुमिति ।

अत्र देहभृता जीवता सर्वाण्यपि कर्माणि त्यक्तुं न शक्यते । अथ यथासम्भवं कर्मत्यागेऽपि स सन्न्यासी न भवति, किंतु कर्माणि कृत्वा तत्फलमेव यः परित्यजति स एव त्यागीत्येव मूलस्य स्वरसोऽर्थोऽवगम्यते । अथ परकीयविवरणे तु देहात्माभिमानवता कर्माण्यशेषेण त्यक्तुं न शक्यते । तादृशाभिमानरहितेन त्वशेषकर्मणां त्यागः कर्तुं शक्यत एवेति । अत्र मूलविवरणयोर्वैपरीत्यं विशदमेव । अत्र देहाद्यभिमानरहितमेवं पृच्छामः- ननु भवता यदि कर्माणि सर्वाण्यपि त्यक्तुं शक्यन्ते तर्हि निरभिमानतया वस्त्रधारणमपि

त्यक्तुं शक्येत। अथ किमशनायापिपासेपि त्यक्तुं शक्येतेति, तथा शौचविधिं त्यक्तुं शक्येत। अथ विण्मूत्रोत्सर्गः प्रतिरोद्धुं शक्येतेति च। तस्मात्परकीयं विवरणमखिलमपि विमर्शासहमेव।

नित्यं नैमित्तिकं च संत्यजेति परकीयविवरणं नियतस्य तु सन्न्यासः कर्मणो नोपपद्यत इति भगवदुक्तिविरुद्धमिति स्फुटमेव। 'कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तम'मिति साक्षाद्भगवत्युच्चैर्निगदत्यपि तदुक्तिविरुद्धतया स्वयमभागवतमेव सर्वकर्मसन्न्यासादिकमूरीकुर्वन्तः साक्षाद्भगवदुपदिष्टमपि प्रत्याख्यान कौशलेनाऽभागवतमतमिति दूरीकुर्वन्तश्च स्वीयं तथ्यमिथ्यार्थविनिमयचातुर्यमेव प्रकटयन्तीति दिक्।

वस्तुतस्तु केवलाद्वैतवादस्य गीताशास्त्रं प्रतिपक्षभूतमेव, तथाहि- 'नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः। न चैव न भविष्यामस्सर्वे वयमतः पर'- मित्युपक्रम एवात्मनानात्वप्रतिपादकतया केवलाद्वैताभिमतात्मैकत्वविरुद्धः।

नन्विदं देहभेदाभिप्रायेण नात्मभेदाभिप्रायेणेति परैस्समर्थितं इति चेत्, न—उपक्रम एव स्वमतो निहत इति कथमपि स्वमतं स्थापयितुमुद्यम्य शक्तस्य कारणस्य प्रदर्शयितुमलाभेन देहभेदाभिप्रायेणेति प्रतिज्ञाय ततो निवृत्तत्वात्। तथा मध्ये- 'यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम'इति, अत्र क्षराक्षरशब्दितयोः पाशपशुरूपयोःप्रकृतिजीवयोःपरस्परं ताभ्यां परमेश्वरस्य च वैलक्षण्यप्रतिपादनेन च एकत्वपरोऽद्वैतपरो व्याहतः। एवमुपसंहारे 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया। तमेव शरणं गच्छ सर्वभावेन भारत! तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वत'मिति नित्यस्य मोक्षपदस्य परमभक्तिभावितपरमेश्वरप्रसादैकलभ्यत्वनिर्धारणेन आत्मानात्मविवेकमात्रसिद्धमुक्तिप्रभावोऽद्वैतवादः निर्वर्तितार्तनादमुत्सादित इत्यलं बहुना।

इति श्रीभगवद्गीतातात्पर्यनिर्णये केवलाद्वैतप्रतिषेधो नाम

प्रथमो भागः।

ओं तत्सत्।

---

शिवाय गुरवे नमः ।

श्री शिवयोगि मुदिगोण्ड नागलिङ्गशिवाराध्यकृत-

# श्रीभगवद्गीतातात्पर्यनिर्णये

## वैष्णवपथप्रतिषेधः ।

नन्वेवं गीतायास्सगुणतत्त्वबोधकत्वेपि तत्सगुणं ब्रह्म नारायण एवेति तत्रावगम्यमानत्वेन तदीयं शैवभाष्यकृतां विवरणमसमञ्जसमेव । तथाहि--आस्या हि समाख्या भगवद्गीतेति । सेयं वक्तुर्वासुदेवस्यैव भगवत्त्वमावेदयन्ती तत्त्वान्तराणां व्यावर्तयति । नच भगवान्बादरायणो भगवानापस्तम्ब इत्यादिना ज्ञानवैराग्ययुक्तेषु मुनिवरेष्वपि प्रयुज्यमानतया सर्वसाधारणो भगवच्छब्दो न वक्तुर्भगवत्त्वं बोधयितुं शक्नोतीति वाच्यं, सूतेनोक्ता सूतगीता, ब्रह्मणा स्कान्दे कथिता ब्रह्मगीता; ईश्वरेणापि कौर्मे निगदिता ईश्वरगीता; शिवेनापि पाद्मे उपदिष्टा शिवगीता; तथैव समाख्यायते । तद्रीत्या इयमपि कृष्णगीतेति, वासुदेवगीतेति वाऽऽख्यानीया न तथाख्यायते, किंतु भगवद्गीतेत्येव। तस्माद्वक्तरि भगवत्त्वमसाधारणं समभिप्रेत्यैवं व्यवह्रियत इत्यवश्यमेष्टव्यम् । नान्यथा समाख्यायास्समञ्जस्यमुपपद्यत इति चेदुच्यते—'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातन' इति पौराणिकरूढिमनुसृत्य यद्यप्येवं वासुदेवे प्रयुक्तो भगवच्छब्दः, तथाऽप्येवं न वासुदेवस्य भगवत्त्वं निर्धारयितुं शक्नोति । 'यो वै रुद्रस्स भगवान् , नमस्तेऽस्तु भगव' इत्यादिश्रुत्या रूढ्या परमेश्वरैकविषयत्वेन पौराणिकरूढ्यास्ततो दुर्बलत्वात् ।

वस्तुतस्तु 'या उमा सा महाविष्णु'रित्यादिश्रुतिभिर्वासुदेवस्य शिवशक्त्यंशत्वस्याम्नातत्वेन तस्य साक्षाद्भगवत्यंशत्वमेवाविष्कर्तुं सर्वविदा बादरायणेन तत्र प्रयुक्त इति तावता नायं गीताप्रतिपाद्यत्वं परमेशितुः प्रतिरोद्धुं शक्नोति । किं चेश्वर इति शब्दस्यानन्यविषयस्य सर्वेश्वरत्वबोधकतया, शिवशब्दस्यापि निर्धूतनिखिलदोषनिरवशेषमाङ्गल्यगुणवत्त्वरूपप्रवृत्तिनिमित्तशालितया, परब्रह्मत्व-

निर्धारकत्वात् । भगवत्पदादनन्तबलवत्त्वेन च न ततः पुराणेतिहासयोर्भगवत्पद-वाच्यस्याच्युतस्य पारम्यं सिद्ध्यतीत्यलम् ।

अत एव 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति । भ्रामयन् सर्व-भूतानि यन्त्रारूढानि मायया', 'तमेव शरणं गच्छ सर्वभावेन भारत!', 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः', 'तमेव चाद्यं पुरुषं प्रपद्ये', 'उत्तमः पुरुष-स्त्वन्यः परमात्मेति कीर्तितः' इत्यादयो गीताचार्योक्तयः परमशिवस्यैव विश्वाधि-कत्वं विश्वसेव्यत्वं च निर्धारयन्ति ।

ननु 'अहं सर्वस्य प्रभव' इत्यादिवचनपर्यालोचनया कृत्स्नाया अपि गीताया नारायणपरत्वप्रतीत्या तन्मध्यगतं यत्किञ्चिदीश्वरादिपदं योगेनाविरोधाय नारायणपरमेव प्रकल्प्यत इति चेन्न—लोकवेदाभ्यामनितरसाधारणत्वेनेश्व-रादिशब्दानां शिवपरत्वे योगरूढशक्तिद्वयलाभेन योगशक्तिमात्रेण नारायण-परत्वग्रहणस्यान्याय्यत्वात् । तादृशशब्दस्वारस्यादेव गीतानिगदितानाम'प्यहं सर्वस्य प्रभव' इत्यादिवाक्यानां, 'अहं मनुरभवं सूर्य'श्चेति वामदेवसार्वात्म्योप-देशवत्- 'शास्त्रदृष्ट्या तूपदेशो वामदेववदि'ति न्यायेन स्वान्तर्यामिपरमात्माभि-प्रायेण परशिवपरत्वावसायात् ।

नच 'सर्वस्य चाहं हृदि सन्निविष्ट' इत्यादिपञ्चदशाध्यायवचनप्रत्यभि-ज्ञानेन 'ईश्वरस्सर्वभूताना'मित्यादिषु स्थितेश्वरादिशब्दानामपि नारायणपरत्व-मेवावसीयत इति वाच्यं, 'तमेव शरणं गच्छ', 'तमेव चाद्यं पुरुषं प्रपद्य' इत्यादिवचनपर्यालोचनया भगवतश्श्रीकृष्णस्योपासककोटावन्तर्गणनेन सर्व-भूतान्तरस्वरूपपरमात्मत्वासिद्ध्या तदनुपपत्तेः ।

अत एव 'अहं सर्वस्य प्रभव' इत्यादिना प्रतिपादितनिखिलजग-ज्जन्मादिकारणत्वे ईश्वरस्य खलु जन्मादिकारणत्वं तत्कथमुपपद्यत इतीश्वर-विषयशङ्कानिरासार्थं 'ईश्वरस्सर्वभूतानां हृदि वर्तते, अतोऽहमन्तर्यामिदृष्ट्या जगत्कारणत्वं वच्मीति हृदयं तत्र व्यज्यते ।

ननु ईश्वरशब्दस्य परशिवपरत्वेऽस्मच्छब्दस्यान्तर्यामिपरत्वं, अस्म-च्छब्दस्यान्तर्यामिपरत्वे ईश्वरशब्दस्य शिवपरत्वमित्यन्योन्याश्रय इति चेन्न—

मामुपास्वेतीन्द्रवाक्य इन्द्रस्यानुपास्यत्वेनास्मच्छब्दस्य 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्'दिति न्यायादन्तर्यामिपरत्वमिव प्रकृतेऽपि तस्मान्न्यायादन्यत एवास्मच्छब्दस्यान्तर्यामिपरत्वस्य सिद्धत्वात् ।

न चेन्द्रस्यानुपास्यत्वेन तत्र तन्न्यायप्रवृत्तावपि प्रकृते वासुदेवस्योपास्यत्वेन तन्न्यायाऽप्रवृत्तिरिति शङ्क्यं, 'शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्य'ज्येति श्रुत्या शिवादन्यस्यानुपास्यत्वाम्नानेन, तथा गीतास्वपि 'तमेव चाद्यं पुरुषं प्रपद्य' इति शिवस्यैव वासुदेवोपास्यत्वनिर्धारणेन च प्रकृतशास्त्रदृष्टिन्यायप्रवृत्तेरवार्यत्वात् ।

ननु उपनिषत्सु शास्त्रदृष्टिन्यायप्रवृत्तेर्युक्तत्वेऽपीतिहासे भारते तन्न्यायप्रवृत्तिरयुक्तेति चेन्न—भारतस्य पञ्चमवेदत्वेन भगवद्गीतासूपनिषत्स्विति गीतानामुपनिषत्वेन च परमप्रसिद्धत्वेन चात्र तन्न्यायप्रवृत्तेर्युक्ततरत्वात् । किं चास्या गीतायाः कूर्मपुराणोक्तेश्वरगीतानुवादरूपत्वेनेश्वरगीतान्तर्गतानामेव 'अहं सर्वस्य प्रभव' इत्यादिवाक्यानामत्र विद्यमानतया पुरोवादेऽस्मच्छब्दस्येश्वरपरत्वावश्यंभावेन प्रकृतगीतायामपि तत्परत्वस्यावार्यतयाऽस्मच्छब्दस्यान्तर्यामिदृष्ट्या शिवपरत्वं वज्रलेपायते । तथाहि- कूर्मे ईश्वरगीतायां शिवस्य सकलं महिमानं शिवेनैव सनत्कुमारादिभ्य उपदिष्टं वर्णयित्वा वेदव्यासेनैव कथितम् । 'सनत्कुमारो भगवांस्संवर्ताय महामुनिः । दत्तवानैश्वरं ज्ञानं सोऽपि सत्यव्रताय तु ॥ सत्यव्रतोऽपि योगीशः पुलस्त्याय महर्षये । प्रददौ गौतमायाथ पुलस्त्यश्च प्रजापतिः ॥ अङ्गिरा वेदविदुषे भरद्वाजाय दत्तवान् । जैगीषव्याय कपिलस्तथा पञ्चशिखाय च ॥ पराशरोऽपि सनकात्पिता मे सर्वतत्त्ववित् । लेभे तत्परमं ज्ञानं तस्माद्वाल्मीकिराप्तवान् ॥ मामुवाच पुरा देवस्सतीदेहभवाङ्गजः । वामदेवो महायोगी रुद्रः किल पिनाकधृत् ॥ नारायणोऽपि भगवान् देवकीतनयो हरिः । अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तमम् ॥ यथाऽहं लब्धवान् रुद्राद्वामदेवादनुत्तमम् । विशेषाद्गिरिशे भक्तिस्तस्मादारभ्य मेऽभवत् ॥' इत्येवमेवार्जुनं प्रत्यपि वेदव्यासेन कथितमिति, कूर्मपुराणवचनम्—'ज्ञानं तदैश्वरं दिव्यं यथावद्विदितं त्वया । स्वयमेव हृषीकेशः प्रत्युवाच सनातनम् ॥ गच्छ

गच्छ स्वकं स्थानं न शोकं कर्तुमर्हसि । भजस्व परया भक्त्या शरण्यं शरणं शिव'मिति । तस्माद्भगवद्गीताया ईश्वरगीतानुवादरूपत्वात्तदुक्त एवार्थे पर्यवसानं युक्तम् ।

ननु वासुदेवेन विश्वरूपस्य प्रदर्शितत्वात्तस्य रूपस्य परमेश्वरासाधारणतया अन्यदीयस्यान्येन प्रदर्शयितुमशक्यत्वात्तदीयत्वावश्यम्भावेन वासुदेव एव गीताप्रतिपाद्यः परं ब्रह्मेत्यवसीयत इति चेन्न—पुरा दधीचिना हनुमतापि योगशक्त्या विश्वरूपस्य प्रदर्शितत्वेन पुराणेषु प्रसिद्धत्वात् । तावता वासुदेवस्य परमेश्वरत्वासिद्धेः । नच इदं विश्वरूपं प्रदर्शयितुः स्वीयमेव, परकीयमित्यत्र गमकाभावादिति वाच्यं, 'दर्शयामास पार्थाय परमं रूपमैश्वर'मिति वचनेन विश्वरूपस्येश्वरसम्बन्धित्वावगमात् 'पश्य मे योगमैश्वर'मिति प्रदर्शितस्य रूपस्य शिवयोगप्रभावसिद्धत्वकथनाच्च, 'द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम' इति दिदृक्षितत्वेन पृष्टस्य परमेश्वररूपत्वावगमेन च तदनुरोधेन प्रदर्शितस्य रूपस्येश्वरसम्बन्धित्वावश्यम्भावाच्च ।

ननु तत एवैश्वरं ज्ञानवीर्यादिसहितमित्येव तदर्थ इति चेन्न—ऐश्वरमित्यत्र रूढिपरित्यागेन योगशक्तिमात्रपरिग्रहस्यान्याय्यत्वात् । ईश्वररूपस्य वासुदेवस्वत्वासम्भवेन ते तव योगानुभवविषयमीश्वररूपं द्रष्टुमिच्छामीत्येव तदर्थस्य युक्ततरत्वात् । नच 'तच्च संस्मृत्य संस्मृत्य रूपमित्यद्भुतं हरे' रिति सञ्जयोक्त्या विश्वरूपं तद्वैष्णवमित्येवावगम्यत इति शङ्क्यम् । परस्तात्- 'इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूय' इति सञ्जयोक्त्यैव विश्वरूपस्यास्वकीयत्वकथनेन तस्योपक्रमगतत्वात्प्रबलत्वेन च तदविरोधायात्र हरेर्योगमहिमसिद्धमित्यर्थग्रहणस्यैव युक्तत्वात् ।

ननु आश्वमेधिके- 'द्रष्टुमिच्छामि ते रूपं वैष्णवं तन्निदर्श'येत्युदङ्केन पृष्टः श्रीकृष्णः- 'ततस्तस्मै प्रसन्नात्मा दर्शयामास तद्वपुः । शाश्वतं वैष्णवं धीमान् ददृशे यद्धनञ्जय' इति पार्थदृष्टरूपस्य वैष्णवत्वोक्त्या तदविरोधाय प्रकृतप्रदर्शितं रूपं वैष्णवमेवेति चेन्न— अनुपसञ्जातविरोधित्वेनोपक्रमस्य प्राबल्येनैश्वरपदस्य यथाश्रुतार्थपरत्वे निर्गत उत्पत्तिशिष्टगुणावरुद्धे गुणान्तरस्य निवेशा-

सम्भवेन तस्मिन् रूपे वैष्णवत्वाऽसम्भवादुपसंहारस्थवैष्णवपदस्य व्यापकत्वगुण-योगेन शिवपरत्वनिर्णयस्योचितत्वात् ।

यद्वा त्रिविक्रमोपास्तिमता हनुमता सम्पादितस्य विश्वरूपस्य उपास्य-सम्बन्धित्वेन त्रैविक्रममिति, उपासकसम्बन्धित्वेन हानूमतमिति चोभयथा व्यवहारवत्प्रकृतरूपस्यापि तथोभयविधव्यवहारे न कोपि क्षतिः ।

ननु 'ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्या'नित्यत्र ईश-शब्दवाच्यस्येश्वरस्य विश्वरूपमध्यगतत्वोक्त्या कृत्स्नस्यापि विश्वरूपस्य तदीयत्वं न सम्भवतीति चेन्न— ईशमिति पदस्य ब्रह्माणमित्येतत्प्रति विशेषणत्वात् । अत एव ऋष्युरगसमुच्चायकौ द्वौ चकारौ चरितार्थौ । अन्यथा एकेनैव चकारेण सर्वसमुच्चये लब्धे द्वितीयचकारवैयर्थ्यापत्तेः ।

एवं च चकारो ज्ञापयति । चशब्दघटित एवशब्दस्समुच्चायक इति । तस्मादीशशब्दस्य ब्रह्माणं प्रति विशेषणत्वादीश्वरवाचकत्वाभावादत्र न कोपि विरोधः ।

**किंच** गीतोपदेशकाले प्रदर्शितस्य विश्वरूपस्य शैवत्वं 'मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचि'न्निति श्लोकस्येश्वरवाक्यत्वादपि सिद्ध्यति । अत एव द्रोणपर्वणि शतरुद्रीये वेदव्यासम्प्रत्यर्जुनेन- 'संग्रामे न्यहनं शत्रून् शरौघैर्विमलैरहम् । अग्रतो लक्षयेयं तं पुरुषं पावकप्रभम् ॥ ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते । तस्यां दिशि विशीर्यन्ते शत्रवो मे महामुने ॥ तेन भग्नानरीन्सर्वान्मद्भग्नान्मन्यते जनः । भगवंस्तं ममाचक्ष्व को वै स पुरुषोत्तमः ॥ शूलपाणिर्मया दृष्टस्तेजसा सूर्यसन्निभः । न पद्भ्यां स्पृशते भूमिं न च शूलं विमुञ्चति ॥ शूलाच्छूलसहस्राणि निपेतुस्तस्य तेजसा ।' इति, ततस्सात्यवतेयेन- 'ईशानं वरदं पार्थ ! दृष्टवानसि शङ्करम् । तं गच्छ शरणं देवं वरदं भुवनेश्वर'मित्यादिनोक्तम् । अत एव विश्वरूपं दधता कृष्णेन- 'इहैकस्थं जगत्कृत्स्नं पश्याऽद्य सचराचरम् । मम देहे गुडाकेश ! यच्चाऽन्यद्द्रष्टुमिच्छ'-सीति श्लोकेन मम विश्वरूपात्मकं रूपमन्यद्द्रष्टुमिच्छसिचेत्तत्पश्येत्यनेन यच्चान्यज्जयपराजयादिकं, यच्छङ्कसे—'यद्वा जयेम यदि वा नो जयेयु'रिति

तदपि द्रष्टुमिच्छसि चेत्पश्येति । तेन दुर्योधनादिसकलशत्रुसंहारप्रधानरूपं दर्शयामीति भगवता सूचितम् । तथाभूतमेव रूपं तेन दर्शितं दृष्टवताऽर्जुनेन तदनुवादः कृतः- 'अमी च त्वा धृतराष्ट्रस्य पुत्रा इत्यारभ्य- भासस्तवोग्राः प्रभवन्ति विष्णो'रित्यन्तम्। तदनन्तरमर्जुनेन जगद्रक्षकस्य विष्णोस्तव न भवतीदं सकलजगत्संहारकमतिभयङ्करं रूपं त्वया प्रदर्शितमित्यभिप्रायेण— 'आख्याहि मे को भवानुग्ररूपो नमोस्तु ते देववर प्रसीद । विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्ति'मिति कृष्णेन भगवता सकललोकसंहर्तृ-कालाग्निरुद्ररूपं मया प्रदर्शितमित्युक्तम् । 'कालोऽस्मि सर्वक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः । ऋतेपि त्वा न भविष्यन्ति लोके येऽवस्थिताः प्रत्यनीकेषु योधा' इत्युक्तम् । अतः कालाग्निरुद्ररूपस्य शिवैकविषयत्वादिदं विश्वरूपं परमेश्वरस्यैवेति युक्तम् ।

अपि च मोक्षधर्मे—'निहतांस्तेन पूर्वं त्वं हतवानसि वै रिपून् । अप्र-मेयप्रभावं तं देवदेवमुमापतिम् ॥ भजस्व नित्यं प्रयतो विश्वेशं हरमव्यय'मिति श्रीकृष्णस्यार्जुनं प्रति वचनम् । अनेन शब्दतोऽर्थतश्चैकरूपं 'मयैवैते निहता' इति वचनं शिववचनमेवेति स्वरूपमास्थितेन श्रीकृष्णेनैव स्फुटीकृतम् । तत्र च शिववचनपूर्वमेव निहता इत्यस्यायमभिप्रायः । यथा नारायणीसन्निधौ पञ्चेन्द्रान्प्रति शिवेनोक्तं—'एषा भार्या भविता वो न संशयो योनिं सर्वे मानुषीं संवि-शध्वम् । तत्र यूयं कर्म कृत्वाऽविषह्यं बहूनन्यान्निधनं प्रापयित्वा ॥ शस्त्रैर्दिव्यै-र्मानुषान् योधयित्वा शूरान्सर्वानाहवे तान् विजित्य । आगन्तारः पुनरेवेन्द्रलोकं स्वकर्मणा पूज्यतमं महार्ह'मिति, 'तथैवैते निहता' इति, 'ऋषीणां पुनराद्यानां वाचमर्थोऽनुवर्तत' इति ऋषीणां माहात्म्यमवगच्छन्तो वदन्ति । किमु वक्तव्यं-- विश्वाधिको रुद्रो महर्षिरिति, प्रसिद्धस्य परमेश्वरस्य वचनं तथैवार्थं फलतीति । एवमभिप्रायकल्पन एव पूर्वमेवेत्यस्य, सर्वपूर्वभावविषयतया सामञ्जस्यं भवति ।

ननु 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वर'मित्यर्जुनाय दिव्य-चक्षुःप्रदानेन वासुदेवस्यैव परमेश्वरत्वं सिद्ध्यतीति चेन्न—वेदव्यासेन सञ्जयाय दिव्यचक्षुःप्रदानेन तस्य योगसिद्धिमूलत्वावगमान्न तावता तत्प्रदातुः परमेश्वर-त्वासिद्धेः ।

ननु यद्येवं 'एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी' इत्यादिसन्दर्भे भीतस्यार्जुनस्य यानि कृष्णं प्रति वचनानि प्राचीनस्वापराधसहन-प्रार्थनासहितानि कृष्णस्यैव तद्रूपान्तरं स्वेन दृष्टमित्याशयं गमयन्तीति चेत्—एवंभूतशिवयोगनिष्ठत्वरूपमाहात्म्यातिशयदर्शनेन स्तुत्यादिकमिति तदुपपन्नमिति गृहाण । अत एव तदनन्तरमपि- 'मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शित-मात्मयोगा'दिति भगवता तस्य विश्वरूपप्रदर्शनस्य योगप्रभावप्रयुक्तत्वमेव प्रति-पादितम् ।

ननु गीतासु—'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वत'मिति यद्भगवतोपदिष्टं तत्, 'तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी'ति भगवता स्वेनापि क्रियमाणमीश्वरप्रपदनं तच्च तद्विषयमेवेति कथमवगम्यत इति चेत्—तमेव-चाद्यमित्यत्र कं पुरुषं प्रपद्यस इत्याकांक्षायाम्—'उत्तमः पुरुषस्त्वन्यः परमात्मे-त्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर' इति प्रतिपादनीये पुरुषे शिवासाधारणस्येश्वरनाम्नः प्रयोगात्तस्यैवेश्वरस्सर्वभूतानामित्यत्रापि श्रवणात् ।

यत्तु- 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति श्लोकानन्तरं--'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति भगवता क्षराक्षरातीतत्वेन स्वस्यापि ताभ्यामुत्तमत्वमुक्तमिति, तदसत्—अत्र श्रु· 'क्षरं प्रधानममृताक्षरगँ् हरः क्षरात्मना विशते देव एक' इति यथोपनिषत्पठितमन्त्रार्थस्यैवाऽनुवादात्तेनास्मीत्यस्य पदस्यान्तर्यामिदृष्ट्या प्रयुक्तत्वावगमेनाऽविरोधात् पुरुषोत्तमनामधेयात् प्रथमश्रुतस्येश्वरनाम्नो बलवत्तया प्राधान्यानुरोधेन नेयत्वात् । यच्च- 'स्थितोऽस्मि गतसन्देहः', 'करिष्ये वचनं त'वेति प्रतिज्ञातवानर्जुनो यावज्जीवं शिवपूजानिरत एवावर्तत, तेनापि गीतासु श्रीकृष्णेन शिव एव सकलपदभाग्लिङ्गमहिमशालित्वेन मुमुक्षुभिश्शरणीकरणी-यत्वेन चोपदिष्ट इत्यवसीयते । एतेन 'तमेव शरणं ग'च्छेत्यनन्तरं 'सर्वगुह्यतमं भूयश्शृणु मे परमं वच' इत्युपक्रम्य, 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज'

इति यदुपदिष्टं तद्विषयं, तदनन्तरं 'करीष्ये वचनं त'वेति तत्प्रतिवचनमित्यपि शङ्का निरस्ता।

तथासति शिवपूजामपि परित्यज्य विष्णुपूजाया एवार्जुनेन कर्तव्यत्वापत्तेः। यावज्जीवं तेन शिवपूजैव कृता, न विष्णुपूजा।

यत्तु शिवस्य रात्रिपूजार्थं गुप्तस्सर्वोऽप्युपहारः कृष्णेन समर्पित इति वचनं तदपि शिवाराधनबुद्धयेत्येतदभिप्रायम्। अत एव कृष्णार्जुनयोः कैलासगमने सर्वोऽप्युपहारश्शिवसमीपे दृष्टोऽर्जुनेऽनेनोक्तम्—'तं चोपहारं सततं नैशं नैत्यकमात्मनः। ददर्श त्र्यम्बकाभ्याशे वासुदेवनिवेदित'मिति। यद्यपि 'करिष्ये वचनं त'वेति वचनं युद्धमात्रविषयमिवाभाति, तथापि 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥ मामेकं शरणं व्रज, अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसा'मित्यादिभगवद्वचनं श्रुतवताऽप्यर्जुनेन देवतान्तरं परित्यज्य शिवपूजनमेव कृतमित्यत्र नास्ति विवादः। अतो गीतासु स्वेन नित्यं पूज्यमानस्य शिवस्यैव महिमोपदिष्ट इति तस्य निश्चयोऽस्तीति विज्ञायते। तस्माद्गीताश्रोत्रर्जुननिश्चयानुरोधेन भगवद्गीता शिवमेव सर्वेश्वरं सर्वसेव्यं च निर्धारयति।

अनुगीतापि इममेवार्थं निर्धारयतीति तदनुरोधेनापि भगवद्गीता शिवपरत्वप्रतिपादनपरैवेति श्रीमदप्पयदीक्षितेन्द्रैः भारतसारसंग्रहे निरूपितं तदेवेहानुसन्धेयम्। किंच गीताया अस्याः महाभारतान्तर्गतत्वेन तदनुरोधेनापि शिवपारम्यप्रतिपादनपरैवेति सिद्ध्यति। तथाहि- सौप्तिके अश्वत्थामानं प्रति शिववचनं 'सत्यशौचार्जवत्यागैस्तपसा नियमेन च। अहं यद्भवताऽऽराध्यः कृष्णेनाक्लिष्टकर्मणा॥ तस्मात्प्रियतमः कृष्णादन्यो मम न विद्यते।' इति। तथा उपमन्यूपदेशेन श्रीकृष्णस्य पाशुपतव्रतानुष्ठानं, कैलासयात्रायामन्यत्र तत्र तत्र पूजास्तुतितपोभिः शिवप्रीणनमेव कृतमिति प्रपञ्चेन वर्णितम्। द्रोणपर्वणि--आदिनारायणस्य मैनाके तपश्चर्योक्ता- 'ऊर्ध्वबाहुर्महातेजा ज्वलनादित्यसन्निभः। षष्टिवर्षसहस्राणि तपस्येव शतानि तु॥ व्यशोषयत्तदात्मानं वायुभक्षोऽम्बुजेक्षणः। अथापरं तपस्तप्त्वा द्विस्ततोऽन्यत्पुनर्महत्॥ द्यावापृथिव्योर्विवरं तेजसा

समपूरयत् । स तेन तत्र तपसा ब्रह्मभूतो यथाऽभवत् ॥' इति तपश्चर्याकाले शिवं ध्यायतो नारायणस्य शिवाहम्भावभावनाभावितशिवभाव एव ब्रह्मभूत इत्यनेनोक्तेः । ततोऽन्यस्य तेन प्राप्यस्य ब्रह्मभावस्याभावात् । अत एव तपसा प्रसन्ने शिवे प्रत्यक्षे सति, नारायणेन बहुधा परब्रह्मधर्मैः स्तवः कृतः । यथा—'स जानुभ्यां महीं गत्वा कृत्वा शिरसि चाञ्जलिम् । पद्माक्षस्तं विरूपाक्षमभितुष्टाव भक्तिमान् ॥ त्वद्भूता वै भूतकृतो वरेण्य गोप्तारो ये भुवनस्य गोपाः । प्रविश्येमां धरणीं ये ह्यरक्षन् पुरा पुराणे तव देव सृष्टिः ॥ भूतं भव्यं भावि यच्चाप्यदृष्टं त्वत्सम्भूतास्सप्त इमे हि लोकाः । भक्तं च मां भजमानं भजस्व प्रीत्या मां वै लोकपितर्महेश ! ॥' एवंविधस्तुत्या प्रीतेन शिवेन तस्मै बहवो वरा दत्ता इति तत्रैवोक्तम् ।

एवं श्रीकृष्णस्य शिवपूजानिष्ठत्वं शिवप्रसादलब्धसकलप्रभाववत्त्वं चानेकत्र वर्णितम् । तथा तच्छेषे हरिवंशे च श्रीकृष्णेन शिव आराधित इति बहुवारमाख्यातम् । एवं श्रीकृष्णेन शिवप्रसादलब्धस्य पुत्रस्य साम्ब इति नामकरणं विधायानुकलं परमेश्वरनाम संस्मर्यत इत्यपि समुद्घोषितम् । एवं च महान् भारतश्शिवस्यैव सर्वेश्वरत्वसर्वोपास्यत्वादिकं धर्मजातं, श्रीकृष्णस्य तन्मूलभूतपरवासुदेवेन सह शिवभक्तत्वं च प्रतिपादयतीति विशदमेव । अत एव भगवता वेदव्यासेन भगवन्तं विधातारं प्रति महाभारतविषयानुकीर्तने ब्रह्मन् वेदविधानज्ञेत्युपक्रम्य प्राधान्येन विषयेषु कीर्त्यमानेषु ज्ञानं पाशुपतं तथेत्यप्युक्तिस्सङ्गच्छते ।

एवं सर्ववेदान्तानुरोधेनाप्यस्या गीतायाश्शिवपारम्यप्रतिपादनपरत्वमवर्ज्यं--सर्वाह्युपनिषदश्शिवस्यैव सर्वेश्वरत्वसर्वसेव्यत्वादिकं, नारायणस्य तदुपासकत्वं चाम्रेडयन्ति । तथा ह्यनितरलभ्योपक्रमपराक्रमा सकलानामपि मुखस्थानीया ईशावास्योपनिषत्—'ईशा वास्यमिदꣳ सर्वं यत्किञ्चिज्जगत्यां जग'दिति निगदन्ती सकलमपि जगदीश्वरान्तर्यामिकमेवेति प्रदिपादयति ।

सकलोपनिषदर्थसारभूतेति कीर्तिमती माण्डूक्योपनिषत्—'शिवमद्वैतं चतुर्थ'मिति, शिवमेव ब्रह्मविष्ण्वादिकारणतया तदतीतं तुरीयतत्त्वमिति निर्धारयति ।

तथा छान्दोग्योपनिषदपि प्रथम एव प्रपाठके 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रनखात्सर्व एव सुवर्ण' इति परमेश्वरं द्रुतकनकसवर्णं वर्णयन्ती तं रूपं कालायसवर्णमभिमन्वानां मतानि पारे समुद्रमापातयति ।

किंच तत्रैव तृतीयप्रपाठके सप्तदशखण्डे 'तद्धैतद्घोर आङ्गीरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच, अपिपास एव स बभूव' इति वाक्येन श्रीकृष्णस्याङ्गीरसशिष्यत्वं प्रकटयन्ती तस्य गीताद्युपदेशगुरुत्वमेव, न तु तत्प्रतिपाद्यविश्वकारणत्वमिति निर्धारयति ।

एवं बृहदारण्यकोपनिषदपि अन्तर्यामिब्राह्मणे- 'यस्य पृथिवी शरीरं यस्यादित्यश्शरीर'मित्यादिना अष्टमूर्तिमेव सर्वान्तर्यामितया परमात्मानं प्रत्यक्षतनुमारावयन्ती तस्य दर्शनमनिच्छतां चक्षुष्षु धूलिं प्रक्षिपति ।

अथ सर्वासामुपनिषदां मौलिभूता अथर्वशिखोपनिषत्- 'ध्यायीतेशानं प्रध्यायितव्यं ब्रह्मविष्णुरुद्रेन्द्राः सम्प्रसूयन्ते, सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं, कारणानां ध्याता कारणं तु ध्येयस्सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्शम्भुराकाशमध्ये शिवएको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्य'ज्येति वदन्ती शिवमेव ब्रह्मविष्ण्वादिसर्वकारणं सर्वेश्वरं सकलेतरदेवतापरित्यागपूर्वकमुपासनीयं च निर्धारयति ।

एवं ब्रह्मवादिजनसञ्जनिततत्त्वसंशयविच्छेदनार्थप्रवृत्ता मन्त्रोपनिषदपि 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं, शिव एव केवलः, तदक्षरं, तत्सवितुर्वरेण्यं, प्रज्ञा च तस्मात्प्रसृता पुराणी, तमीश्वराणां परमं महेश्वरं, तं देवतानां परमं च दैवतं, एको हि रुद्रो न द्वितीयाय तस्थ विश्वाधिको रुद्रो महर्षि'रित्यादिना शिव एव जगत्कारणभूतं परब्रह्मेति निर्धारयति ।

तथा नारायणोपनिषदपि- 'ऋतगुँ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं ऊर्ध्वरेतं विरूपाक्ष'मिति विरूपाक्षमेव साक्षात्परं ब्रह्मेति निवेदयति ।

अथ द्विजत्वसंरक्षणबद्धकङ्कणा सकलमन्त्रजननी सावित्र्यपि- वामाङ्गसङ्गतदुर्गं भर्गमेव सकलचेतनधीप्रेरकतया परमात्मानमुपास्यं च राद्धान्तयति। अत्रोदाहृतानामन्येषां चार्थनिर्णयो ब्रह्मपथे, शिवचिन्तामणिप्रभायां च विस्तर इति नेह ।

अथ संहितास्वेव वैदिकीषु- 'विष्णुरित्था परमस्य विद्वान् विष्णो देवत्वं परममस्य वित्से', 'रुद्र यत्ते जनिमचारु चित्रं परं यद्विष्णोरुपमं निधायि तेन पासि गुह्यं नामगाना'मित्यादिमन्त्राः आदिविष्णोश्शिवभक्तत्वं शिवप्रसाद-लब्धलक्ष्म्यादिसहितवैकुण्ठपदभोक्तृत्वं च बोधयन्ति। तस्मान्महाभारतानुरोधेन सकलवेदवेदान्तानुरोधेन च भगवद्गीता श्रीशिवपारम्यप्रतिपादनपरैवेति विशदम्।

ननु गीतासु- श्रुतस्यास्मच्छब्दस्य प्रयोक्तृपरत्वे शक्तिरन्तर्यामिपरत्वे लक्षणा, लक्षणाश्रयणमन्तरा गीतायाश्शिवपरत्वं दुर्लभं, अतश्शक्त्या नारायण-परत्वमेवोचितमितिचेत्, उच्यते—परैरकामैरप्यत्रत्याऽस्मच्छब्दस्यान्तर्यामि-परत्वमेवावशतोऽङ्गीकरणीयमेव। अन्यथा महाभारत एव भगवतश्श्रीकृष्णस्य महा-विष्णोः केशांशत्वेन वर्णनात् परैर्महाविष्णोरेव सर्वान्तर्यामित्वाभ्युपगमेन 'सर्वस्य चाऽहं हृदि सन्निविष्ट' इत्यादिना तत्केशांशस्य सर्वान्तर्यामित्वकथनं नोपपद्येत। किंच परिदृश्यमानशरीरविशिष्टस्य सर्वान्तर्यामित्ववर्णनमपि विरुद्ध्येत।

अपि च परमात्मविभूतिवर्णनावसरे- 'वृष्णीनां वासुदेवोऽ'स्मीति स्वस्यैव स्वविभूतित्वकथनं नानुगच्छेत्। अन्यच्च मन्मना भवेत्यादिना मामे-वैष्यसीत्यत्र परिदृश्यमानशरीरे परत्वाङ्गीकारे 'परां गतिमन्तरेण पैशाचमर्जुनेन कृष्णतनोरप्रवेश्यतया तदुक्तिर्विरुद्ध्येत। इत्यादिविरोधशतपरिहारायाऽस्मच्छब्द-स्यान्तर्यामिपरत्वं भवतोऽप्यवार्यमेव। यद्यन्तर्यामिपरत्वमङ्गीकृत्यापि नारायणस्यै-वान्तर्यामित्वमुच्यत इति चेत्तत्प्रतिज्ञामात्रलभ्यं यथाविरोधस्तथाऽस्तु, अस्ति च नारायणपरत्वे भूयान्विरोधः, तथाहि- ईश्वरादिशब्दानां परित्यज्य योगरूढिं लक्षणया नारायणपरत्वाङ्गीकारः प्रथमः, ईशावास्यादिसकलनिगमान्तसिद्धपरमे-श्वरपरत्वानादरो द्वितीयः, कूर्मपुराणस्याऽप्रामाण्याभ्युपगमस्तृतीयः, प्रकृतमहा-भारतसिद्धपरमेश्वरपरत्वाऽनादरश्चतुर्थः, गीताश्रोत्रर्जुननिश्चयाऽपरिग्रहः पञ्चम इत्यादिदोषदुष्टत्वान्न कथमपि विष्णुपारम्यप्रतिपादनपरा भवितुमर्हति गीता।

इति वैष्णवपथप्रतिषेधो नाम

द्वितीयो भागः।

———

## अथ षड्विधतात्पर्यलिङ्गसमन्वयः ।

### उपक्रमोपसंहारौ ।

'न त्वेवाऽहं जातुनासं न त्वं नेमे जनाधिपाः । न चैव न भविष्यामस्सर्वे वयमतः पर'मित्युपक्रमः ।

'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ तमेव शरणं गच्छ सर्वभावेन भारत ! तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वत'मित्युपसंहारः ।

### अभ्यासः ।

'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु । बुद्ध्या युक्तो यया पार्थ ! कर्मबन्धं प्रहास्यसि ॥ एषा ब्राह्मी स्थितिः पार्थ! नैनां प्राप्य विमुह्यति । स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ पुरुषस्य परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया । यस्यान्तस्स्थानि भूतानि येन सर्वमिदं ततम् ॥ यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम् ॥ मत्कर्मकृन्मत्परमो मद्भक्तस्सङ्गवर्जितः । निर्वैरस्सर्वभूतेषु यस्स मामेति पाण्डव! ॥ यस्यान्तस्स्थानि भूतानि येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ये च सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । मां च योऽव्यभिचारेण भक्तियोगेन सेवते ॥ सगुणान् सकलानेतान् ब्रह्मभूयाय कल्पते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥ यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । नाहं वेदैर्न तपसा न दानेन न चेज्यया ॥ भक्त्या त्वनन्यया पार्थ ! शक्य एवं विधोऽर्जुन । प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ॥ मनस्संयम्य मच्चित्तो युक्त आसीत मत्परः । युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः ॥ शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति । विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ॥ ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः । अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ॥ विमुच्य

निर्ममश्शान्तो ब्रह्मभूयाय कल्पते । ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति ॥ समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम् । भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ॥ ततोऽहं तत्त्वतो ज्ञात्वा विशते तदनन्तर'मिति ।

—: अपूर्वता :—

'ज्ञानं विज्ञानसहितमिदं वक्ष्याम्यशेषतः । यद्ज्ञात्वा नेहभूयोऽन्यद्ज्ञातव्यमवशिष्यते ॥' इति ।

—: अर्थवादः :—

'इमं विवस्वते योगं प्रोक्तवानहमव्ययम् । विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥' इति ।

—: उपपत्तिः :—

'यथैधांसि समिद्धोग्निर्भस्मसात्कुरुतेऽर्जुन ! ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ॥' इति ।

—: फलम् :—

'ततः परं तत्परिमार्गितव्यं यस्मिन्गत्वा न निवर्तन्ति भूयः । तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ निर्मानमोहा जितसङ्गदोषाः अध्यात्मनित्या विनिवृत्तकामाः । द्वन्द्वैर्विमुक्तास्सुखदुःखसंज्ञैः गच्छन्त्यमूढाः पदमव्ययं तत् ॥' इति ।

अत्र षड्विधैरपि तात्पर्यलिङ्गैरनाद्यपचारमूलपरमेश्वरसङ्कल्पसङ्कलितमायापाशतिरोहितसत्यसङ्कल्पत्वादिनिजगुणतया मृत्युमयसंसारमहाजलधिनिमग्नो जीवो मुमुक्षुस्सन् ज्ञानयोगेनांकुरितया कर्मयोगेन पल्लवितया ध्यानयोगेन फलितया निजचरणसरोजयुगसमर्पितया परभक्तियोगकल्पलतया समावर्जितया सुप्रसन्नस्य परमेश्वरस्य प्रसादेन संसारजलधिमुत्तीर्य पुनराविर्भूतसत्यसङ्कल्पत्वादिनिजमहिमा सर्वोत्तमं शाश्वतं परमानन्दमयं शिवपदमवाप्नोतीतीह तात्पर्यमवगम्यते ।

---

## अथ गीतातात्पर्यसंग्रहः ।

एवं चात्रानन्तैर्वेदान्तस्सन्तानैर्यदाकथितमथ वेदाचार्येण शारीरकब्रह्म-मीमांसायां- मीमांसित्वा निर्धारितं च तदेवामूलान्तं गीतं गीतास्वपि भगवता। तस्मादुपनित्सूत्रगीतारूपस्य प्रस्थानत्रयस्याप्यैककण्ठ्यमेव यद्यपि सन्दृश्यते, तथापि यस्तु श्रुतिसूत्रयोर्विहितः कर्मज्ञानसमुच्चयस्तत्र- 'आरुरुक्षोर्मुनेर्योगं कर्म-कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यत' इति, 'यस्त्वात्मरति-रेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यत' इति च योगारूढं परशिवानन्दजलधिनिमग्नं च पुरुषविशेषमुद्दिश्य कर्मणोऽना-वश्यकता प्रतिपादिता ।

परे तु विदुषो मुमुक्षोश्च सर्वकर्मसन्न्यास एवाधिकार इति प्रतिजानानाः- न तावन्नित्यानां कर्मणामभावादेव भावरूपस्य प्रत्यवायस्योत्पत्तिः कल्पयितुं शक्या, कथमसतस्सज्जायेतेत्यसतस्सज्जन्मासम्भवश्रुतेः । यदि विहिताऽकरणा-दसम्भाव्यमपि प्रत्यवायं ब्रूयाद्वेदस्तदाऽनर्थकरो वेदोऽप्रमाणमित्युक्तं स्यात्, विहितकरणाकरणयोर्दुःखमात्रफलत्वात्तथा च कारकं शास्त्रं न ज्ञापकमिति अनुपपन्नार्थं कल्पितं स्यान्न चैतदिष्टमिति ब्रुवाणा विहितानामकरणे प्रत्यवाय-मभ्युपगच्छतां पक्ष एव- विहितकरणाऽकरणयोरुभयथापि दुःखमात्रफल-त्वेन, अनर्थकरत्वाद्वेदस्याप्रामाण्यमापद्येतेति- हेतुवादेन प्राचां वैदिकानामनादिं नित्यकर्माकरणे प्रत्यवायसम्भवरूपां प्रसिद्धिमुन्मूलयन्तोऽभयप्रदानेन कर्मण्यलसा-ननुगृह्णन्तीति विदितमेव । भगवांस्तु 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । न च सन्न्यसनादेव सिद्धिं समधिगच्छति ॥ नियतं कुरु कर्म त्वं कर्म ज्यायोऽह्यकर्मणः । मा ते सङ्गोऽस्त्वकर्मणीति च बहुधा कर्मसन्न्यासं स्पष्टमेव प्रतिषिद्धवान् ।

अत्र यद्यपि परे- न विद्वद्विषयाणि कर्मविधिवचनानीति प्रतिवदन्ति, तथापि भगवान् सर्वज्ञः निजवचनस्य प्रत्युक्तिरागमिष्यतीति परिजानान एव- 'सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत । कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोक-

संग्रह'मिति विदुषापि कर्म कर्तव्यमेवेति स्पष्टमुवाच । विहिताऽकरणस्य मिथ्याचाररूपत्वेनाभावरूपत्वाभावात्परोक्तपक्षे हेतुरसिद्ध एव । अत एव परिश्रमाऽभावाद्याप्तिरुपद्यते, राजाज्ञाचरणाभावाद्दण्डोऽपि नासऽम्भाव्यः; ततश्च--'वर्णाश्रमसदाचाराश्शिवेन कथिताः पुरा । ये तानुल्लङ्घ्य वर्तन्ते शिवस्याज्ञापलापिनः ॥ राजाज्ञाभङ्गकृन्नॄणां यथा दण्डो भवेद्ध्रुवम् । शिवाज्ञा भङ्गकृन्नॄणां दण्डो हि नरकस्त'थेति शङ्करसंहितोक्तिस्सङ्गच्छते । तस्माद्वेदविहिताऽकरणात्प्रत्यवायो नोत्पद्यत इति परकीयो वादः श्रुतिस्मृतिपुराणेतिहासविरुद्धः, लोकविप्रतिषिद्धश्चेति सिद्धम् ।

किंच मुमुक्षोश्च सर्वकर्मसन्न्यास एवाधिकार इत्यनेन सन्न्यस्य श्रवणं कुर्यादिति वाक्यविश्वासेन गृहस्थस्य वेदान्तश्रवणेपि नाधिकार इति परेषामाशयो व्यज्यते । अयमपि श्रुतिविरुद्ध एव, तथाहि 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठ'मिति हि गुरूपसत्तिविधिश्श्रूयते ।

अत्र यदि गुरुरनग्निकस्तर्हि तस्य श्रोत्रियत्वमसङ्गतम् । अथ यदि साग्निकस्तर्हि पररीत्या तस्य असन्न्यासित्वेनाश्रुतवेदान्तत्वाद्गुरुत्वमेवायुक्तम् । अथ चेत् यथाकथमपि श्रोत्रियपदं योगेन सन्न्यासिन्यपि समनुनीयेत, तर्हि तस्याऽनग्निकतया समित्पाणिरिति श्रुत्या शिष्यसमर्पितानां समिधां शीतापनयनार्थतयैव सार्थक्यमनुसन्धेयम् । 'यतिश्च ब्रह्मचारी च पक्वान्नप्राशिनावुभा'विति यतेरपि पाकक्रियाया अपि निषिद्धत्वात् । तस्मात्परेषामयं सन्न्यासाभिनिवेशोपि बौद्धसमयोद्दिधीर्षामूल एवेति केचिदित्यास्तामधिकेन ।

अथ य ईश्वरविद्वेषिणस्तानप्युद्दिश्य 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायाया ॥ तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वत'मिति, अनादिमत्परं ब्र'ह्मेति, 'तमेव चाद्यं पुरुषं प्रपद्य' इति च- ईश्वरमेव परमात्मानं शरणीकरणीयम् । स्वस्मादपि परतरं स्वेनापि प्रपद्यमानमभ्यासेन

निर्धारयामास । तेभ्योऽपि ये वर्तन्ते बहुदेवास्तानपि दृष्ट्वा 'एकभक्ति-र्विशिष्यत' इत्युपदिदेश । एवमपारकरुणाकूपारः कुपथगर्तवर्तमानार्तजन-त्राणपरायणो भगवन्नारायणो यद्यपि यथाशक्ति प्रोक्तवान्, तथापि विप्रति-पन्नान् हतविधिविपन्नानुद्दिश्य किमितः करोत्वित्यलं पल्लवितेनेति शिवम् ।

'आराध्यनागलिङ्गेन त्रैलिङ्गेनेष्टलिङ्गिना ।
प्रकटश्चकारि भगवद्गीतातात्पर्यनिर्णयः ॥

शिवं भूयात् ।

मङ्गलं महत् ।

---



श्री शिवाय गुरवे नमः ।

श्रीमज्जगद्गुरु नीलकण्ठभगवत्पादाराध्यविरचिततत्त्वामृताकरभाष्यरत्नेन श्रीशिवयोगिमहोपाध्याय नागलिङ्गशिवाराध्यकृत लघुचन्द्रिकाव्याख्यासमेतेन समलंकृता शिवपारमाभिधानलक्षणा श्रीकृष्णगीताऽपरनाम्नी,

# श्रीभगवद्गीता प्रारभ्यते ।

धृतराष्ट्र उवाच—

मू॥ धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय! ॥१॥

श्रीमज्जगद्गुरु नीलकण्ठाराध्यविरचित-
"तत्त्वामृतरत्नाकर"भाष्यप्रारम्भः ।

श्लो॥ ॐ नमोहम्पदार्थाय लोकानां स्थितिहेतवे ।
सच्चिदानन्दरूपाय शिवाय परमात्मने ॥१॥
नमश्श्वेताभिधानाय नानागमविधायिने ।
कैवल्यकल्पतरवे कल्याणगुरवे नमः ॥२॥

---

श्रीनागलिङ्गशिवाराध्यकृतलघुचन्द्रिकाख्या
भाष्यव्याख्या प्रारभ्यते ।

श्लो ॥ मङ्गलं दिशतु विघ्ननायको मङ्गलं दिशतु शक्तिसायकः ।
मङ्गलं दिशतु मे सदाशिवा मङ्गलं दिशतु मे सदाशिवः ॥
यो विश्वप्रभवो यमेति निखिलं येनेदमारक्षितं
यस्मै च श्रुतयो नमो विदधते यस्मात्परं नेक्ष्यते ।
मूर्ध्ना यस्य परिभ्रमत्यनुकलं ब्रह्माण्डभाण्डावलि-
र्यस्मिन्सर्वमपि प्रतिष्ठितमिदं तस्मै नमश्शम्भवे ॥

वासुदेवमुखोद्गीता गीता श्रुत्यन्तसम्मता ।
ईश्वरोत्कर्षसहिता सर्वलोकमनोहिता ॥३॥

---

दिशावलीविश्रुतनागलिङ्गसमाख्यमाराध्य कुलाब्धिसोमम् ।
मतान्तराम्भोनिधिकुम्भयोनिं पितामहं लोकगुरुं प्रपद्ये ॥
गर्भे निवेश्य कलयन्प्रतिसञ्चरेषु संश्लिष्य सर्गनिचये सुखयन्सुषुप्तौ ।
पुत्रं पितेव परिरक्षति यस्य चाहं तं वै मुमुक्षुरभवं शरणं गतोस्मि ॥
श्रीकान्तद्रुहिणोपमन्युधिषणस्कन्धेन्द्रवातापिजि-
न्मार्कण्डेयदधीचिगौतममुखान्सेवे महेशप्रियान् ।
यैस्तीर्थैरिव पालितं त्रिभुवनं रत्नैरिवालंकृतं
सद्वेदैरिव रक्षितं सुखकरैश्चान्द्रैरिवाप्यायितम् ॥
भारद्वाजकुलाब्धीन्दुरुद्भटाराध्यवंशजः ।
ज्वालाम्बिकाघोरनाथदाम्पत्यफलितोदयः ॥
श्रीमद्वीरेश्वराराध्यकल्याणगुरुसेवकः ।
श्रीश्रीनिवासमहिराट्कृपाधिगतसत्कलः ॥
त्रैलिङ्गो नागलिङ्गोऽहं श्रीकण्ठकथिताध्वगः ।
भगवत्पादभाष्यार्थं सम्यगालोच्य यत्नतः ॥
गीताभाष्यस्य विवृतिं करोमि लघुचन्द्रिकाम् ।
निगमान्तैकविदितं परनिश्श्रेयसप्रदम् ।
पशुपाशुपतिज्ञानं गीताशास्त्रे समीरितम् ।
सच्चित्सुखघनं पूर्णं परब्रह्म शिवाभिधम् ॥
यत्प्राप्तये समारब्धा वेदाः काण्डत्रयात्मकाः ।
कर्मोपास्तिस्तथा ज्ञानमिति काण्डत्रयं क्रमात् ॥
तद्रूपाष्टादशाध्यायी गीता काण्डत्रयात्मिका ।
एकमेकेन षट्केन काण्डमत्रोपलक्षयेत् ॥
कर्मनिष्ठाज्ञाननिष्ठे कथिते प्रथमान्त्ययोः ।
महेशभक्तिनिष्ठा तु मध्यमे परिकीर्तिता ॥

बोधायनादिमुन्युक्तश्रौतशैवावलम्बिना ।
चिदचिच्छक्तिसंयुक्तशिवाऽद्वैतप्रबोधिना ॥४॥

---

उभयानुगता सैव परमुक्तिप्रदायिनी ।
विधेया च शिवे भक्तिस्तां विना सा न सिद्ध्यति ॥

अत्र च 'दृष्ट्वा तु पाण्डवानीक'मित्यारभ्य 'यावन्न योक्ष्य' इति गोविन्द मुक्त्वा तूष्णीं भमूवे'त्येतदन्तः प्राणिनां शोकमोहादिसंसारदोषप्रदर्शनार्थत्वेन व्याख्येयो ग्रन्थः । तथा चार्जुनेन राज्यगुरुपुत्रमित्रस्वजनसम्बन्धिबान्धवेष्वह-मेतेषां ममैत इत्येवं प्रत्ययनिमित्तस्नेहविच्छेदादिनिमित्तावात्मनश्शोकमोहौ दर्शितौ- 'कथं भीष्ममहं सङ्ख्य' इत्यादिना ।

शोकमोहाभ्याममिभूतविवेकविज्ञानस्स्वधर्मे युद्धे प्रवृत्तोऽपि तस्माद्युद्धा-दुपरराम । परधर्मं च भिक्षाजीवनादिकं कर्तुं प्रववृते । एवं च प्राणिनां शोक-मोहाविष्टचेतसां स्वभावत एव स्वस्वधर्मत्यागः, प्रतिषिद्धसेवा च भवेत् । स्वधर्मप्रवृत्तानामपि प्रवृत्तिः फलाभिसन्धिपूर्विकैव सम्भवति । ततश्च धर्माधर्मोप-चयमूल इष्टानिष्टजन्मसुखदुःखप्रदस्संसारोऽशान्तस्सम्पद्यत इत्येतत्संसारतरुदोहद-भूतौ शोकमोहौ । तयोश्च निष्कामकर्मसमुच्चितज्ञानान्यतो निवृत्तिरिति तदुप-दिदिक्षुस्सर्वलोकानुजिघृक्षयार्जुनं निमित्तीकृत्याह भगवान्वासुदेवः—'अशोच्या-नन्वशोचस्त्व'मित्यादिना ।

अत्र केचिदाहुः— शोकमोहयोस्सर्वकर्मसन्न्यासपूर्वकादात्मज्ञाना-न्नान्यतो निवृत्तिरिति, तदसत्— सर्वकर्मसन्न्यासपूर्वकादात्मज्ञानात्कैवल्यं न प्राप्यत एव । किं तर्हि· अग्निहोत्रादिश्रौतस्मार्तकर्मसहितात्पारमेश्वरज्ञानादेव कैवल्यप्राप्तिरिति सुनिश्चितोऽर्थः । अत एव 'अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि । ततस्स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥, 'कर्मण्येवाधि-कारस्ते मा फलेषु कदाचन', 'कुरु कर्मैव तस्मात्त्व' मित्यादिहिंसादियुक्तत्वा-द्वैदिकं कर्माऽधर्मायेतीयमाशङ्का न कार्या । कथं क्षात्रं कर्म युद्धलक्षणं गुरु-भ्रातृपुत्रादिहिंसालक्षणमत्यन्तक्रूरमपि स्वधर्म इति कृत्वा नाधर्माय । तदकरणे च 'ततस्स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्य'सीति ब्रुवता यावज्जीवादिश्रुति-

नीलकण्ठशिवाराध्यसमाख्येन मयाऽधुना ।
तत्त्वामृताकराख्येन भाष्यरत्नेन भूष्यते ॥५॥

---

चोदितानां पश्वादिहिंसालक्षणानां च कर्मणां प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्तं भवति ।

परे तु कर्मज्ञानयोर्विभिन्नाधिकारिकत्वं प्रतिजानानास्तत्साधकतया एवं ब्रुवते- यथा भगवता विभक्ते बुद्धियोगे निर्दिष्टे 'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां श्रु' णिवति । तयोश्च साङ्ख्यबुद्ध्याश्रयं ज्ञानयोगेन निष्ठां साङ्ख्यानां विभक्तां वक्ष्यति- 'कर्मयोगेन योगिना'मिति च । एवं च ज्ञानकर्मणोरकर्तृत्वानेककर्तृत्वबुद्ध्याश्रययोर्युगपदेकपुरुषानुष्ठेयत्वासम्भवं पश्यता द्वे बुद्धिकर्मणी विभक्ते निर्दिष्ट इति ।

अत्र बुद्धिकर्मणी द्वे निर्दिष्ट इति यत्तत्सत्यमेव । अथ तयोर्विभक्तत्वं युगपदेकपुरुषानुष्ठेयत्वासम्भवं पश्यतीति तु भगवतोऽविदितं परैरारोपितमेव, तथा हि- 'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगेत्विमां श्रु'ण्विति द्वयोरपि बुद्धियोगयोरेकमेव पार्थं प्रत्युपदिष्टत्वेन तदुपदेशस्यानुष्ठानार्थत्वेन च तयोरेकपुरुषानुष्ठेयत्वसिद्ध्या तदसम्भवस्यासिद्धेः ।

नच लोकेऽस्मिन्द्विविधा नि'ष्ठेति वक्ष्यमानवचनेन तत्सिद्धिरिति वाच्यं, तेनापि वचनेन तयोस्समुच्चित्यानुष्ठेयत्वस्यैव सिद्धत्वात् । अन्यथा श्रुतिसूत्रविरोधस्य दुरुद्धरत्वात् । तथाहि- 'अन्धं तमः प्रविशन्ति येऽविद्यामुपासत' इति श्रुत्या केवलकर्मनिष्ठान्विनिन्द्य 'ततो भूय इव ते य विद्यायां रता' इति श्रुत्या केवलज्ञाननिष्ठांश्च ततोप्यधिकतरान्धतमःप्रवेशित्वेन दूषयित्वा, 'विद्यां चाऽविद्यां च यस्तद्वेदोभयँ्स' इति भगवत्या श्रुत्या कर्मज्ञानसमुच्चयो विहितः । तदनुरोधिना वेदाचार्येणापि- 'सर्वापेक्षा च यज्ञादिश्रुतिरश्ववदि'ति, 'विहितत्वाच्च उभयकर्मा'दीत्यादिसूत्रैः तथैव निरणायि ।

ननु परैः गीताशास्त्रे ईषणमात्रेणापि श्रौतेन स्मार्तेन कर्मणा आत्मज्ञानस्य समुच्चयो न केनचिदपि दर्शयितुं शक्य इत्युक्तमिति चेत्, तर्हि प्रष्टव्याः परे । गीताशास्त्रे 'किं कर्मज्ञान उभयेपि प्रतिपादिते ? उत एकमिति? आद्ये

भा—अव॰ स्वधर्मसमुच्चितेनैव ज्ञानयोगेन परमपुरुषार्थस्सिद्ध्यतीति ज्ञापयितुं भगवदुपदेशः प्रवृत्तः । वासुदेवार्जुनसंवादरूपा चाख्यायिकेयं विद्यास्तुत्यर्थो निगमेषु जनकयाज्ञवल्क्यसंवादादिवदुपपद्यते ।

'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां, धाता ध्याता कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरश्शम्भुराकाशमध्ये' इति, 'स एष भगवानीशस्सर्वतत्त्वादिरव्ययः । सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्वरः ॥ सोऽसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकसम्भवम् । वामपार्श्वात्ततो विष्णुं लोकरक्षार्थमीश्वरः ॥ युगान्ते चैव सम्प्राप्ते रुद्रं प्रभुरथाऽसृजत् ।' इत्यादिश्रुतिस्मृतिवचननिचयेन सृष्टिस्थितिलयतिरोधानानुग्रहकारणतयाऽवगतेन परमेश्वरेण जगतः स्थितिकर्तृतया नियमितो नारायणः जगतः स्थितिकारणे धर्मेऽधर्मेणाऽभिभूयमानेऽनुग्रहनिदाने भक्तियोगेच शून्यमकक्ष्येणाऽचलबोधकदध्वना विध्वंस्यमाने च 'धर्मसंस्थापनार्थाय सम्भवामि युगेयुगे' इति वचनानुसारेण धर्मं सम्प्रतिष्ठापयिषुः देवक्यां वसुदेवादंशेन किल सम्बभूव ।

तत आशैशवादपि निगृह्णन्दुष्टसन्ततिमनुगृह्णंश्च शिष्टवितितिमुपमन्यूपदेशेन पाशुपतव्रतमधिगम्य मैनाके तपश्चर्यया परमेश्वरमाराध्य तत्प्रसादेन सम्भूतस्य निजसुतस्य साम्ब इति नामकरणेन भक्तियोगधौरंधर्यतामुद्वहन् प्रतिषिद्धकार्यरहितनित्यनैमित्तिककर्मसमुच्चितात् ज्ञानशब्दिताद्भक्तेरेव मुक्तिसाधनतामुपदिदिक्षुश्चीर्णशिरोव्रतं पार्थमुद्दिश्य भक्तियोगपरं शास्त्रमवतारयामास ।

अत्र धृतराष्ट्र उवाचेति जनमेजयं प्रति वैशम्पायनवचनम् ।

अथाऽखिलानामपि पुमर्थानां धर्म एव मूलमित्यभिप्रेत्याह—धर्मक्षेत्र इति । धर्मस्य पूर्वमनुत्पन्नस्योत्पत्तेरुद्भूतस्य वृद्धेश्च निमित्तं सस्यस्येव क्षेत्रं

---

द्वयोरपि समुच्चयस्सिद्धः । द्वितीये तु किं कर्म? उत ज्ञानमिति? आद्ये आत्मज्ञानप्रतिपादनपरं स्वीयं विवरणं भवेन्निर्मूलम् । द्वितीये तु परैः स्वरीत्या सन्न्यस्य श्रवणं कुर्यादिति पार्थमत्याश्रमं विधाय सुयोधनस्स्यात्कृतार्थीकर्तव्यः । तस्माद्ज्ञानकर्मणी द्वे अप्येकपुरुषानुष्ठेयत्वाशयेनैव भगवता पार्थप्रत्युक्त इत्येव युक्तम् । प्रकृतमधिकृत्य तृतीयाध्याये विस्तर इति नेह ।

यत्कुरुक्षेत्रमनेकश्रुतिस्मृतिप्रसिद्धम् । धर्मक्षेत्र इति विशेषणेन तत्र युयुत्सया मिलितानामपि क्षेत्रमहिम्ना निवृत्तिराशङ्कयते । अत एव किमकुर्वतेति प्रश्नस्सङ्गच्छते । मामका इति धृतराष्ट्रस्य सुतेषु बलवत्तरममकारद्योतकम् । मामकाः पाण्डवाश्च किमकुर्वतेत्यन्वयः ॥१॥

एवमन्धस्य प्रश्ने विदितहृदयस्सञ्जयः प्रत्युवाच— स्वपुत्रे राज्यप्रत्यर्पणं कृतमिति माचिन्तयस्वेति राजानं मोदयितुमादावेव दुर्योधनदौष्ट्यं निरूपयति—

संजय उवाच—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥२॥

दृष्ट्वेति । पाण्डवानीकं कौन्तेयसैन्यं व्यूढं व्यूहरचनया धृष्टद्युम्नादिभिः स्थापितं दृष्ट्वा समवेक्ष्य आचार्यमुपसङ्गम्य द्रोणाचार्यसमीपमागत्य राजा दुर्योधनः वचनं वक्ष्यमाणमब्रवीत् उवाचेत्यर्थः ॥२॥

---

धर्मक्षेत्र इति, धर्म एव मूलमिति । 'धर्मात्प्रवर्तते लोको धर्मात्स्वर्गः प्रवर्तते । धर्मात्कैवल्यमाप्नोति धर्ममूला व्यवस्थिति'रित्यादिश्रुतेरित्यर्थः । यत्कुरुक्षेत्रं श्रुतिस्मृतिप्रसिद्धमिति । बृहस्पतिरुवाच याज्ञवल्क्यं प्रति- 'यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदन'मिति जाबालश्रुतेः, 'कुरुक्षेत्रं देवयजन' मिति शतपथश्रुतेश्च । निवृत्तिराशङ्कयत इति । अस्येदमाकूतम्- युयुत्सया मिलितानामपि क्षेत्रमहिम्ना पाण्डवानां पक्षद्वयहिंसामूलादधर्माद्यदि भीस्संजायेत, तदा निवृत्तिस्सञ्जायते । अथ मत्पुत्राणामपि चित्तप्रसादेन धर्माद्यदि भीस्सञ्जायेत तदापि निवृत्तिस्समुपपद्यते । अथ यदि मत्पुत्राः क्षेत्रमहिम्नाऽनुतप्ताः कपटोपात्तं राज्यं पाण्डवेभ्यो दद्युरेवमपि नष्टराज्यतया मत्सुता हता एवेति धृतराष्ट्रस्योद्वेग एव प्रश्नबीजम् । किमकुर्वतेत्यनेन किं स्वोद्यमानुसारेण समरमेव कृतवन्तः? केन चिन्निमित्तेन संग्रामान्निवृत्त्यान्यदेव कृतवन्त इत्याशयः ॥१॥

आचार्यसमीपमागत्येति । स्वयमेव तत्र गत्वा, नतु स्वसमीपं तमाहूयेति भावः । पाण्डवव्यूहदर्शनानन्तरमाचार्यमुद्दिश्य किमपि जगादेत्यनेन पाण्डव-

तदेव वचनमुदाहरति पश्यैतामित्यादिना—

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥३॥

पश्येति । एतां पुरोवर्तिनीं महतीमनेकाक्षौहिणीसहिततया दुर्निवारां पाण्डुपुत्राणां चमूं सेनां, प्रहर्तुमुद्यतामित्यर्थः । पश्य वीक्षस्व । अन्तेवासितया त्वामाचार्यमहं प्रार्थये ।

परे तु त्वय्यपि कृतावज्ञा इत्याशयः । व्यूढां तव शिष्येणेति शिष्यापेक्षया गुरोराधिक्यस्य सिद्धतया भवान् शिष्यजनावज्ञानिरसनदक्ष एवेत्याकूतम् । द्रुपदपुत्रेणेति पूर्ववैरोद्घाटनं क्रियते ॥३॥

अत्रेत्यादिभिस्त्रिभिश्श्लोकैः परसैन्ये च प्रसिद्धतमान्महारथाननुपेक्षणीयान्दर्शयति—

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥४॥
धृष्टकेतुश्चेकितानः काशीराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥५॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥६॥

महेष्वासा महाधनुर्धराः; अत्रान्यैरप्रधृष्यत्वं महत्त्वं च विवक्षितम् । महाधनुर्धारित्वेपि यदि युद्धकौशलं न स्यात्तर्हि न तादृशैः किमपि भवेदित्याशङ्क्य युद्धकौशलमप्यस्तीत्याह— युधि भीमार्जुनसमा इत्यनेन । महारथा इति । 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः ॥ अमितान्योधयेद्यस्तु सम्प्रोक्तोऽतिरथस्तु सः । रथी त्वेकेन यो युध्येत्तन्न्यूनोऽर्धरथस्स्मृतः ॥' द्रौपदेया उपपाण्डवाः ॥४-६॥

---

व्यूहमसहमानः प्रतिव्यूहविरचनाय प्रोत्साहयामासेति व्यज्यते । तेन भवत्पुत्रणामनुतापस्सम्भावित इति ध्वन्यते ॥२॥

पूर्ववैरेति । भवद्वधार्थमुत्पन्नोऽपि पूर्ववैरमनुपलक्ष्य यस्त्वया शिक्षितोऽभूत्, यश्च धर्मक्षेत्रमुपगम्याप्याचार्येऽपीदृशदुष्टबुद्धिस्तस्यातिदुष्टतया कथञ्चिदप्यनुतापो न कार्य इत्याशयः ॥३॥

यद्येवं परबलमतिप्रभूतं भयङ्करं तर्हि सन्धिरेव परैः कार्यः किं निग्रहोद्यमेनेत्याशङ्क्याह—

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥७॥

भवान् भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥८॥

अन्ये च बहवश्शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥९॥

अस्माकं त्विति । तुशब्देनान्तरुत्पन्नस्यापि भयस्य तिरोधानं कृतमिति द्योत्यते । विशिष्टा इति । अस्माकं सर्वेषां मध्ये ये विशिष्टा मम सैन्यस्य नायकास्तान्निबोध । मद्वचनादवधारयेत्यर्थः । द्विजोत्तमेत्याचार्यस्तुतिः- स्वकार्ये तदाभिमुख्यं सम्पादयितुं, पक्षान्तरे युद्धाऽकुशलत्वं द्योतयितुं वा प्रवृत्ता ।

संज्ञार्थमिति । प्रियशिष्याणां पाण्डवानां दर्शनेन व्याकुलमनसस्तव स्ववीर्यविस्मृतिर्माभूदिति मयोच्यत इत्याकूतम् । असंख्येयेषु तेषु नायकेषु मध्ये कांश्चिन्नामभिः गृहीत्वा परिशिष्टानुपलक्षयितुं ते तुभ्यं तान्ब्रवीमि । नत्वज्ञातं कीञ्चिदपि ज्ञापयामीत्यकूतम् । भवानिति । विशिष्टान्परिगणयन्नाचाचार्यस्य तोषं जनयितुं भवानित्यग्रे समुदितम् ॥७-९॥

---

विशिष्टा इति । सर्वेभ्यस्समुत्कृष्टा इत्यर्थः । पक्षान्तर इति । दौष्ट्यपक्षे । युद्धाकुशलत्वमिति । अस्यायमाशयः—भवतो द्विजवर्यतया समराऽकुशलत्वेपि मम पक्षे कर्णप्रभृतीनां क्षत्रियप्रवराणां सत्त्वान्न कापि क्षतिरिति ।

अन्य इति । एतावन्त एव न, अन्ये शल्यकृतवर्मप्रभृतयो मदर्थे त्यक्तजीविता इति तेषां स्वस्मिन्ननुरागातिशयो व्यज्यते ।

बहव इति सैन्यबाहुल्यम् । मदर्थ इति तेषां स्वस्मिन्भक्तिः । नानेति शौर्यं व्यज्यते । युद्धविशारदा इति तेषां संग्रामकौशल्यं च द्योत्यते । एतेन पाण्डवबलान्न किमपि भयाशङ्केति व्यज्यते ॥७-९॥

पुनरपि सैन्यद्वयतौल्यमाशङ्क्य परसैन्यप्राबल्यमाकथयति—

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥१०॥

अपर्याप्तमिति । तादृशवीरवरैर्युक्तं भीष्मेणाभिरक्षितमस्मद्बलमपर्याप्तं तैस्सह योद्धुमक्षमं भाति । इदं तु एतेषां पाण्डवानां बलं भीमेनाभिरक्षितं सत्पर्याप्तं समर्थं भाति । भीष्मस्योभयपक्षसमत्वाद्भीमस्यैकपक्षरातित्वादित्याशयः ॥

अथ कर्तव्यं विज्ञापयति—

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तस्सर्व एव हि ॥११॥

अयनेष्विति । संग्रामारम्भसमयेऽयनेषु व्यूहप्रवेशमार्गेषु यथाभागं विभक्तां स्वां स्वां रणभूमिमपरित्यज्यावस्थितास्सन्तस्सर्वे भवन्तो भीष्ममेवाभिरक्षन्तु । यथाऽन्यैर्युध्यमानः पृष्ठतः कैश्चिन्न हन्येत तथा रक्षन्तु । भीष्मायत्तमेवास्माकं जीवितमित्याशयः ॥११॥

स्तौतु वा, निन्दतु वा एतदर्थं देहमर्पयितुमुद्युक्त एवेति द्योतयन्निव भीष्मस्सिंहनादं कृत्वा शङ्खारावं चकारेत्याह—

तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैश्शङ्खं दध्मौ प्रतापवान् ॥१२॥

तस्येति । सिंहनादपूर्वकशङ्खध्वानं परेषां भयजननाय, निजबलस्योत्साहवर्धनाय च । उच्चैर्महान्तम् ॥१२॥

तदेवं कौरवसर्वसेनापतेर्युद्धोत्सवमालक्ष्य सर्वत्र युद्धोत्सवः प्रवृत्त इत्याह—

ततश्शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥१३॥

तत इति । पणवा आनका गोमुखाश्च वाद्यविशेषाः सहसैव तत्क्षणमेवाभ्यहन्यन्त ताडिताः । सच शङ्खादिध्वनिस्तुमुलो विभक्तो महानभूदित्यर्थः ॥१३॥

पाण्डवसैन्ये प्रवृत्तं युद्धोत्सवमाह तत इत्यादिभिः पञ्चभिः—

ततश्श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥१४॥
पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥१५॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलस्सहदेवश्च सुघोषमणिपुष्पकौ ॥१६॥

पाञ्चजन्यो देवदत्तः पौण्ड्रोऽनन्तविजयस्सुघोषो मणिपुष्पकश्चेति श्रीकृष्णादीनां शङ्खानां नामानि । शङ्खनामकथनं परसैन्ये स्वस्वनामभिः प्रसिद्धा एतावन्तश्च शङ्खाः, भवत्सैन्ये तु नैकोपि स्वनामप्रसिद्धश्शङ्खोऽस्तीति परेषामुत्कर्षातिशयद्योतनार्थम् ॥१४-१६॥

काश्यश्च परमेष्वासश्शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१७॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते !
सौभद्रश्च महाबाहुश्शङ्खान् दध्मुः पृथक्पृथक् ॥१८॥

काश्य इति । परमेष्वासः महाधनुर्धरः काश्यः काशीराजः, द्रौपदेया उपपाण्डवाः, पृथिवीपते धृतराष्ट्र! स्थिरो भूत्वा शृण्विति भावः । सुगममन्यत् ॥१७-१८॥

स च शङ्खानां नादः त्वदीयानां महाभयं जनयामासेत्याह—

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥१९॥

स घोष इति । धार्तराष्ट्राणां त्वदीयानां हृदयानि व्यदारयत् विदारितवान् । किं कुर्वन्नभश्च पृथिवीं चैव व्यनुनादयन् प्रतिध्वनिं जनयन् ॥१९॥

एतस्मिन्समये वासुदेवमर्जुनो विज्ञापयामासेत्याह- अथेत्यादिभिश्चतुर्भिः—

अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥२०॥

अथेति । व्यवस्थितान् युद्धोद्योगेनावस्थितान् । कपिध्वजोऽर्जुनः, हनूमता महावीरेण ध्वजरूपतयाऽनुगृहीत इत्यर्थः । धनुरुद्यम्येति । सर्वथा भयशून्यत्वेन युद्धाय गाण्डीवं धनुरुद्यतं कृत्वेत्यर्थः ॥२०॥

हृषीकेशं तदा वाक्यमिदमाह महीपते ।

अर्जुन उवाच—

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ! ॥२१॥

तदेवार्जुनवाक्यमवतारयति—सेनयोरुभयोर्मध्य इति । स्वपक्षप्रतिपक्षभूतयोस्सन्निहितयोस्सेनयोर्मध्ये मम रथं स्थापय स्थापनं कुर्वित्यर्थः ॥२१॥

उभयसेनामध्ये रथस्थापनप्रयोजनमाह—

यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।

यावदिति । योद्धुकामान्न तु सन्धिकामान्नापि भयाद्विद्रवमाणांश्चेत्यर्थः ।

ननु भवान् योद्धा, न तु युद्धप्रेक्षक इत्याशङ्क्य तत्राह—

कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥२२॥
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥२३॥

कैरिति । कैस्सह मया योद्धव्यम् । योत्स्यमानानिति । धार्तराष्ट्रस्य दुर्योधनस्य प्रियं कर्तुमिच्छन्तो य इह समागतास्तान् यावद्द्रक्ष्यामि तावदित्यर्थः ॥

संजय उवाच—

एवमुक्तो हृषीकेशो गुडाकेशेन भारत !
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥२४॥
भीष्मद्रोणप्रमुखतस्सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥२५॥

एवमिति । भीष्मद्रोणप्रमुखतः भीष्मद्रोणयोस्सम्मुखे ॥२४-२५॥

किमकरोदित्यत आह—

तत्राऽपश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ।
आचार्यान्मातुलान्भ्रातॄन् पुत्रान्पौत्रान्सखींस्तदा ॥२६॥
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।

तत्रापश्यदिति । सेनयोरुभयोरपि स्थितान् पार्थोऽपश्यदित्यन्वयः । पितृव्यान् भूरिश्रवःप्रभृतीन्, पितामहान् भीष्मसोमदत्तप्रभृतीन्, आचार्यान् द्रोणकृपप्रभृतीन्, मातुलान् शल्यशकुनिप्रभृतीन्, भ्रातॄन् दुर्योधनप्रभृतीन्, पुत्रान् लक्ष्मणप्रभृतीन्, सखीन् अश्वत्थामप्रभृतीन् ॥२६॥

तदा मोहात्मिकयाऽधर्मो हिंसेति बुद्ध्या ममकारमूलेन शोकेन च शास्त्रविहितत्वेन स्वधर्मादपि युद्धादुपरिरंसाऽनर्थफला पार्थस्य जातेत्याह—

तान् समीक्ष्य स कौन्तेयस्सर्वान्बधूनवस्थितान् ॥२७॥
कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ।

तानिति । विषीदन् विषादमुपतापमुपगमन्निदं वक्ष्यमाणरूपां वाचमब्रवीदित्यन्वयः ॥२७॥

किमब्रवीदित्याशङ्कायामाह—

अर्जुन उवाच—

दृष्ट्वेमं स्वजनं कृष्ण ! युयुत्सुं समुपस्थितम् ॥२८॥
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपधुश्च शरीरे मे रोमहर्षश्च जायते ॥२९॥
गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ।

दृष्ट्वेति । स्वजनमात्मीयबन्धुवर्गम् ॥२८--२९॥

नच शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥३०॥
निमित्तानि च पश्यामि विपरीतानि केशव !

नचेति । अवस्थातुं शरीरं धारयितुमपि न शक्नोमि, तत्र कारणमाह--भ्रमतीवेति ॥३०॥

नच श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥३१॥

नचेति । श्रेयः पुरुषार्थः ॥३१॥

ननु माभूददृष्टफलं, दृष्टफलं तु विजयमूलानि राज्यसुखानि निस्संशयान्यत आह—

न कांक्षे विजयं कृष्ण! नच राज्यं सुखानि च ।
किं नो राज्येन गोविन्द! किं भोगैर्जीवितेन वा ॥३२॥
एषामर्थे कांक्षितं नो राज्यं भोगास्सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥३३॥
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाश्श्वशुराः पौत्राश्श्यालास्सम्बन्धिनस्तथा ॥३४॥

न कांक्ष इति । सर्वजनाकांक्षितेषु सुखेषु किं तत्र निवृत्तिकारणमित्यत आह— किं न इति ॥३२-३४॥

ननु यदि कृपया त्वमरीन् न हंसि- तर्हि त्वामेते राज्यलोभेन हनिष्यन्ति, ततस्त्वमेवैनान् हत्वा राज्यं भुंक्ष्वेत्यत आह—

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन !
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥३५॥

एतानिति । त्रैलोक्यराज्यस्यापि हेतोः तत्प्राप्त्यर्थमपीत्यर्थः ॥३५॥

निहत्य धार्तराष्ट्रान्नः का प्रीतिस्स्याज्जनार्दन !
पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥३६॥

निहत्येति, आततायिन इति । 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते चाततायिनः' ॥३६॥

नच श्रेयोऽनुपश्यामीत्याद्युक्तमुपसंहरति —

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनस्स्याम माधव ! ॥३७॥

तस्मादिति । तस्माद्दृष्टादृष्टरूपोभयफलाभावादित्यर्थः ॥३७॥

कुलक्षयकरसंग्रामोद्यमे परेषां प्रवृत्तौ कारणमाह द्वाभ्याम्—

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥३८॥

यद्यपीति । लोभोपहतचेतसो लोभान्धबुद्धित्वात्तेषां कुलक्षयादिदोषज्ञानविरहात्तत्र प्रवृत्तिरित्याशयः ॥३८॥

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ! ॥३९॥

प्रपश्यद्भिरिति । तत्र दोषमवलोकयतामस्माकं निवृत्तिरेव युज्यत इत्याशयः ॥३९॥

तमेव दोषं दर्शयति—

कुलक्षये प्रणश्यन्ति कुलधर्मास्सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥४०॥
अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय! जायते वर्णसङ्करः ॥४१॥
सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥४२॥

कुलक्षय इति । सनातनाः परंपरानुगताः । कुलस्त्रियः प्रदुष्यन्तीति महासंग्रामे पुरुषाणां विनाशात्कुलस्त्रीषु व्यभिचारदोषस्तन्मूलो वर्णसङ्करश्च सम्पद्येयातामिति भावः ॥४०-४२॥

उक्तमेव दोषमुपसंहरति—

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥४३॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन !
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥४४॥
अहो ! बत ! महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥४५॥

दोषैरेतैरिति । जातिधर्मा वर्णधर्माः । उत्साद्यन्ते लुप्यन्ते । वर्णानां सङ्करे वर्णविभागाभावेन ब्राह्मणादिवर्णप्रयुक्तधर्माणामाश्रमधर्माणां च विनाशात्प्राणिनां नरकवासस्सम्भवेदित्याशयः ॥४३--४५॥

एवं सन्तप्तस्सन् मृत्युमेवाशासान आह—

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥४६॥

यदिति । अकृतप्रतीकारं तूष्णीमुपविष्टम् ॥४६॥

ततः किं वृत्तमित्यत आह—

संजय उवाच—

एवमुक्त्वाऽर्जुनस्सङ्ख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥४७॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेऽर्जुनविषादयोगो नाम प्रथमोऽध्यायः ।

इति श्रीमज्जगद्गुरुश्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्यनीलकण्ठभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये प्रथमोऽध्यायः ।

---

इति श्रीमल्लोकाराध्यशिवयोगिमहोपाध्यायनागलिङ्गशिवाराध्यकृतायां लघुचन्द्रिकाख्यतत्वामृताकरव्याख्यायां प्रथमोऽध्यायः ।

---

श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित
श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## साङ्ख्ययोगोनाम द्वितीयोऽध्यायः ।

मोहाविष्टचेताः पार्थस्सशरीरं चापमुत्सृज्योपाविशदिति श्रुत्वा स्वपुत्राणां विजयो निश्शङ्क इति मन्वानस्य धृतराष्ट्रस्य हर्षमूलं ततः किं वृत्तमित्याशङ्कामपनिनीषुस्सञ्जयस्तं प्रत्युवाचेत्याह वैशम्पायनः—संजय उवाचेति ।

संजय उवाच—

तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥१॥

तमिति । कृपा स्नेहविशेषः, तया आविष्टं व्याप्तं विषीदन्तं शोचन्तमिदं वक्ष्यमाणं वाक्यं मधुसूदन उवाचेत्यन्वयः ॥१॥

श्रीभगवानुवाच—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ! ॥२॥

कुत इति । इदं स्वधर्मवैमुख्यरूपं कश्मलं शिष्टनिन्दितत्वेन मलिनं, विषमे अस्थाने, त्वामिति क्षत्रियप्रवरत्वं व्यज्यते । समुपस्थितं प्राप्तम् । स्वधर्मवैमुख्यमेव विशिनष्टि तस्य परित्याज्यत्वायानार्यजुष्टमित्यादिभिर्विशेषणैः ॥२॥

क्लैब्यं मा स्म गमः पार्थ ! नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ! ॥३॥

क्लैब्यमिति । हे पार्थ ! क्लैब्यमधैर्यं मास्मगमः- न चाप्नुहि । एतत्कातर्यं त्वयि प्रख्यातवीर्ये नोपपद्यते न युज्यते । क्षुद्रं तुच्छं हृदयदौर्बल्यं त्यक्त्वा उत्तिष्ठ युद्धसन्नद्धो भवेत्यर्थः ॥३॥

पुनरपि पार्थस्स्नेहकारुण्यधर्माधर्मभयाकुलः पृच्छति कथमित्यादिभिष्षड्भिः—

अर्जुन उवाच—

कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन! ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन! ॥४॥

कथमिति । भीष्मं पितामहं द्रोणमाचार्यं पूजार्हौ कुसुमैरर्चनीयाविषुभिर्बाणैः कथं प्रतियोत्स्यामि प्रहरिष्यामि । वाचाप्यकुत्सनार्हौ कथमिषुभिर्वधिष्यामीतीषुभिरित्यनेन व्यज्यते ॥४॥

यद्येवं तर्हि तव देहयात्रापि न सिद्ध्येदित्याशङ्क्याह—

गुरूनहत्वा हि महानुभावाञ्छ्रेयो भोक्तुं भैक्षमपीह लोके ।
हत्वाऽर्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥५॥

गुरूनिति । गुरून् द्रोणादीनहत्वा परलोकसुखहानिकरं गुरुवधमकृत्वेत्यर्थः । इह लोके मर्त्यलोके भैक्षं नृपाणां प्रतिषिद्धमपि भोक्तुं श्रेय उचितम् । अर्थकामानर्थपरान्तान् हत्वा तु रुधिरप्रदिग्धान्रक्तसिक्तान्भोगानिहैव भुञ्जीय । परलोकसुखं भज्येतेत्यर्थः । परलोकसुखभङ्गकर ऐहिकभोगो न शस्यत इत्याशयः ॥५॥

ननु भैक्षस्य क्षत्रियं प्रति निषिद्धत्वाद्युद्धस्य विहितत्वाच्च स्वधर्मत्वेन युद्धमेव तव श्रेयस्करमित्याशङ्क्याह—

नचैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥६॥

नचैतदिति । एतद्भैक्ष्ययुद्धयोः कतरत् किंनु गरीयः श्रेयस्करं, तन्न विद्मः न जानीमः । अथ परलोकसुखमविगणय्य सुखमभिलषितुमपि वयं तान्जयेमेति वाऽत एव नो जयेयुरिति वा । तदपि न विद्मः । अथास्माकमेव विजयो भविष्यतीति निश्चितेऽपि यान् धार्तराष्ट्रान्बन्धून्हत्वा न जिजीविषामः जीवितुमपि नेच्छामः, तान्हत्वा सुखमुपभोक्तुं कथमिच्छाम इत्याशयः । ते

तथाविधा धार्तराष्ट्रा भ्रातरः समुपस्थिताः। युद्धसन्नद्धा इत्यर्थः। तस्मात्स्वधर्मोपि संग्रामो मम न रोचत इत्याशयः ॥६॥

अथ विधिवद्गुरूपसत्तिं दर्शयति—

**कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसम्मूढचेताः।**
**यच्छ्रेयस्स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥**

**कार्पण्येति।** तस्मात्कार्पण्यदोषोपहतस्वभावः एतान् हत्वा कथं जीविष्याम इति कार्पण्यं, दोषश्च स्वकुलनाशमूलं ताभ्यामपहतोऽपगतस्स्वभावश्शौर्यादिलक्षणो यस्य सोऽहं धर्मसम्मूढचेताः- धर्मे सम्मूढं चेतो यस्य सः। युद्धं त्यक्त्वा भिक्षाटनं धर्मः ? उत युद्धमेव धर्मः ? इति सन्दिग्धचित्त इत्यर्थः। अतो मे यन्निश्चितं श्रेयः तद्ब्रूहि। तेऽहं शिष्यः शासनार्हः। अतस्त्वां प्रपन्नं शरणागतं मां शाधि- शिक्षयेत्यर्थः ॥७॥

ननु स्वयमेव विचार्य श्रेयो निश्चिनु इत्यत आह—

**न हि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम्।**
**अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥८॥**

**न हीति।** यच्छ्रेयः कर्तृ मम शोकमपनुद्यादपवारयेत्। तं न पश्यामि। एतेन 'मा भगवान् शोकस्य पारं तारयतु' इति श्रुत्यर्थो दर्शितः। शोकं विशिनष्टि—**इन्द्रियाणामुच्छोषणमिति।** सन्तापकरमित्यर्थः।

ननु युद्धे कृते विजये राज्यसुखप्राप्त्या, युद्धमरणे स्वर्गप्राप्त्या च तव शोकनिवृत्तिर्भविष्यतीत्याशङ्क्याह—**अवाप्येत्यादिना।** असपत्नं निष्कण्टकं राज्यं, अथ सुराणामाधिपत्यं स्वर्गाधिपत्यरूपमप्यैश्वर्यमवाप्य स्थितस्यापि मम यच्छोकमपनुद्यात्तन्न पश्यामीत्यन्वयः।

**एतेन** 'यथेह कर्मचितो लोकः क्षीयत' इत्यादिश्रुत्या कर्मफलभूतं स्वर्गादिकमनित्यमिति, 'न स पुनरावर्तत' इत्यादिश्रुत्योपासनाफलभूतो मोक्षो नित्य इति च नित्यानित्यविवेकस्तन्मूलो विरागश्चाधिकारिविशेषणतया दर्शितौ ॥८॥

एवमुक्त्वाऽर्जुनः किं कृतवानित्यपेक्षायामाह—

**एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः ।**
**न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥९॥**

**एवमिति ।** गुडाकेशः जितालस्यः परन्तपः शत्रुतापनोऽर्जुनः हृषीकेशं गोविन्दं 'कथं भीष्ममहं सङ्ख्य' इत्यादिना युद्धस्याकर्तव्यतां 'न योत्स्य' इति तस्याऽनाशंसनीयत्वं चोक्त्वा तूष्णींबभूवहेत्यर्थः ॥९॥

एवं पार्थे युद्धमुपेक्षितवत्यपि वासुदेवस्तं युद्धाय प्रोत्साहयामासेति धृतराष्ट्रदुराशानिरासायाह—

**तमुवाच हृषीकेशः प्रहसन्निव भारत !**
**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥१०॥**

**तमिति ।** सेनयोरुभयोर्मध्ये उभयसेनामध्ये विषीदन्तं कथं योत्स्यामीति शोचन्तं तमर्जुनं प्रतीदमशोच्यानित्यादिना वक्ष्यमाणं वच उवाचेत्यर्थः । सेनयोरुभयोर्मध्ये विषीदन्तमित्यनेन यदि संग्रामारम्भात्पुरस्तादेव युद्ध उपेक्षितस्तर्हि युज्येत, अथ महता संरम्भेण युद्धभूमिमागत्य तदुपेक्षणं न शोभत इति व्यज्यते ॥१०॥

अथ भगवान्वासुदेवः शोकमोहावेशवशात्स्वधर्मविमुखमर्जुनं साङ्ख्यबोधेन देहात्मविवेकपूर्वकं शोकमोहाभ्यामुत्तीर्य स्वधर्मे प्रविवेशयिषुराह—

**श्रीभगवानुवाच—**

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥११॥**

**अशोच्यानिति ।** अशोच्यान् शोचितुमनर्हान् बन्धूनन्वशोचोऽनुशोचितवानसि । 'दृष्ट्वेमं स्वजनं कृष्ण! युयुत्सुं समुपस्थित'मित्यादिना । बन्धुविषयश्शोको न विवेकिजनास्पदम् । अथ प्रज्ञावादान् 'कथं भीष्ममहं सङ्ख्य' इत्यादिना, 'पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रिया' इत्यादिना च पण्डितानां भाषणानि भाषसे । तस्मादिदमुन्मत्तचरितमिव न शोभत इत्यर्थः ।

यतश्च पण्डिता ज्ञानिनो गतासून्- मृतान् देहांश्च, अगतासून्- जीवत आत्मनश्च न शोचन्ति, अत इदं विरुद्धमुपलक्ष्यत इत्याशयः ॥११॥

पूर्वोक्ताशोच्यत्वनिबन्धनमात्मनित्यत्वं जननमरणमूलनश्वरत्वाशङ्कानिराकरणेन समर्थयति—

नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
नचैव न भविष्यामस्सर्वे वयमतः परम् ॥१२॥

नत्विति । अहं जातु कदाचिदपि नासमिति न । आसमित्येवार्थः । अत्र तुशब्दः स्वभिन्नेश्वरत्वं व्यावर्तयति । त्वं नासदिति नेति सम्बध्यते । किंतु आसीरेवेत्यर्थः । इमे जनाधिपा नृपाः नासन्निति न । आसन्नेवेत्यर्थः । अतः परं मृतेरनन्तरं न भविष्याम इति न । एवं च जीवानां कालत्रयेप्यसत्त्वनिषेधेन नित्यत्वमुपपादितम् ॥१२॥

---

विरुद्धमिति । यदेतान्हनिष्यामीत्यनुशोचनमविवेकिजनास्पदं, यच्च देहातिरिक्तात्मनिश्चयवदाचरितं धर्माधर्मभाषणं चेत्यर्थः । अतो देहस्वभावं तदतिरिक्तनित्यात्मविज्ञानं तदुभयातिरिक्तपरमात्मविज्ञानं तत्प्राप्त्युपायभूतं युद्धरूपं स्वधर्मं च न जानासि । आत्मा हि न जन्माधीनसद्भावः । नापि मरणाधीनविनाशश्च । तस्य जननमरणयोरभावात् । अतस्स न शोकस्थानम् । देहस्तु नश्वर एव- तस्योत्पत्तिविनाशयोगस्स्वाभाविक इति, सोपि न शोकविषय इति हृदयम् ॥११॥

नत्विति, ईश्वरत्वं व्यावर्तयतीति । अत एव 'बहूनि मे व्यतीतानि जन्मानि तव चार्जुने'ति वक्ष्यमाणवचनं सङ्गच्छते । अथ ये तु वासुदेव ईश्वरत्वमभिमन्यन्ते ते तु वक्ष्यमाणवचनैः पराहन्यन्ते । मूले सर्वे वयमिति विवरणे जीवानामिति च बहुवचनेन च जीवानां परस्परं भेदः प्रमितः । औपाधिकभेदवादे- आत्मभेदस्यायथार्थतया तत्त्वोपदेशसमये जीवानां भेदोपदेशो न सङ्गच्छेत ।

यत्तु देहभेदानुवृत्त्या बहुवचनं नात्मभेदाभिप्रायेणेति, तदसङ्गतम्— 'नित्यो नित्यानां चेतनश्चेतनानां, एको बहूनां यो विदधाति कामा'निति श्रुति-

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥१३॥

देहिन इति । देहे वर्तमानस्येति शेषः । देहिनो जीवस्य यथा कौमारं, यौवनं, जरा च न विनाशहेतवस्सम्पद्यन्ते, तथा देहान्तरप्राप्तिरप्यात्मनो नाशहेतुत्वाभावान्न शोकनिदानमित्यर्थः ॥१३॥

मात्रास्पर्शास्तु कौन्तेय ! शीतोष्णसुखदुःखदाः ।
आगमापायिनो नित्यास्तांस्तितिक्षस्व भारत ! ॥१४॥

मात्रेति । शब्दस्पर्शरूपरसगन्धास्तन्मात्रकार्यत्वान्मात्रा इत्युच्यन्ते । श्रोत्रादिभिस्तेषां स्पर्शाः शीतोष्णमृदुपरुषादिरूपसुखदुःखदा भवन्ति । तान् धैर्येण यावद्युद्धादिशास्त्रीयकर्मसमाप्ति तितिक्षस्व । ते चागमापायित्वाद्धैर्यवतां क्षन्तुं योग्याः, अनित्याश्च ते । बन्धहेतुभूतकर्मनाशे सत्यागमापायित्वेनापि निवर्तन्त इत्यर्थः ॥१४॥

---

विरोधात् । बहूनां मध्ये य एको नित्यश्चेतनस्स तेषां कामान्विदधातीत्यर्थः । अनेन जीवपरयोर्जीवानां च परस्परभेदस्य श्रुतत्वात् ॥१२॥

देहिन इति, न विनाशहेतव इति । यथा कौमाराद्यवस्था देहनिबन्धना एव न त्वात्मविपरिणाममूलाः, अत एव देहिनः कौमारावस्थां विहाय यौवनाद्यवस्थाप्राप्तावपि स एवाहमिति प्रत्यभिज्ञादर्शनादात्मनस्स्थिरत्वबुद्ध्या आत्मा नष्ट इति न शोचति, तथैव विद्यमानदेहनाशेन देहान्तरप्राप्तावप्यात्मा न नश्यति । अत एव जातमात्रस्य पूर्वसंस्कारवशात्स्तन्यपानादौ प्रवृत्तिस्सङ्गता भवति । एतेन देहनाशेऽप्यात्मनो नित्यत्वं सिद्धमेव । अतो धीरो धीमान् तत्र जननमरणविषये न मुह्यति । आत्मैव जातो मृतश्चेति न मन्यते । एतेन जननमरणे देहनिबन्धन एव न त्वात्मगत इत्युक्तं भवति । तस्मादात्मनो नित्यत्वमविशङ्कम् ॥१३॥

तत्क्षमा किमर्थेत्यत आह—

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ !
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥१५॥

यमिति । यं पुरुषं धैर्ययुक्तमवर्जनीयदुःखं सुखवन्मन्यमानममृतत्वसाधनतया स्ववर्णोचितम् । युद्धादिकर्म फलापेक्षावर्जं कुर्वाणं तदन्तर्गताः शस्त्रपातादिमृदुक्रूरस्पर्शाः न व्यथयन्ति, स एवामृतत्वं साधयति । न त्वादृशो दुःखसहिष्णुरित्यर्थः । आत्मनां नित्यत्वाच्छारीरदुःखं सोढव्यमित्याशयः ॥१५॥

यत्त्वात्मनां नित्यत्वं देहानामनित्यत्वं च गतासूनित्यादिनोक्तं तदुपपादयति—

नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥

नाऽसत इति । असतो देहस्य भावो नित्यत्वं न विद्यते । सतो जीवस्याभावो विनाशो न विद्यत इत्यर्थः । उभयोरपि देहात्मनोः तत्त्वदर्शिभिः तत्त्वज्ञैरन्तः निर्णयो दृष्टः । अत्रान्तशब्दो निर्णयार्थः ॥१६॥

आत्मनस्त्वविनाशित्वं कथं निर्णेयमित्यत आह—

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥१७॥

अविनाशीति । तदात्मतत्त्वमविनाशि तु अनश्वरमिति विद्धि । येनात्मतत्त्वेनेदमचेतनतत्त्वं सर्वं ततं व्याप्तं- निरतिशयसूक्ष्मत्वादात्मनः तस्य सर्वम-

---

नाऽसत इति । अत्र केचिदिमं श्लोकमसत्कार्यवादसाधकतया विवृण्वन्ति, तदसत्—सू· 'असदितिचेन्न प्रतिषेधमात्रत्वा'दित्याचार्येणासत्कार्यवादस्य निराकृतत्वात् । देहात्मस्वभावाज्ञानमोहितस्य तन्मोहशान्तये देहात्मनोर्नाशित्वानाशित्वमात्रस्यैव वक्तव्यत्वात् । अत एव 'गतासू'नित्यादिना प्रस्तुत्य 'अविनाशि तु तद्विद्धि, अन्तवन्त इमे देहा' इत्यन्तेन तस्यैवोपपादितत्वाच्च ॥

अविनाशीति । निरतिशयसूक्ष्मत्वादिति । सर्ववस्तुप्रवेशार्हत्वे कारणमिदम् । अन्ये तु 'येन सर्वमिदं तत'मिति जीवस्य विभुत्वप्रतिपादकं मन्यन्ते,

प्यचेतनं प्रवेशार्हमित्यर्थः । निरतिशयसूक्ष्मत्वेनैवात्मनो नाशानर्हत्वात्तदतिरिक्तः स्थूलः पदार्थः कश्चिदपि विनाशं कर्तुं नार्हति । तद्व्याप्यतया तदपेक्षया स्थूलत्वादित्यर्थः ॥१७॥

देवदत्तो मृत इत्यादिलोकव्यवहारस्य का गतिरित्याशङ्क्य देहविनाशेनागत इत्याह—

**अन्तवन्त इमे देहा नित्यस्योक्ताश्शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत! ॥१८॥**

**अन्तवन्त इति** । अनाशिनो नित्यस्याप्रमेयस्य चातिसूक्ष्मस्य च शरीरिणो जीवस्येमे देहाश्शरीराणि- दिह उपचय इति स्मृतेरुपचयरूपाः नित्यस्य देहिनः कर्मफलभोगार्थतया कर्मावसानविनाशित्वात् अन्तवन्तः अन्तो विनाशी एषामस्तीत्यन्तवन्तः । एवं देहिनो नित्यत्वाद्देहस्य नश्वरत्वाच्च, तस्माद्युद्धस्याविशेषफलत्वादित्यर्थः ॥१८॥

अथ हत-हन्तृभावस्य लोकसिद्धस्याविवेकिजनविषयत्वमवधारयत्यात्मनो नित्यत्वं दृढयितुं कठवचनेन—

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥१९॥**

**य एनमिति** । एनमुक्तविधमात्मानं प्रति हन्तारं हननहेतुकं वेत्ति मनुते; योऽपि हतं निहतं मनुते तावुभौ न विजानीतोऽविवेकिनावित्यर्थः ॥

---

तदसत्—सू- 'उत्क्रान्तिगत्यागतीना'मित्याचार्येण जीवाणुत्वस्य निर्धारितत्वेन तद्विरोधात्तद्व्याप्यतया तदपेक्षया स्थूलत्वादिति । तथाच नाशकं हि शस्त्रजलाग्निवाय्वादिकं नाश्यं व्याप्यं शिथिलीकुर्वद्दृष्टम् । सर्वतोऽप्यात्मन एव सूक्ष्मत्वेन व्यापकतया व्याप्यमितरदात्मानं नाशयितुमनलमित्याशयः ॥१७॥

अन्तवन्त इति, कर्मफलेति । 'पुण्यः पुण्ये'नेति शास्त्रादित्यर्थः । युद्धस्याविशेषफलत्वादिति । युद्धाभावेऽपि देहानां नश्वरत्वाद्युद्धकरणेऽपि देहिनो नित्यत्वाच्चेति भावः ॥१८॥

य एनमिति । अविवेकिनामिति । उक्तैर्हेतुभिरात्मनो नित्यत्वादे-

कस्मादयमात्मा हननक्रियायाः कर्ता कर्म च न भवतीत्याशङ्क्याऽविक्रियत्वादित्याह द्वितीयेन मन्त्रेण—

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यश्शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥२०॥

न जायत इति । न जायते नोत्पद्यते न म्रियते वा-- न विनश्यतीत्यर्थः । सर्वैरप्यनुभूयमाने जननमरणे नात्मनस्सम्भवत इत्याशयः । तदेवोपपादयति—नायं भूत्वेत्यादिना । अयमात्मा भूत्वा प्राक्कल्पादावित्यर्थः । भूयः पुनरपि कल्पान्त इत्यर्थः । न भविता न, किंतु सर्वदा भवत्येवेत्यर्थः । अतोऽयमात्मा- अज उत्पत्तिरहितो नित्यो मृतिरहित इत्यर्थः । शाश्वतश्शश्वत्सर्वदा भवतीत्यर्थः । पुराणः पुरापि नव एकरूप इत्यर्थः । एवं षड्भावविकाररहितत्वात् शरीरे हन्यमाने वध्यमानेऽपि न हन्यते हन्तुं न शक्यत इत्यर्थः ॥२०॥

उक्तमर्थमुपसंहरति—

वेदाऽविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ! कं घातयति हन्ति कम् ॥२१॥

वेदेति । य एनमात्मानमजमव्ययं जनिमृतिरहितं, अत एवाविनाशिनं नाशार्हं नित्यं वेद बुद्ध्यते स पुरुषो विद्वान् कं तिर्यङ्मानवादिशरीरेषु स्थितं कमात्मानं हन्ति नाशयति ? कथं केन साधनेन हन्ति घातयति ? तथा स्वयं प्रयोजको भूत्वाऽन्येन कं कथं घातयति ? एवमात्मनो नित्यत्वोपपादनेनात्मनो घातयामि हन्मीति चानुशोचनमात्मस्वरूपाज्ञानमूलमेवेत्याकूतम् । अत्र केचित्- कं घातयति हन्ति कमित्यनेनात्मनः कर्तृत्वकारयितृत्वे प्रतिषिद्ध्येते इति निगदन्ति, तदसत्- श्रुतिसूत्रविरोधात् ॥२१॥

---

वायं हननहेतुर्न भवति । अत एव चात्मानं मन्यत इत्यर्थः । नन्वेवं 'न हिंस्याद्भूतानि, ब्राह्मणो न हन्तव्य' इत्यादीनि शास्त्राण्यविषयाणि भवेयुरिति चेन्न, तेषां शरीरवियोगकरणविषयत्वात् ॥१९॥

वेदेति, श्रुतिसूत्रविरोधादिति । तथाहि 'यजेत जुहुया'दित्यादि-

ननु यद्यपि शास्त्रादिभिर्नित्यानामात्मनां शरीरविश्लेषमात्रमेव सम्पाद्यते, तथापि भोगसाधनेषु शरीरेषु नश्यत्सु तद्वियोगमूलश्शोकस्सम्भवत्येवेत्याशङ्क्याह--

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥२२॥**

**वासांसीति** । यथा वासांसि विहाय त्यक्त्वा नवान्यपराणि गृह्णाति, तथा जीर्णानि वयसा तपसा च शिथिलानि विहाय नवान्यन्यानि शरीराणि संयाति सम्प्राप्नोतीत्यर्थः । एवं च युद्धस्य शरीरवियोगहेतुत्वेऽपि विद्यमानात्कल्याण-तरदेवादिशरीरान्तरप्राप्तिसाधनत्वेन विनूतनपट्टवसनधारणे प्राप्ते जीर्णाम्बरत्यागस्येव पूर्वदेहत्यागस्य शोकहेतुत्वं न साम्प्रतमित्युक्तं भवति ॥२२॥

ननु गृहदाहे तदन्तर्वर्तिनः पुरुषस्येव शरीरनाशे तद्वर्तिन आत्मनः कथं नाशाभाव इत्याशङ्क्य प्रतिज्ञातमात्मनो नित्यत्वं स्थिरीकरोति—

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२३॥**

**नैनमिति** । शस्त्राणि खड्गादीन्येनमात्मानं न छिन्दन्ति द्विधा कर्तुं न शक्नुवन्तीत्यर्थः । पावकोऽग्निरेनं न दहति भस्मीकर्तुं न शक्नोति । आपो जलानि न क्लेदयन्ति विश्लिष्टावयवं कर्तुं न शक्नुवन्ति । मारुतो वायुर्न शोषयति शुष्कं कर्तुं न क्षमते । तस्मादात्मा नित्यो निर्विकारश्चेत्यर्थः ॥२३॥

आत्मनश्शस्त्रादिजन्यमाननाशानर्हत्वे कारणं व्यनक्ति—

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।**
**नित्यस्सर्वगतस्स्थाणुरचलोऽयं सनातनः ॥२४॥**

**अच्छेद्य इति** । शस्त्राग्न्यम्बुवायुभिरात्मनच्छेददाहक्लेदशोषाविषयत्वे

---

श्रुतिभिः, 'कर्ता शास्त्रार्थवत्त्वा'दिति सूत्रैश्चात्मनः कर्तृत्वस्य निर्धारितत्वात् । तस्माद्युध्यस्व भारतेत्युत्तरग्रन्थविरोधाच्चेत्यनुसन्धेयम् । अधिकं तु जीवकर्तृत्व-परिष्कार इति नेह ॥२१॥

**वासांसीति, कल्याणतरेति** । 'अन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा, गान्धर्वं वा, दैवं प्राजापत्यं वा' इत्यादिश्रुतेरिति भावः ॥२२॥

**अच्छेद्य इति** । तदप्यच्छेद्यत्वादौ मूलमित्यात्मनोऽतिसूक्ष्मत्वात्सर्व-

नित्यत्वादय आत्मधर्मा एव कारणमित्यर्थः। अत्र सर्वगतत्वं च सर्वतत्त्वव्यापनस्वभावत्वं तदप्यच्छेद्यत्वादौ मूलमित्यर्थः। ये तु सर्वगतत्वं विभुत्वमभिमन्यते ते श्रुतिसूत्रैः पराहन्यन्ते ॥२४॥

अथ उक्तमर्थं विस्पष्टयति—

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥२५॥

अव्यक्त इति। अव्यक्तः प्रत्यक्षप्रमाणाविषयोऽचिन्त्योऽनुमानागोचरश्च, अविकार्यश्छेदनादिविकरणसाधनास्पृश्य इत्यर्थः। एवमच्छेद्यत्वादिलक्षणं विदित्वा तत्कृतेऽनुशोचितुं नार्हसीत्यन्वयः ॥२५॥

एवमात्मनोऽनित्यत्वपक्षे तस्याशोच्यत्वमुपपाद्य तस्यानित्यपक्षमभ्युपेत्याप्यशोच्यत्वं समर्थयते—

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो ! नैनं शोचितुमर्हसि ॥२६॥

अथेति। अथ चात्मनोऽनित्यत्वपक्षेऽप्येनमात्मानं नित्यजातं नित्यं जातं नित्यं सदा मृतं म्रियमाणं मन्यसे वा बुध्यसे वा ? तथाऽप्येवमपि महाबाहो ! पुरुषधौरेय ! त्वं शोचितुं हन्तुं स्वजनमुद्यता इत्यादिनाऽनुशोचितुं नार्हसि। परिणामस्वभावस्य देहस्योत्पत्तिविनाशयोरवर्जनीयत्वादिति भावः ॥२६॥

नन्वात्मनो नित्यत्वपक्षेपि दृष्टादृष्टदुःखसम्भवात्तद्भयेन शोचामीत्याशङ्क्याह—

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥२७॥

जातस्येति। जातस्योत्पन्नस्य ध्रुवो नित्यो मृत्युः, जन्मोत्पत्तिर्ध्रुव-

---

तत्त्वव्यापनस्वभावत्वं सिद्धम्। छेदनदाहक्लेदादीनां तु व्याप्यकार्यतया तदपि विषयत्वमात्मनस्सिद्धमित्याशयः। श्रुतिसूत्रैः पराहन्यन्त इति अविनाशित्विति श्लोकविवरणे निगदितमिति नेह ॥२४॥

अथेति, अनित्यत्वपक्षेपीति। देहात्मवादपक्षे क्षणिकत्वपक्षेऽपीत्यर्थः। पुरुषधौरेयेति। चार्वाकादिकुमतपक्षाभ्युपगमवतां चोपहासद्योतकमित्यर्थः ॥

मवर्जनीयम् । तस्मादुत्पत्तिविनाशयोरवर्जनीयत्वात्त्वमेवं विद्वानपरिहार्येऽर्थे परिहर्तुमशक्ये जनिमृतिविषये ॥२७॥

एवमात्मनोऽशोच्यत्वमुपपाद्याथ देहस्वभावपर्यालोचनयाऽप्यात्मनो जननमरणविषये शोको न कार्य इति ब्रवीति—

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ! ।
अव्यक्तनिधनान्येव तत्र का परिवेदना ॥२८॥

अव्यक्तादीनीति । भूतानि प्राणिनोऽव्यक्तं प्रधानमादिरुत्पत्तिः पूर्वरूपं येषां तानीत्यर्थः । व्यक्तमभिव्यक्तं मध्यं जनिमृतिमध्यावस्था येषामव्यक्तं प्रधानं निधनं लयो येषां तानि तेषु तथाविधेषु विषये परिवेदनाऽनुशोचनं काऽनुचितमित्यर्थः ॥२८॥

ननु भवताऽऽत्मा नित्यो निर्विकार इत्युच्यते- यद्येवंविध आत्मा तर्हि न कथं सर्वैर्विज्ञायत इत्याशङ्क्यात्मा दुर्विज्ञेय इत्याह —

आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यश्शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥२९॥

आश्चर्यवदिति । एनमुक्तविधमात्मानं समस्तविलक्षणमित्यर्थः । आश्चर्यवदद्भुतमिव कश्चिदनन्तेषु प्राणिषु प्रक्षीणपापः, कोऽप्येव पश्यति जानाति । तथैव तथाविधोऽन्यः कश्चित्परस्मा उपदिशति । एनमात्मानं कश्चिदेव यः कोऽप्येवाश्चर्यवदेन शृणोति मनुते । श्रुत्वाऽप्याकर्ण्यापि कश्चित्कोऽप्येनमात्मानं न वेद, न बुबुधे । चकारेण द्रष्टृवक्तृश्रोतृष्वपि तत्त्वतो दर्शनं, तत्त्वतो निर्वचनं, तत्त्वतश्श्रवणं च दुर्लभमित्यर्थः ॥२९॥

उक्तमर्थमुपसंहरति—

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ! ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥३०॥

देहीति । सर्वस्य देहादिप्राणिमात्रस्य देहे वध्यमानेऽपि शरीरेऽयं

---

जातस्येति, उत्पन्नस्येति । स्वीयधर्माधर्मलब्धशरीरसम्बन्धस्येत्यर्थः । विनाश इति । प्रारब्धकर्मक्षयमूलश्शरीरवियोगः ॥२७॥

नित्यो निर्विकारश्च; देही आत्माऽवध्यो वध्यो न भवतीति। नित्यं नियतं तस्मादात्मनोऽविनाश्यत्वाद्देहविनाशस्यापरिहार्यत्वाच्च सर्वाणि भूतानि न तु भीष्मादीन्प्रत्येव। किं तु सर्वभूतान्युद्दिश्यापि त्वं विद्वान् शोचितुं नार्हसि, अनुशोचनं न युज्यत इत्यर्थः ॥३०॥

ननु यद्यप्यात्माऽवध्य एव, तथापि बहुजनमरणमूलं युद्धं मम न रोचत इत्याशङ्क्याह—

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥३१॥

स्वधर्ममिति। स्वधर्ममपि क्षत्रियजातिधर्ममप्यवेक्ष्य समालोच्याविकम्पितुं 'वेपथुश्च शरीरे मे जायत' इत्याद्युक्तरीत्या प्रचलितुं नार्हसि न युक्तोऽसि। एतेन 'अहो बत! महत्पापं कर्तुं व्यवसिता वय'मिति, तथा 'न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहव' इत्युक्तं न युज्यत इत्याशयः। धर्म्याद्धि यस्मादपराङ्मुखत्वधर्मयुक्ताद्युद्धादन्यच्छ्रेयः क्षत्रियस्य क्षत्रजातिपुरुषस्य न विद्यते न दृश्यते। एवं च प्रारब्धाद्युद्धाद्वैमुख्यं न युज्यत इति भावः ॥३१॥

महति श्रेयसि स्वयमेवोपगते कुतो विकम्पसीत्याह—

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।
सुखिनः क्षत्रियाः पार्थ! लभन्ते युद्धमीदृशम् ॥३२॥

यदृच्छयेति। यदृच्छयाऽयत्नेनोपपन्नं सम्प्राप्तं जये सत्कीर्तिराज्यलाभकरमित्यर्थः। अथापजयेऽप्यपावृतं विवृतं स्वर्गद्वारं स्वर्गप्राप्तिकरं सर्वथापि

---

स्वधर्ममिति, क्षत्रियजातिधर्ममिति। तदुक्तं पराशरेण- 'क्षत्रियो हि प्रजा रक्षन् शस्त्रपाणिः प्रदण्डवान्। निर्जित्य परसैन्यानि क्षितिं धर्मेण पालये'दिति। मनुनापि- 'संग्रामेष्वनिवर्तित्वं प्रजानां चैव पालनम्। शुश्रूषा ब्राह्मणानां च राज्ञश्श्रेयस्करं पर'मिति ॥३१॥

यदृच्छयेति, स्वर्गप्राप्तिकरमिति। तदुक्तं मनुना- 'आहवेषु

सुखकरमित्यर्थः । सुखिनः पुण्यशालिनः क्षत्रिया ईदृशं भीष्मद्रोणादिमहावीर-पुरुषाधिष्ठितं युद्धं संग्रामं लभन्ते प्राप्नुवन्ति ॥३२॥

ननु नाहं युद्धफलकामः 'न कांक्षे विजयं कृष्ण, अपि त्रैलोक्यराज्यस्य' इत्युक्तत्वात्कथं कर्तव्यं मयेत्याशङ्क्य विपक्षे दोषमाह—

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततस्स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥३३॥

अथ चेदिति । अथ पक्षान्तरे धर्म्यं क्षत्रियस्य स्वधर्मभूतं धर्मादनपेतं चारब्धं संग्रामं न करिष्यसिचेद्यदि नाकरिष्यसि तर्हि स्वधर्मं कीर्तिं यशश्च हित्वा पाप(मघ)मकीर्तिं चेत्यर्थः । एवं च कीर्तिधर्मयोरिष्टयोरप्राप्तिः, अनिष्टस्य पापस्य प्राप्तिश्च तव सम्भवेदित्यर्थः ॥३३॥

धर्मपरित्यागेन केवलं नित्यसुखकीर्तिहानिः, किं तु अपयशश्चेत्याह—

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥३४॥

अकीर्तिमिति । भूतानि देवर्षिमनुष्यादीनि ते तवाव्ययां शाश्वती-मकीर्तिं पार्थो युद्धे पलायामासेति कथयिष्यन्ति । इष्टापत्तिरित्याशङ्क्याह—सम्भावितस्येति । शौर्यवीर्यादिभिस्सम्मानितस्याकीर्तिरयशो मरणान्मृतेर-प्यतिरिच्यते । तस्मादेवंविधाया अकीर्तेर्युद्धमरणमेव शोभत इत्याशयः ॥३४॥

---

मिथोऽन्योन्यं जिघांसन्तो महीक्षितः । युद्ध्यमानाः परं शक्त्या स्वर्गं यान्त्यप-राङ्मुखा' इति ॥३२॥

अथ चेदिति, धर्मादनपेतं चेति । तदुक्तं मनुना- 'न कूटैरायुधैर्हन्या-द्युध्यमानो रणे रिपून् । न कर्णिभिर्नापदग्धैर्नाग्निज्वलिततेजसैः ॥ न च हन्या-त्स्थलारूढं न क्लीबं न कृताञ्जलिम् । न मुक्तकेशं नाऽऽसीनं न तवास्मीति वादिनम् ॥ न सुप्तं न विपन्नाऽहं न नग्नं न निरायुधम् । नायुध्यमानं पश्यन्तं न परेण समागतम् ॥ नायुधव्यसनप्राप्तं नार्तं नातिपरिक्षतम् । न भीतं न परावृत्तं सतां धर्ममनुस्मर'न्निति ॥३३॥

बन्धुस्नेहात्कारुण्याच्च संग्रामान्निवृत्तस्य शूरस्य मम कथमकीर्तिरित्याशङ्क्याह—

भयाद्रणादुपरतं मन्यन्ते त्वां महारथाः ।
एषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥

भयादिति । भयात्कर्णादिभ्यो भयाद्रणादुपरतं युद्धान्निवृत्तं, नतु कौरवेषु कारुण्यादित्याशयः । मन्यन्ते मन्येरन्नित्यर्थः । एषां च भीष्मद्रोणादीनामेव बहुमतो बहूकृतो भूत्वा लाघवमनादरं यास्यसि प्राप्स्यसि । शूराणां किल बन्धुस्नेहादिना संग्रामवैमुख्यं नोपपद्यते । अतो भयहेतुकमित्येव महारथा भावयेयुरित्याशयः ॥३५॥

महारथा न बहुमन्यन्तां, शत्रवस्तु मां बहूकरिष्यन्ति मम युद्धनिवृत्तेस्तेषां श्रेयस्करत्वादित्याशङ्क्याह—

अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥३६॥

अवाच्येति । अवाच्यवादान्नीचवचांसि वदिष्यन्ति प्रकटयिष्यन्तीत्यर्थः । अहिताश्शूरैरस्माभिर्योद्धुं पार्थः कथं शक्नुयादित्यादिना दुर्योधनादयः । ततस्तस्माद्दुःखतरमधिकदुःखं किं किमपि नास्तीत्यर्थः ॥३६॥

नन्वेवं युद्धे प्रवृत्तौ गुर्वादिवधवशान्मध्यस्था निन्देयुः; तन्निवृत्तौ रिपवोऽनिन्देयुः; ततः किं कर्तव्यमित्यत आह—

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय ! युद्धाय कृतनिश्चयः ॥३७॥

हतो वेति । हतो वा धर्मयुद्धे परैर्निहतश्चेत्स्वर्गं प्राप्स्यसि परमनिश्श्रेयसं लभिष्यसीत्यर्थः । युद्धस्य स्वधर्मत्वेन तस्य मोक्षहेतुत्वादित्यर्थः । जित्वा वा शत्रून् विजित्य तु महीं भोक्ष्यसे राज्यसुखमवाप्स्यसि । एवमुभयथा च लाभाद्यशो वा मृत्युर्वेति युद्धाय कृतनिश्चयः, नतु पूर्वमिवोपक्रमोपरममाणो हासावहत्वात् । एतेन 'न चैतद्विद्मः कतरन्नो गरीय' इति प्रश्नो दत्तोत्तरः ॥३७॥

ननु मुमुक्षुणा रागद्वेषादिद्वन्द्वदोषविषयं युद्धं कथमनुष्ठेयमित्याह—

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥३८॥

सुखदुःख इति । सुखदुःखे कष्टसुखे, लाभालाभौ लाभनष्टौ, जयाजयौ जयापजयौ च समे कृत्वा तुल्यतया भावयित्वा युद्धाय स्वधर्मानुष्ठानाय युज्यस्व सन्नद्धो भव । एवं संग्राममूलसुखदुःखजयापजयलाभालाभेषु तुल्यमिति स्वधर्मं परमेश्वराराधनबुद्ध्या समाचरसे यदि पापं संसारं नावाप्स्यसि; परमेश्वरप्रसादात् मोक्षमेव लभिष्यस इत्यर्थः ॥३८॥

एवमात्मस्वरूपमुपदिश्य ततो मोक्षसाधनभूतं निष्कामकर्मयोगं वक्तुमुपक्रमते—

एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ ! कर्मबन्धं प्रहास्यसि ॥३९॥

एषेति । सङ्ख्या बुद्धिः तया निश्चेयमात्मतत्त्वं साङ्ख्यं, विज्ञेये आत्मतत्त्वे तद्वेदनाय या बुद्धिर्योगः, एषा 'नत्वेवाहमित्यारभ्य, तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसी'त्यन्तेन अभिहिता सम्यगुपपादिता । इदानीं तु योगे आत्मज्ञानपूर्वकमोक्षसाधनभूतकर्मानुष्ठाने इमां बुद्धिं शृणु ! अवधानेन गृहाण । इह योगशब्देन ज्ञानपूर्वकनिष्कामकर्मानुष्ठानमेव उच्यते- 'दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय'येति वक्ष्यमाणत्वात् ॥३९॥

वक्ष्यमाणस्य ज्ञानपूर्वकस्य कर्मणो महिमानमाह—

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥४०॥

नेहेति । इह कर्मयोगे अभिक्रमनाशोऽभिक्रमस्यारम्भस्यारब्धकर्मणः

---

सुखदुःख इति, परमेश्वराराधनबुद्ध्येति । वर्णाश्रमधर्मबोधिकानां श्रुतीनां परमेश्वराज्ञारूपत्वेन तेषां परमेश्वराराधनबुद्ध्या समाचरणं परमेश्वरप्रसादद्वारा मोक्षसाधनमित्याशयः ॥३८॥

असमाप्तस्य नाशे विच्छेदे प्रत्यवायः निष्फलत्वं न विद्यते । अस्य कर्मयोगाख्य-धर्मस्य स्वल्पमपि अल्पांशोऽपि महतो भयात्संसारभयात् त्रायते । अयमर्थः— 'पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते' इत्यत्र स्पष्टीक्रियते । अन्यानि च लौकिकानि वैदिकानि च कर्माणि विच्छिन्नानि निष्फलान्येव भवन्ति । अयं तु न तथाविध इति भावः ॥४०॥

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ! ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥४१॥

व्यवसायेति । व्यवसायात्मिका व्यवसायो निश्चयः- परमेश्वराराधनेनैव संसारं तरिष्यामीति निश्चयरूपा बुद्धिः, एका एकनिष्ठैव । इह निष्कामकर्मणि अव्यवसायिनामेवंविधनिश्चयरहितानां बुद्धयः काम्यबुद्धयो बहुशाखाः स्वर्गे पुत्रपश्वन्नादिविषयाः, अनन्ताः अपरिमिताः, बुद्धयः काम्यबुद्धयः, अव्यवसायिना-मेवंविधनिश्चयरहितानाम् । एवं च परमेश्वराराधनबुद्ध्या समनुष्ठीयमानं निष्काम-कर्मैव संसारभयनिवर्तकम् । काम्यकर्माणि तु संसारभयप्रदानीत्याशयः ॥४१॥

कामिनां व्यवसायात्मिकबुद्ध्यनुत्पत्तिकारणमाह त्रिभिः—

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ ! नान्यदस्तीति वादिनः ॥४२॥
कामात्मानस्स्वर्गपराः जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥४३॥
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिस्समाधौ न विधीयते ॥४४॥

यामित्यादि । इमां वेदविहितत्वेन प्रसिद्धां पुष्पितामापातरमणीयां जन्मकर्मफलप्रदां जन्माधीनं कर्म कर्माधीनं जन्म च । एवमविश्रान्ततदुभय-रूपफलप्रदामित्यर्थः । भोगैश्वर्यगतिंप्रति सुधास्वादादिभोगं स्वर्गाधिपत्याद्यैश्वर्यं च समुद्दिश्य क्रियाविशेषबहुलामग्निहोत्रादिविविधकर्मप्रचुरामेवंविधां वाचं प्रवदन्ति प्रकृष्टामभिमन्यते। ते कीदृशा वेदवादरताः, वेदेषु ये वादा अर्थवादाः 'अक्षय्यगँ ह वै चातुर्मास्ययाजिनस्सुकृतं भवति, हिरण्मया अमृतत्वं लभन्त' इत्यादयस्तेषु

रतास्सन्तः । अन्यदितःपरममृतत्वं नास्तीति वादिनः- 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना'मित्यादिज्ञानकाण्डाभावं ब्रुवन्तः ।

कामात्मानः कामा आत्मनि चेतसि येषां तथाविधाः कामपरा इत्यर्थः । स्वर्गपरास्स्वर्गभोगायत्तचित्ताः । एवं भोगैश्वर्यप्रसक्तानां भोगैश्वर्यप्रवीणानां, तया भोगैश्वर्यवाञ्छयाऽपहृतं चेतो येषां तेषां समाधौ चेतसि व्यवसायात्मिका केवलमोक्षफलप्रदा निष्कामकर्मानुष्ठानविषया बुद्धिर्न विधीयते न रोचत इत्यन्वयः । एवं च कामिनां चित्तशुद्ध्यभावान्मोक्षप्रदनिष्कामकर्मणि प्रवृत्तिर्न सम्भवतीत्युक्तं भवति । एतेन मुमुक्षूणां भोगैश्वर्यद्वारा विविधजन्ममूलं सकामकर्म वर्ज्यमित्याकूतम् ॥४२-४४॥

ननु यद्येवमग्निहोत्रादिफलं स्वर्गादिकं पदमनिश्श्रेयसरूपं, तर्हि सर्वप्रमाणमूर्धन्यो वेदः किमिति कर्माणि विदधातीत्यत आह—

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ! ।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥४५॥**

त्रैगुण्येति । वेदास्त्रयो गुणास्सत्त्वरजस्तमांसि त्रैगुण्यम् । अत्र सत्त्वादिगुणप्रधानपुरुषास्त्रैगुण्यपदाभिधेयास्तद्विषयास्तानधिकृत्य प्रवर्तन्त इत्यर्थः । अर्जुन ! त्वं तु निस्त्रैगुण्यो रजस्तमसी वर्जयित्वा सत्त्वमात्रप्रधानो भव । एवं सत्त्वप्रधानलक्षणमाह—निर्द्वन्द्व इत्यादिना । निर्द्वन्द्वः- निर्गतसुखदुःखादिद्वन्द्वदोषः, नित्यसत्त्वस्थः- केवलसत्त्वनिष्ठः, निर्योगक्षेमः- अप्राप्तस्य प्राप्तिर्योगः, प्राप्तस्य परिरक्षणं क्षेमः; एतदुभयभारमपि परमेश्वरे निवेश्य निर्विचारतयाऽऽत्मवान् स्वायत्तचित्तः परमेश्वरध्यानाधीनचेता वा भवेत्यर्थः ॥४५॥

ननु परमप्रमाणतयोपादेयवचनेषु वेदेषु मोक्षसाधकं निष्कामकर्ममात्रमेकं परिगृह्य तदितरदनेकं काम्यकर्म कथं वर्जनीयमित्यत आह—

**यावानर्थ उदपाने सर्वतस्सम्प्लुतोदके ।**
**तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥४६॥**

यावानिति । सर्वतस्सम्प्लुतोदके विस्तृतजलकलिते उदपाने उदकं

---

त्रैगुण्येति, तानधिकृत्य प्रवर्तन्त इति । सत्त्वप्रधानान्मोक्षाधिकारेण उद्दिश्य निष्कामकर्म, सकामानुद्दिश्य काम्यं कर्म च विदधत इत्यर्थः ॥४५॥

पीयतेऽस्मिन्नित्युदपानं तटाकादिस्तस्मिन् यावानर्थः पिपासोर्यावदेव प्रयोजनं तावदेव तेनोपादीयते । एवमेव सर्वेषु च वेदेषु ब्राह्मणस्य वैदिकस्य विजानतो मुमुक्षोस्तावान् मोक्षसाधनभूतं निष्कामकर्मैव भवत्युपादेयमित्यर्थः ॥

मुमुक्षोरेतावदेवोपादेयमित्याह—

**कर्मण्येवाऽधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥४७॥**

कर्मण्येवेति । कर्मण्येव नित्यनैमित्तिकरूपे कर्ममात्रेऽधिकारो योग्यता विद्यत इत्यर्थः । ते मुमुक्षोरेवकारेण किं व्यावर्त्यत इत्याह—मा फलेष्विति । फलेषु कर्मफलभूतेषु स्वर्गादिषु तु कदाचन सर्वदाऽपीत्यर्थः । माऽधिकारो न विद्यत इत्यर्थः । तस्मात्कर्मफलहेतुः- एवं च फलस्य बन्धहेतुत्वात्, फलाभिसन्धिरहितस्य परमेश्वराराधनरूपस्य कर्मणो मोक्षहेतुत्वाच्च कर्मफलहेतुः कर्मफलस्य हेतुरुत्पादको माभूः । ननु फलाभिसन्धिरहितेन कर्मणा किं समनुष्ठितेन ? अत एव न योत्स्यामीत्युक्तमित्यत आह—अकर्मणीति । अननुष्ठाने सर्वकर्मसन्न्यासे सङ्ग आसक्तिस्तव मास्तु न स्यादित्यर्थः । एवमुक्तरीत्या युद्धादौ कर्मण्येव ते सङ्गोऽस्त्वित्याशयः ॥४७॥

एतदेव विस्पष्टयति—

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ! ।**
**सिद्ध्यसिद्ध्योस्समो भूत्वा समत्वं योग उच्यते ॥४८॥**

योगस्थ इति । योगस्थो बन्धुराज्यादिषु संत्यक्तसङ्गः कुरु आचर । कर्माणि युद्धादीनि सिद्ध्यसिद्ध्योस्समो भूत्वा जयसिद्धौ हर्षं, तदसिद्धौ विषादं च वर्जयित्वेत्यर्थः । समत्वं निर्विकारत्वं योग इत्युच्यत इत्यर्थः ॥४८॥

काम्यकर्मणो निकृष्टतां स्पष्टयति—

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ! ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥४९॥**

दूरेणेति । दूरेणात्यन्तमवरं निकृष्टं कर्म, तदन्यत्सकामकर्मेत्यर्थः ।

---

दूरेणेति, ज्ञानपूर्वकत्वात्कर्मयोगादिति । अत एव श्रु- 'यो वा एत-

बुद्धियोगाद् ज्ञानपूर्वकात्कर्मयोगात् ज्ञानयुक्तस्य कर्मणो मुक्तिमूलतया तस्य वैशिष्ट्यमित्याशयः । तस्मात्काम्यकर्मणस्संसारहेतुत्वाद् बुद्धौ ज्ञानपूर्वके निष्कामकर्मणि शरणं निष्ठामन्विच्छाङ्गीकुरु । फलहेतवः फलाभिलाषेण कर्माचरणपराः कृपणा दीनाः । संसारबन्धत्वादिति भावः ॥४९॥

ज्ञानपूर्वकं कर्मयोगं प्रशंसति—

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥५०॥**

**बुद्धीति** । बुद्धियुक्तो ज्ञानपूर्वकनिष्कामकर्मनिष्ठः सुकृतदुष्कृते पुण्यपापे उभेऽपि जहाति- 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपै'तीति श्रुतेर्विमुक्तो भवतीत्यर्थः । तस्मान्निष्कामकर्मणः परमेश्वराराधनबुद्ध्याऽनुष्ठितस्य मुक्तिहेतुत्वादित्यर्थः । योगाय निष्कामकर्मयोगाय, अथ वा समत्वाय तस्य मोक्षहेतुत्वस्योपपादितत्वाद्युज्यस्व समाहितो भव । तत्र हेतुमाह—**योग इति** । कर्मसु कृत्येषु योगो निर्विकारत्वं कौशलं निपुणकृत्यं । तस्य शोकमोहविनाशकत्वान्मुक्तिहेतुत्वाच्चेति भावः ॥५०॥

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥५१॥**

**कर्मजमिति** । बुद्धियुक्ता निष्कामकर्मपरा मनीषिणो विद्वांसः कर्मजमग्निष्टोमादिनिष्पाद्यं फलं स्वर्गादिकं त्यक्त्वा जन्मबन्धविनिर्मुक्ता भवपाशरहिता अनामयं निरतिशयसुखं पदं ब्रह्म गच्छन्ति प्राप्नुवन्ति । निष्कामकर्मपरा विमुक्ता भवन्तीत्याशयः ॥५१॥

---

दक्षरं गार्ग्यविदित्वाऽस्मिन्लोके जुहोति यजति तपस्तप्यते बहूनि वर्षसहस्राणि तदेवास्य तद्भवति यदिह अनेवंविन्महत्पुण्यं करोति तदा स्वान्ते तेऽक्षीयते एवमात्मानमेव लोकमुपासीत, स य आत्मानमेव लोकमुपास्ते नास्य कर्म क्षीयत' इत्यादिना विद्यारहितकेवलकर्मणः क्षयिष्णुत्वं, विद्यायुक्तकर्मफलस्याक्षय्यत्वं चाम्नातं सङ्गच्छते ॥४९॥

**कर्मजमिति, ब्रह्मेति** । श्रु- 'तत्ते पदं संग्रहेण ब्रवी'मीत्यादौ पदशब्दस्य ब्रह्मपरत्वाम्नानादित्याशयः ॥५१॥

ननु भक्ता परमेश्वराराधनबुद्ध्या निष्कामकर्म कुर्वतो मोक्षरूपफल-मुक्तं, कर्मफले विरक्तिसिद्धिमन्तरेण निष्कामकर्माचरणं न सम्भवति। तस्माद्विरक्तिः कदा सम्भविष्यतीत्यत आह—

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥५२॥**

**यदेति।** ते बुद्धिर्यदा यस्मिन् काले मोहकलिलमनित्येषु कर्मफलेषु नित्यत्वव्यामोहं व्यतितरिष्यति विशेषेण परित्यक्ष्यति तदा तस्मिन् काले श्रोतव्यस्य श्रुतस्य च कर्मफलस्य कर्मफलविषये निर्वेदं विरक्तिं गन्तासि प्राप्स्यसि। कर्मफलेऽनित्यत्वनिश्चयेन तत्र विरक्तिमधिगमिष्यसीति भावः ॥५२॥

कदा ज्ञाननिष्ठा सिध्यतीत्यत आह—

**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥५३॥**

**समाधाविति।** श्रुतिविप्रतिपन्ना श्रुत्या वेदान्तवाक्यतात्पर्यनिर्णयरूप-श्रवणेन विप्रतिपन्ना विशिष्य प्रतिपन्ना सकलेतरवस्तुविलक्षणपरतत्त्वविषया बुद्धिस्समाधौ समाधीयते चित्तमस्मिन्निति समाधिः परमेश्वरस्तस्मिन्नचलाऽभ्यास-पाटवेन तत्रैव स्थिरा स्थास्यति, तदा योगं परमेश्वरसाक्षात्कारसाधनभूतध्यान-योगमवाप्स्यसि लभिष्यसे ॥५३॥

एवमुक्ते ज्ञाननिष्ठारूपस्थितप्रज्ञलक्षणादिकं पृच्छति—

**अर्जुन उवाच—**

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव!**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥५४॥**

**स्थितप्रज्ञस्येति।** केशव कृष्ण! समाधिस्थस्य परमेश्वरनिष्ठस्य स्थितप्रज्ञस्य स्थितप्रज्ञताख्यज्ञाननिष्ठाविशिष्टस्य स्थिता निश्चला परमेश्वरान्तर्यामि-

---

**यदेति।** अनित्यत्वनिश्चयेनेति। 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतःकृते'नेति श्रुत्या कर्मफलानित्यत्वबुद्धेरेव तद्विषयविरक्तिहेतुत्वावगमादित्याशयः ॥५२॥

कोऽहमिति प्रज्ञा धीर्यस्य स इत्यर्थः । तस्य भाषा भाष्यतेऽनयेति भाषा लक्षणम् । केन लक्षणेन स्थितप्रज्ञ इति व्यवह्रियत इत्यर्थः । अथ स्थितधीः स्थितप्रज्ञः किं कथं भाषेत ? किं कथमासीत ? किं व्रजेत ? स्थितप्रज्ञस्य किं लक्षणम् ? स हि भाषणमुपवेशनं गमनं च कथं कुर्यादित्याशयः ॥५४॥

प्रश्नानामेषां चतुर्णामुत्तरं क्रमेणोवाचाऽऽध्यायपरिसमाप्ति—

श्रीभगवानुवाच—

प्रजहाति यदा कामान् सर्वान्पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टस्स्थितप्रज्ञस्तदोच्यते ॥५५॥

प्रजहातीति । मनोगतान्मनसि स्थितान्सर्वान्प्रमाणाविपर्ययादिशब्दिता-न्कामान् वृत्तिविशेषान् यदा प्रजहाति- प्रकर्षेण परित्यजति । तत्र हेतुः-- आत्मनि परमेश्वर एव आत्मना स्वयमेव तुष्ट आत्मारामस्सन्नित्यर्थः । तदा तेन लक्षणेनेत्यर्थः । स्थितप्रज्ञ इत्युच्यत इत्यर्थः ॥५५॥

दुःखेष्वनुद्विग्नमनास्सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधस्स्थितधीर्मुनिरुच्यते ॥५६॥

दुःखेष्विति । दुःखेषु त्रिविधेष्वनुद्विग्नमना अनुद्विग्नमव्याकुलं मनो यस्य तथाविधः, सुखेषु भोगेषु विगतस्पृहो वाञ्छारहित इत्यर्थः । वीतरागभय-क्रोधो रागद्वेषादिरहितः, मुनिः परतत्त्वमननशीलः, स्थितधीस्स्थितप्रज्ञ इत्युच्यत इत्याशयः ॥५६॥

यस्सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥

य इति । यो मुनिस्सर्वत्र पुत्रमित्रादिष्वनभिस्नेहः प्रेमपाशरहितः ।

---

दुःखेष्विति, त्रिविधेष्विति । आध्यात्मिकाधिदैविकाधिभौतिके-ष्वित्यर्थः । स्थितप्रज्ञ इति । उक्तश्लोकद्वयेन स्थितप्रज्ञस्य लक्षणमुक्तमि-त्याशयः ॥५६॥

य इति, पुत्रमित्रादिष्विति । परमेश्वरवर्जमित्यर्थः । परमेश्वरे भक्ति-शब्दितनिरतिशयप्रेम्णः स्थिरीकर्तव्यत्वात् ॥५७॥

तत्तत्प्रारब्धकर्मसम्प्राप्तं शुभाशुभं· शुभहेतुमशुभहेतुं च विषयमित्यर्थः। नाभिनन्दति न हृष्यति, न द्वेष्टि न निन्दति तस्य मुनेः प्रज्ञा परमेश्वरविषया प्रतिष्ठिता। सुस्थिरेत्यर्थः ॥५७॥

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥५८॥

**यदेति।** यदा चायं योगी कूर्मोऽङ्गानीवेन्द्रियार्थेभ्यो विषयेभ्य इन्द्रियाणि वागादीनि संहरते प्रत्याहरति, तस्य योगिनः प्रज्ञा धीः प्रतिष्ठिता परमेश्वरनिष्ठा भवति। स्थितप्रज्ञ इत्युच्यत इत्याशयः ॥५८॥

विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥५९॥

**विषया इति।** निराहारस्य विषयाणामिन्द्रियाहारतयाऽत्राहारपदेन विषया निगद्यन्ते। विषयेभ्यः प्रत्याहृतेन्द्रियस्येत्यर्थः। विषयाश्शब्दादयो विनिवर्तन्ते परिच्यवन्ति। रसवर्जं शब्दादिविषयरागस्तु न निवर्तत इत्यर्थः। यद्येवं तर्हि कथं परमेश्वरनिष्ठा सुप्रतिष्ठा भवेत्? विषयरागेणाकृष्यमाणत्वाच्चेतस इत्यत आह—**रसोपीति।** अस्य प्रत्याहृतेन्द्रियस्य रसो रागोपि परं परमेश्वरं निरतिशयमानन्दघनं दृष्ट्वाऽपरोक्षीकृत्य निवर्तत इत्यर्थः। अत एव 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावर' इति श्रुतिरिममर्थं समर्थयति ॥५९॥

ज्ञाननिष्ठास्थैर्य इन्द्रियनिग्रहस्य मुख्यकारणत्वमावेदयितुं तन्निग्रहाभावे दोषमाह—

यततो ह्यपि कौन्तेय! पुरुषस्य विपश्चितः।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥६०॥

**यतत इति।** हे कौन्तेय! यतत इन्द्रियाणि निगृहीतुं प्रयत्नवतोऽपि विपश्चितः प्राज्ञस्यापि प्रमाथीनि प्रक्षोभकाणीन्द्रियाणि प्रसभं बलात्कारेण हरन्ति वशीकुर्वन्तीत्यर्थः ॥६०॥

तस्मादिन्द्रियसंयमनमवश्यकर्तव्यमित्याह—

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥६१॥

तानीति । यस्तानि सर्वाणि ज्ञानकर्मसाधनानीन्द्रियाणि संयम्य निरुध्य युक्तो निगृहीतचेता मत्परस्सर्वात्मभूतपरमेश्वरध्याननिष्ठ आसीत तिष्ठेदित्यर्थः । एतेन कथमासीतेति दत्तोत्तरमित्यर्थः । एवं यस्येन्द्रियाणि वशे स्युस्तस्य प्रज्ञा प्रतिष्ठितेत्यर्थः । अत्र युक्त आसीत मत्पर इत्यनेन दुष्टेन्द्रियनिग्रहोऽपि ध्यानमूलपरमेश्वरानुग्रहैकसाध्य इति व्यज्यते ॥६१॥

एवमिन्द्रियनिग्रहाभावे दोषमुक्त्वाऽथ मनोनिग्रहाभावे दोषमाह द्वाभ्याम्—

ध्यायतो विषयान् पुंसस्सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥६२॥

क्रोधाद्भवति सम्मोहस्सम्मोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥६३॥

ध्यायत इति । ध्यायतो मनसा चिन्तयतः । विषयान् शब्दादीन् पुंसस्सङ्ग आसक्तिस्तेषु शब्दादिषूपजायते । सङ्गादासक्तेस्सञ्जायते उत्पद्यते । कामस्तेषु वाञ्छा कामात्केनापि प्रतिहतादित्यर्थः । क्रोधोऽभिज्वलनरूपो वृत्तिविशेषोऽभिजायते । क्रोधात्तस्मात्संमोहः कृत्याकृत्यविवेकशून्यता, संमोहात्स्मृतिविभ्रमश्शास्त्राचार्योपदिष्टार्थस्मरणस्य विभ्रमो विभ्रंशः, तस्माद्बुद्धिनाशः-बुद्धेः परमेश्वरज्ञानविषयकनिश्चयस्य नाशो भयः, तस्मात्प्रणश्यति मृतप्रायो भवति । अविरतसंसारदुःखो भवतीत्यर्थः ॥६३॥

नन्विन्द्रियाणां दुर्जयतया स्थितप्रज्ञत्वं दुस्साधमित्यत आह द्वाभ्याम्—

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥६४॥

रागेति । रागद्वेषवियुक्तैः- रागद्वेषरहितमनःप्रयुक्तैरित्यर्थः । विषया-

---

रागेति । रागद्वेषरहितमनःप्रयुक्तैरिति । रागद्वेषयोर्मनोवृत्तिविशे-

नप्रतिषिद्धानिन्द्रियैश्चरन् भुञ्जन्नपीत्यर्थः। आत्मवश्यैस्स्वाधीनैर्विधेयात्मा स्वायत्तचित्तः प्रसादं चित्तनैर्मल्यमविगच्छति प्राप्नोति। रागद्वेषराहित्यमेव चित्तशुद्धिनिदानमिति भावः। एतेन कथं व्रजेत, भुञ्जीतेति प्रश्नस्योत्तरमुक्तमिति ज्ञेयम् ॥६४॥

प्रसादे सर्वदुःखानां हानिरस्योपजायते।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥६५॥

प्रसादेति। प्रसादे चित्तनैर्मल्ये सति सर्वदुःखानां प्रकृतिसम्बन्धकृतसकलदुःखानां हानिर्भय उपजायते सम्भवति। कुत इत्यत आह—प्रसन्नचेतस इति। निर्मलान्तःकरणस्याशु बुद्धिश्चिदचिद्विशिष्टपरमेश्वरविषया पर्यवतिष्ठते सुस्थिरा भवति। स्थितप्रज्ञत्वं सम्भवतीत्यर्थः ॥६५॥

उक्तमेवार्थं व्यतिरेकमुखेन स्थिरीकरोति—

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।
न चाभावयतश्शान्तिरशान्तस्य कुतस्सुखम् ॥६६॥

नास्तीति। अयुक्तस्य अवशीकृतचित्तस्य बुद्धिः परमेश्वरविषया प्रज्ञा नास्ति नोत्पद्यते। अयुक्तस्य परमेश्वरज्ञानरहितस्य भावना निरन्तरध्याननिष्ठा नास्ति न सम्भवति। अभावयतः ध्यानयोगरहितस्य शान्तिः जननमरणात्मकसंसारविरतिर्नच- न भवति। अशान्तस्याविरतसंसारदोषस्य सुखं कैवल्यं कुतो लभ्यम्? कथंचिदपि न लभ्यत इत्यर्थः ॥६६॥

नास्ति बुद्धिरयुक्तस्येति कथमित्यत आह—

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥६७॥

इन्द्रियाणामिति। चरतां विषयेषु प्रवर्तमानानामवशीकृतानामित्यर्थः। इन्द्रियाणामिति षष्ठी निर्धारणे। तेषां मध्ये यदिन्द्रियमनुसृत्य यस्य नरस्य

---

षत्वादित्याशयः। एवं च रागद्वेषयुक्तचेतसा विषयान् भुञ्जन् कलुषचित्तो निश्श्रेयसाद्भ्रष्टो भवतीति हृदयम् ॥६४॥

मनस्यनुविधीयते प्रवर्तत इत्यर्थः । तदिन्द्रियमेकमप्यस्य नरस्य प्रज्ञां बुद्धि-मम्भसि जले वायुः प्रतिकूलो नावमिव हरत्यपहरति । परमेश्वरप्रावण्यात्प्रच्याव्य विषयासक्तां करोतीत्यर्थः । अत्र एकमेव हरतीत्युक्त्या किमुत सर्वाणि हरन्तीति कथनीयमिति भावः ॥६७॥

उक्तमर्थमुपसंहरति—

तस्माद्यस्य महाबाहो ! निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥६८॥

तस्मादिति । अनिगृहीतानां दुष्टेन्द्रियाणां प्रज्ञापहारित्वान्महाबाहो सर्वशत्रुजयसमर्थ ! अनेनेन्द्रियजयेऽपि सामर्थ्यमस्य व्यञ्जितम् । यस्य साधकस्य सर्वशः सर्वाण्यपीन्द्रियाणीन्द्रियार्थेभ्यो विषयेभ्यो निगृहीतानि प्रत्याहृतानि तस्य जनस्य प्रज्ञा परमेश्वरप्रवणा बुद्धिः प्रतिष्ठिता सुस्थिरा भवतीत्यर्थः । **एतेन** स्थितप्रज्ञस्य लक्षणं सम्यगुक्तम् ॥६८॥

अथ स्थितप्रज्ञस्य लक्षणमज्ञवैलक्षण्येन प्रतिपादयति—

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥६९॥

**या निशेति** । या परमेश्वरविषया बुद्धिस्सर्वभूतानां सर्वेषामज्ञानां निशा निशेवाप्रकाशरूपा, तस्यां परमेश्वरविषयायां बुद्धौ संयमी स्थितप्रज्ञयोगी जागर्ति परमात्मानमवलोकयन्नास्त इत्यर्थः । यस्यां विषयासक्तायां बुद्धौ सर्वाणि भूतानि सर्वे जनाः, अज्ञा इत्यर्थः । जाग्रति प्रबुद्धा इव विषयेषु रमन्ते सा शब्दादिविषया बुद्धिः पश्यतो ज्ञानिनो मुनेर्योगिनो निशा निशे-वाप्रकाशरूपेत्यर्थः । **एतेन** काकोलूकनिशातुल्यं योगिभोगिनोर्वैलक्षण्यमुन्नेय-मिति भावः ॥६९॥

---

**या निशेति, काकोलूकनिशातुल्यमिति** । यथा काकस्य रात्र्यन्धस्य दिनमुलूकस्य दिवान्धस्य निशा- यथा च दिवान्धस्य रात्रौ पश्यतो निशा दिनं तदेव रात्रावपश्यतः काकस्य निशा भवत्येवमेव ज्ञान्यज्ञानिनोर्वैलक्षण्यमिति विभावनीयमित्याशयः ॥६९॥

एवंविधस्य स्थितप्रज्ञस्य कैवल्यमविशङ्कमित्याह—

**आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥७०॥**

**आपूर्यमाणमिति** । आपूर्यमाणं सर्वनदीभिरिति शेषः । अचलप्रतिष्ठं वृद्धिक्षयरहितं निर्विकारमित्यर्थः । समुद्रमापो वर्षजलान्यपि यद्वद्यदा प्रविशन्ति; प्रविशन्त्यपि सर्वथा विकारं जनयितुं न शक्नुवन्तीत्यर्थः । तद्वत्तथैव सर्वे कामा भोगा यं योगिनं प्रविशन्ति- प्रविशन्तोपि न विकारं जनयितुमलं स शब्दादि-विषयगोचरेष्वपि यः परमेश्वरालोकनेनैव तुष्टो न विकृतिमापद्यते, स संयमी शान्तिं कैवल्यमाप्नोति । कामकामी शब्दादिभिर्विकृतिमापद्यमानस्तु शान्तिं नाप्नोतीत्यर्थः ॥७०॥

फलितार्थमाह—

**विहाय कामान् यस्सर्वान् पुमांश्चरति निस्स्पृहः ।**
**निर्ममो निरहङ्कारस्स शान्तिमधिगच्छति ॥७१॥**

**विहायेति** । विहायोपेक्ष्य कामान्, सम्प्राप्तानिति शेषः । निस्स्पृहोऽप्राप्तेषु च वाञ्छारहितः, निर्ममो निरहङ्कारः पुत्रक्षेत्रकलत्रादिषु देहेन्द्रियादिषु च ममेदमित्यहमिदमिति चाभिमानरूपाऽविद्यानिर्मुक्तश्च यः पुमांश्चरति लोकयात्रां निर्वर्तयति स तादृशो योगी परमेश्वरध्याननिष्ठारूपस्थितप्रज्ञतासिद्ध्या शान्तिं सर्वसंसारदुःखनिवृत्तिपूर्वकनिरतिशयानन्दप्राप्तिरूपकैवल्यमाप्नोतीत्यर्थः ॥७१॥

असङ्गकर्मनिष्ठापूर्विकां स्थितप्रज्ञतारूपपारमेश्वरध्याननिष्ठां फलेन स्तुवन्नुपसंहरति—

**एषा ब्राह्मी स्थितिः पार्थ ! नैनां प्राप्य विमुह्यति ।**
**स्थित्वाऽस्यामन्तकालेपि ब्रह्मनिर्वाणमृच्छति ॥७२॥**

**एषेति** । एषाऽसङ्गकर्मनिष्ठापूर्विका ब्राह्मी स्थितप्रज्ञताशब्दिता पारमेश्वरध्याननिष्ठा; एनां ध्याननिष्ठां प्राप्य लब्ध्वा न मुह्यति न पुनस्संसार-

---

**एषेति, प्रायणकाल इति** । अत एव- 'आप्रायणा'दिति सूत्रितमाचार्येण । परस्तादत्रापि 'प्रयाणकाले मनसाऽचले'नेति वक्ष्यति च । **स्थितप्रज्ञ-**

प्राप्नोति । अन्तकालेऽपि प्रायणकालेऽप्यस्यां निष्ठायां स्थित्वा वर्तमानो ब्रह्म-निर्वाणं परमेश्वरसायुज्यरूपं नित्यनिरतिशयसुखं ऋच्छति प्राप्नोतीत्यर्थः । एवमात्मनो नित्यनिर्विकारस्वरूपयाथात्म्यं स्वधर्मस्य परमेश्वरप्रीतिमूलतां चाज्ञात्वा शोकमोहाभ्यां स्वधर्मान्निवृत्तस्य तदीयमोहशान्तये नित्यनिर्विकारत्वयाथात्म्य-विषया साङ्ख्यबुद्धिरसङ्गकर्मनिष्ठात्मककर्मयोगसमुच्चिता स्थितप्रज्ञाख्यज्ञान-निष्ठा च द्वितीयेऽस्मिन्नध्याये निरूपिता इति ॥७२॥

इति श्रीनीलकण्ठभगवत्पादाराध्यविरचित श्रीमद्भगवद्गीताभाष्ये
साङ्ख्ययोगोनाम द्वितीयोऽध्यायः ।

---

ताख्येति । अत एवोक्तमस्मदीये गीतार्थसंग्रहे- 'नित्यात्मा सङ्गकर्मेह गोचरा साङ्ख्ययोगधीः । द्वितीये स्थितधीलक्षा प्रोक्ता तन्मोहशान्तये ॥' ॥७२॥

इति नागलिङ्गशिवाराध्यकृत लघुचन्द्रिकायां
द्वितीयोऽध्यायः ।

---



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## कर्मयोगोनाम तृतीयोऽध्यायः ।

एवं मुमुक्षुभिः प्राप्यतया वेदान्तावेदितस्य निरस्ताखिलदोषगन्धस्य समस्तमाङ्गल्यगुणसिन्धोः कालकन्धरस्य प्राप्तेः परमोपायभूतां वेदेन ध्यानोपासनशब्दितां परभक्तिमाख्यातुं प्रथमं तदुपायभूतं प्राप्तुरात्मनो याथात्म्यदर्शनमुक्त्वा, ततः स्थितप्रज्ञत्वाख्यपरमेश्वरध्याननिष्ठोपयुक्तचित्तशुद्धिनिष्पादकमसङ्गकर्मानुष्ठानं द्वितीयेऽध्याये निगदितम् । अथासङ्गकर्मण अवश्यानुष्ठेयत्वनिरूपणपूर्वकं तादृशस्वधर्माराध्यमानपरमेश्वरप्राप्तिरूपविमुक्तिप्रतिपादनाय प्राप्तुः प्रत्यगात्मनो दर्शनमेव तृतीये प्रपंच्यते । द्वितीये भगवानर्जुनमुद्दिश्य—'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु । बुद्ध्या युक्तो यया पार्थ ! कर्मबन्धं प्रहास्यसि' इति बुद्धिद्वयमपि समुच्चित्यैवानुष्ठेयमित्याशयेनोवाच । तदाशयमपरिज्ञाय 'एषा तेऽभिहिता साङ्ख्ये बुद्धि'रिति ज्ञानयोगस्य प्रथममुपदिष्टत्वात्, 'एषा ब्राह्मी स्थिति'रिति तस्यैवोपसंहृतत्वाच्च कर्मयोगापेक्षया ज्ञानयोगस्याभ्यर्हितत्वं भगवदभिमतमिति च मत्वा चार्जुनो ज्यायांसं बुद्धियोगमेव ममानुष्ठेयमनुक्त्वा 'योगस्थः कुरु कर्मा'णीति कनिष्ठे कर्मयोगे कुतो मां नियोजयतीति पर्याकुलमनाः पप्रच्छ—

---

समुच्चित्यैवानुष्ठेयमित्याशयेनेति । अत्रायं भावः—द्वयोरपि बुद्ध्योः पार्थंप्रत्येवोपदिष्टत्वेन नान्यतरत्वेनान्यतरस्याऽननुष्ठेयत्वे तदुपदेशवैरुद्ध्याच्चद-न्यथानुपपत्त्या समुच्चित्यैवानुष्ठेयत्वमर्थात्सिद्धमिति भावः ।

अर्जुन उवाच—

ज्यायसीचेत्कर्मणस्ते मता बुद्धिर्जनार्दन !
तत्किं कर्मणि घोरे मां नियोजयसि केशव! ॥१॥
व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥२॥

ज्यायसीति । जनार्दन लक्ष्मीपतित्वेन जनैर्भोगार्थिभिरर्थ्यते याच्यत इति तस्य सम्बुद्धिः । कर्मणः कर्मयोगाद्बुद्धिर्ज्ञानयोगो ज्यायसी श्रेयानिति यदि ते मता इष्यते ततस्तर्हि किं कुतो घोरे हिंसात्मकतया भयङ्करे कर्मणि युद्धाख्ये स्वधर्मे नियोजयसि 'तस्माद्युध्यस्व भारत, तस्मादुत्ति'ष्ठेति चाभ्यासेन प्रवर्तयसि ? व्यामिश्रेणैव सङ्कीर्णार्थेनेव स्थितेन वाक्येन बुद्धिं मोहयसीव--भ्रान्तियुक्तं करोषीवेत्यर्थः । नैव त्वयि प्रतारकत्वं, किंतु मम मन्दबुद्धेः भवद्वाक्ये भ्रान्तिरुत्पद्यत इतीवशब्देन व्यज्यते । तस्माद्येन कर्मणा ज्ञानेन वाऽहं श्रेय आप्नुयां लभेय, तन्निश्चित्य मे वदेत्यर्थः ॥१-२॥

---

ननु यदि हि भगवता द्वितीयाध्याये ज्ञानं कर्म च त्वयैवानुष्ठेयमित्युक्तं स्यात्तर्ह्येकं वदेति पार्थस्य प्रश्नो नोपपन्न इति चेन्न, पार्थेन भगवदाशयमपरिज्ञायैव तथा पृष्टत्वात् ।

नचाविवेकतः प्रश्नकल्पनायामपि भिन्नपुरुषानुष्ठेयत्वेन ज्ञानकर्मनिष्ठयोर्भगवतः प्रतिवचनं न युक्तमिति शङ्क्यं, ज्ञानकर्मनिष्ठयोर्भिन्नपुरुषानुष्ठेयत्वेन भगवताऽनुक्तत्वात् ।

नच यदि ज्ञानकर्मनिष्ठयोरुभयोरप्येकपुरुषानुष्ठेयत्वमिष्यते चेत्तर्हि 'कुरु कर्मैव तस्मात्त्व'मिति पार्थस्य ज्ञाननिष्ठासम्भवोक्तिर्नोपपद्येतेति वाच्यं, तत्रैवकारेण 'कर्म ज्यायो ह्यकर्मण' इत्यकर्मशब्देन कर्मसन्न्यासस्यैव व्यावर्त्यतया भगवता कण्ठरवेण निगदितत्वेन ज्ञाननिष्ठासम्भवस्यानुक्तत्वात् ।

नच यदि पार्थस्य ज्ञाननिष्ठायामर्हता भगवत इष्येत तर्हि 'कर्मण्येवाधिकारस्त' इति पार्थप्रति ज्ञाननिष्ठानर्हत्वं भगवदुक्तं न युज्येतेति शङ्क्यं, भगवा-

प्येवकारेण विवक्षितस्य व्यावर्त्यस्य माफलेष्विति फलरूपत्वेन भगवतैव कण्ठरवेण कथितत्वेन 'न ज्ञाननिष्ठाया'मिति परकीयविवरणस्य मूलविरुद्धत्वेन स्वसमयमात्रप्रतिपालनतात्पर्यतयाऽपव्याख्यानत्वेन विमर्शलोचनरहितस्वान्तेवासिजनमात्रसन्तुष्टिकरत्वात् ।

अथ यदि पररीत्या पार्थस्य ज्ञाननिष्ठायामनर्हता भगवत इष्येत, तर्हि परस्तात्सप्तमे 'ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषत' इति पार्थं प्रति ज्ञानोपदेशस्सर्वोपि वैयर्थ्यमेव नीयेत ।

अथान्यार्थतया यद्युच्येत सार्थक्यं, तथापि पार्थप्रत्युपदेशो निरर्थ एवेति न वक्तव्यं बहु ।

अथ यत्तु परैः 'स्तत्रैतत्स्यात् गृहस्थानामेव श्रौतस्मार्तकर्मपरित्यागेन केवलादेव ज्ञानान्मोक्षः प्रतिषिध्यत' इत्यादिनाऽनल्पेन विकल्पजातेन हेतुवादावलम्बेन कर्मज्ञानयोस्समुच्चयमधिकृत्य दूषणं तद्वेदविरुद्धसमयपोषणमेव । 'विद्यां चाविद्यां' चेति श्रुत्या, 'यज्ञेन दाने'नेत्यादिकया च, 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्', 'विहितत्वाच्चाश्रमकर्मा'पीत्यादिसूत्रैश्च सर्वेषामप्याश्रमिणां विहितेन स्वस्वकर्मणा ज्ञानंप्रति समुच्चयस्य वेदाचार्येण च निर्धारितत्वेन श्रुतिसूत्रविप्रतिषिद्धत्वात् ।

ननु 'न कर्मणा न प्रजया धनेन त्यागेनैक' इति श्रुत्या सन्न्यासो विहित इति परैरुक्त इतिचेन्न, अत्रैव 'सर्वकर्मपरित्यागं प्राहुस्त्यागं विचक्षणा' इति त्यागशब्दस्य फलत्यागपरत्वमवधार्य कर्मत्यागस्य निराकृतत्वात् । तस्मात्पार्थेन भगवदुक्तमपरिज्ञायैव ज्यायसीचेदिति प्रश्नः कृत इति युक्तम् । परैर्न केवलं श्रुतिसूत्रादिविहितः कर्मज्ञानसमुच्चयो निराकृतः । अपितु 'नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्तित' इति भगवता कण्ठरवेणैव निराकृतः । कर्मसन्न्यासोपि सिद्धान्तित इति महद्वैषम्यं परसमयस्य प्रकृतमधिकृत्य तात्पर्यनिर्णये विस्तर इत्यलमधिकेन ॥१-२॥

मदुक्तं सम्यङ्नावधृतं त्वयाऽतः पुनः कथयामीत्याह—

श्रीभगवानुवाच—

**लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ! ।**
**ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥३॥**

लोक इति । अस्मिन्नानाविधपथसमाकुले लोके वाङ्मये प्रपञ्चे पुरा सर्गादौ मया वेदात्मना परमेश्वरेण द्विविधा द्वे विधे प्रकारौ यस्यास्सा द्विप्रकारविशिष्टा निष्ठा एका उक्ता । अथ तत्प्रकारद्वयं विशदयति—ज्ञानेति । साङ्ख्यानां केवलविद्यानिष्ठानामभिमतेन ज्ञानयोगेन योगिनां केवलकर्मनिष्ठानामभिमतेन कर्मयोगेन च द्विप्रकारघटितेति पूर्वेणान्वयः । तस्मादेवंविधद्विप्रकारविशिष्टनिष्ठापरस्सन् परमेश्वराराधनरूपकर्मयोगेन विद्यानुष्ठानप्रतिबन्धकदुरितरहितो विद्यामहिम्नाऽमृतत्वमाप्स्यसीति भावः ॥३॥

---

द्वे विध इति । अयमेव स्वरसोऽर्थः । पररीत्या बुद्धिद्वयं विभक्तमेव भगवत इष्येत तदा निष्ठे द्वे हि मया प्रोक्त इत्येवोच्येत । तदा नोच्यते । तस्मात्परकीयं विवरणं मूलप्लोषणमेव ।

अथ यदि यथाकथञ्चिदस्य वचनस्य बुद्धिद्वयविभागपरत्वं समर्थ्येत, तदा पूर्वोक्तविधया श्रुतिसूत्रविरोधस्य दुरुद्धरत्वात् श्रुतिविरुद्धार्थबोधकत्वादोषो भगवतश्शिरसि समारोप्येत । ततश्च यथोक्तं युक्तम् ।

परमेश्वराराधनरूपेति । 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः । तदर्थं कर्म कौन्तेय मुक्तसङ्गस्समाचर'रेति वक्ष्यमाणरीत्या परमेश्वराराधनरूपस्यासङ्गकर्मयोगस्य परमेश्वरप्रसादसाधकत्वादिति भावः । विद्यानुष्ठानप्रतिबन्धकरहितो विद्यामवाप्नोति । 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत' इति श्रुतेरिति भावः । इह यद्यपि श्रुतिसूत्रार्थवैपरीत्यप्रसाधनपरैः परैरत्र प्रतिपादितं कर्मज्ञानयोर्भिन्नपुरुषानुष्ठेयत्वं न किमपि विस्मयमापादयति, किंतु श्रीनीलकण्ठीयानुरोधेन सूत्रभाष्ये संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति पूर्वोत्तरमीमांसयोरैकशास्त्र्यं प्रतिज्ञाय 'धर्मेण पापमपनुद'तीति तदेव ब्रह्मप्राप्तिसाधनं ज्ञानं सर्वाश्रमकर्मापेक्षमिति कर्मज्ञानसमुच्चयो विवक्षितः । अत्र गीताभाष्ये

मुमुक्षोरपि निष्कामकर्मैवावश्यकं, न तु सन्न्यास इत्याह—

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**न च सन्न्यसनादेव सिद्धिं समधिगच्छति ॥४॥**

**न कर्मणामिति** । कर्मणां शास्त्रीयाणामनारम्भादननुष्ठानान्नैष्कर्म्यं ज्ञाननिष्ठां पुरुषो नाश्नुते न प्राप्नोति । सन्न्यसनादारब्धस्य कर्मणः परित्यागात्सिद्धिं विमुक्तिं न समधिगच्छत्येव नैव लभते । **अस्येदमाकूतम्**— परमेश्वराराधनबुद्ध्या समनुष्ठितैर्निष्कामकर्मभिर्निरस्ताखिलैनःकर्दमतया विशुद्धचित्तानामेव ध्यानयोगसिद्ध्या विमुक्तिसिद्धिः, न त्वनारब्धकर्मणामारब्धकर्मत्यागिनां वा सम्भवतीति ॥४॥

विहितवैदिककर्मणां त्यागेऽपि लौकिककर्मणां त्यागस्य दुर्लभतया सर्वकर्मसन्न्यासस्यासम्भवाच्च कर्मणस्त्यागो न युज्यत इत्याह—

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥५॥**

**न हीति** । कश्चित्कोऽपि जातु कदाचिदप्यकर्मकृत्कर्माकुर्वाणः क्षणमपि न तिष्ठति । किं तु सर्वः सर्वोऽपि जनोऽवशोऽस्वतन्त्रः प्रकृतिजैर्मूलप्रकृतिसम्भवैर्गुणैस्सत्त्वरजस्तमोभिः कर्म स्वोचितं कर्मप्रति कार्यते प्रवर्तितस्सन् करोत्येवेत्यर्थः । **एतेन** सर्वकर्मसन्न्यासस्यासम्भावितत्वाद्विहितकर्मानुष्ठाननिष्पन्ननिर्मलान्तःकरणेनैव ज्ञानयोगस्समनुष्ठेय इत्युक्तं भवति ॥५॥

---

परोद्भावितादभ्रभ्रमिभ्रान्तैरपरैरपि विषयव्याकुलबुद्धियुक्तानां कर्मयोगेऽधिकारः, अव्याकुलबुद्धीनां तु ज्ञानयोगेऽधिकार उक्त इति यत्परकीयपथानुगमनं तदस्याश्चर्यमापादयतीवाऽस्य सूत्रभाष्यकर्तुर्वैलक्षण्यमनुमापयतीत्यलम् ॥३॥

**न कर्मणामिति । निरस्ताखिलैनःकर्दमतयेति** । यतश्च 'धर्मेण पापमपनुदति, विशुद्धचित्तस्ततस्तु तद्दृश्यते ध्यायमान' इत्यादयश्श्रुतिसूक्तयो निष्कामकर्मानुष्ठानेन शुद्धचित्तानामेव ध्यानयोगेन परमेश्वरसाक्षात्कारं विदधते तस्मादित्यर्थः ॥४॥

**नहीति, निर्मलान्तःकरणेनैवेति** । अन्यथा ज्ञानयोगस्यासिद्ध्या कर्मयोगस्य परित्यक्तत्वाच्चोभयभ्रष्ट एव भवेदित्याशयः ॥५॥

कर्मसन्न्यासी मिथ्याचारो भवतीत्याह—

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान् विमूढात्मा मिथ्याचारस्स उच्यते ॥६॥**

**कर्मेन्द्रियाणीति ।** यो जनः कर्मेन्द्रियाणि वागादीनि संयम्य निरुध्य इन्द्रियार्थान् विषयान् मनसा स्मरन् ध्यायन् विमूढात्मा सन्न्यासतत्त्वानभिज्ञः, स पुरुषो मिथ्याचारः कपटाचार इत्युच्यते ।

अत्रेदं बोध्यम्— अविनष्टपापत्वादशुद्धचेतसः परमेश्वरविमुखतया शब्दादिध्यानपर उद्युक्ते ज्ञानयोगेऽनधिकारान्न तत्फलमश्नुत इति ॥६॥

एवं कर्मसन्न्यासं विगर्ह्य कर्मयोगं प्रशंसति—

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन !**
**कर्मेन्द्रियैः कर्मयोगमसक्तस्स विशिष्यते ॥७॥**

**यस्त्विति ।** अर्जुन ! यः पुरुषस्त्वसक्तः कर्मफलासङ्गरहितो मनसेन्द्रियाणि नियम्य प्रतिषिद्धविषयेभ्यो निरुध्य कर्मेन्द्रियैः कर्मप्रवणैर्वागादिभिः कर्मयोगं परमेश्वराराधनबुद्ध्याऽऽरभतेऽनुतिष्ठति, स कर्मयोग्येव विशिष्यते; विशिष्टो भवतीत्यर्थः ॥७॥

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः ॥८॥**

**नियतमिति ।** तस्मात्त्वं नियतं नित्यं कर्म सन्ध्योपासनादिकर्म कुर्वनुतिष्ठ । अकर्मणः केवलज्ञाननिष्ठायाः कर्म कर्मयोग एव ज्यायः श्रेयः । परमेश्वराराधनबुद्ध्या समनुष्ठीयमाने कर्मयोगे ज्ञाननिष्ठाया अप्यन्तर्भूतत्वाज्ज्यायस्त्वमवगन्तव्यमित्याशयः ।

ननु सर्वं कर्म परित्यज्य ज्ञानयोगमेवानुतिष्ठामि, किं मम कर्मयोगेनेत्यत आह—अकर्मण इति । सर्वकर्मसन्न्यासपूर्वककेवलज्ञाननिष्ठस्य शरीर-

---

**नियतमिति, ज्ञाननिष्ठाया इति ।** 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुत' इत्यत्र ज्ञानयोगस्यैव नैष्कर्म्यशब्देन विवक्षितत्वादत्राप्यकर्मशब्देन सर्वकर्मसन्न्यासपूर्वकज्ञानयोग एव निगद्यत इति भावः । ज्ञाननिष्ठस्यापि

यात्रापि शरीरस्थितिरपि न प्रसिद्ध्येन्न सम्भवेत् । ज्ञाननिष्ठस्यापि शरीरस्थितेरावश्यकतया शरीरस्थितिनिदानं कर्म परिगृह्य श्रौतस्मार्तरूपस्य कर्मणस्त्यागस्यायुक्तत्वात्कर्मत्यागपूर्वकज्ञानयोगादपि श्रेष्ठतरं कर्मैव कर्तव्यमित्याशयः ॥८॥

'कर्मणा बध्यते जन्तु'रित्यादिस्मृत्या कर्मणो बन्धहेतुत्वावगमेन तन्मुमुक्षोरनावश्यकमित्याशङ्क्याह—

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय ! मुक्तसङ्गस्समाचर ॥९॥**

**यज्ञार्थादिति ।** यज्ञार्थात् श्रु- 'आवो राजानमध्वरस्य रुद्र'मिति परमेश्वरस्य यज्ञाधिपतित्वश्रवणेन यज्ञस्य परमेश्वराराधनतया तदर्थात्परमेश्वराराधनोपयुक्तादित्यर्थः । कर्मण उक्तविधात्कर्मण इत्यर्थः । अन्यत्र तदितरस्मिन् कर्मणि प्रवृत्त इति शेषः । अयं लोको जनः कर्मबन्धनः कर्मणा बध्यत इति सत्यमेव । ईश्वराराधनरूपं तु कर्म मोचकमेव । नतु बन्धनिदानमित्याशयः । कौन्तेय ! तदर्थं परमेश्वरप्रीत्यर्थमेव मुक्तसङ्गो निष्कामस्सन् कर्म समाचर सम्यगनुतिष्ठेत्यर्थः ॥९॥

परमेश्वराज्ञारूपत्वाच्च स्वधर्मस्यानुलङ्घनीयत्वमुपपादयति—

**सह यज्ञाः प्रजास्सृष्ट्वा पुरोवाच प्रजापतिः ।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥१०॥**

**सहयज्ञा इति ।** प्रजापतिः 'पतिं विश्वस्यात्मेश्वरगँ शाश्वत'मिति श्रुतेः प्रजापतिशब्दः पशुपतिपरः, स परमेश्वरस्सहयज्ञास्तदुज्जिजीवयिषाप्रयुक्त-

---

शरीरस्थितेरावश्यकतयेति यावद्ज्ञानयोगसिद्धि शरीरधारणस्यावश्यकत्वाच्छरीरधारणस्य च न्यायार्जितधनेन महायज्ञादिकं कृत्वा तच्छिष्टाशनेनैव कर्तव्यत्वाच्च युद्धरूपस्य धर्मपरित्यागे शरीरधारणमपि न सम्भवेदिति भावः । **श्रेष्ठतरमिति ।** यथोक्तकर्मयोगे ज्ञानयोगस्याप्यन्तर्भूततया केवलज्ञानयोगात्समुच्चितस्य ज्यायस्त्वं न्यायसिद्धमित्याशयः ॥८॥

**सहयज्ञा इति, भोगानां चेति ।** नच 'मा कर्मफलहेतुर्भू'रिति काम्यानां प्रतिषिद्धतया स्वधर्मस्य कामप्रदत्वोक्तिर्विरुद्ध्यत इति शङ्क्यम् ।

स्वाराधनभूतयज्ञैस्सहैव प्रजा नामरूपविभागानर्हतया स्वस्मिन्विलीनाः सृष्ट्वा नामरूपविभक्तानाकलय्य पुरा सर्गादावुवाच—अनेन यज्ञेन प्रसविष्यध्वमभ्युदयमालभध्वम् । एष यज्ञो वो युष्माकमिष्टकामधुक्- इष्टस्य परमनिश्श्रेयसो मोक्षस्य कामानां भोगानां च सन्धायको भवेदित्यनुजग्राहेत्यर्थः । एवं च स्वधर्मस्य परमेश्वराज्ञारूपत्वाद्भुक्तिमुक्तिसाधकत्वादप्यपरित्याज्यत्वमनुसन्धेयमित्याशयः ॥१०॥

स्वधर्मस्येष्टकामदोग्धृत्वमुपपादयति—

**देवान् भावयताऽनेन ते देवा भावयन्तु वः ।**
**परस्परं भावयन्तश्श्रेयः परमवाप्स्यथ ॥११॥**

**देवानिति ।** देवानीश्वरभृत्यान् भावयताराधयत ! अनेन यज्ञेन स्वधर्मेणेति यावत् । ते युष्मदाराधितदेवा वो युष्मान् भावयन्त्वन्नपानादिभिः पुष्णन्तु । एवं परस्परं भावयन्तः पुष्णन्तः परं श्रेयो भुक्तिमुक्ती अवाप्स्यथेत्यर्थः । न चैवं देवतान्तराराधने 'शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्य'ज्येति श्रुतिर्व्याकुप्येदिति शङ्क्यं, नित्यनैमित्तिकरूपस्वधर्माणां शिवाज्ञारूपत्वेन तेषां शिवाराधनाविशेषत्वात् ॥११॥

---

'तद्यथाम्रे फलार्थे निहिते छायागन्धावनूत्पद्येते, एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते, न धर्महानिर्भव'तीत्यापस्तम्बेन नित्यकर्मणामप्यानुषङ्गिकफलसद्भावस्य स्मृतत्वात्फलसद्भावेपि तदभिलाषानभिलाषाभ्यां काम्यनित्ययोर्वैलक्षण्येन विभागस्य सिद्धत्वाच्च ॥१०॥

**देवानिति, शिवाराधनाविशेषत्वादिति ।** यथा राजाज्ञावशान्मन्त्रिकुमारपरिचर्या वीरभृत्यस्य नहि राजसेवां व्यभिचरति, तथा शिवाज्ञारूपवेदविधिवशात् 'अग्नये स्वाहा, इन्द्राय स्वाहा' इत्यादिनाऽनुष्ठीयमानं देवान्तरयजनमपि शिवाराधन एव पर्यवस्यतीत्याकूतम् ॥११॥

स्वधर्मस्याकरणे प्रत्यवायमाह—

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुंक्ते स्तेन एव सः ॥१२॥

इष्टानिति । वो युष्माकमिष्टानपेक्षितान् सर्वान् भोगान् पश्वन्नादीन् दास्यन्ते वितरिष्यन्ति । यज्ञभाविता यज्ञेनाराधिता देवा मदात्मका इत्यर्थः । तैर्देवैर्दत्तान् विकीर्णान् पश्वादीन् एभ्यो देवेभ्योऽदत्वा मखेषु तत्तदुद्देशेन हविरसमर्प्येत्यर्थः । यो जनो भुंक्ते भुनक्ति स जनः स्तेनश्चोर एव ज्ञेय इति शेषः । देवस्वापहारीत्यर्थः ॥१२॥

यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुंजते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥१३॥

यज्ञेति । वैश्वदेवादिषु शिष्टं देवदत्तावशिष्टममृतमश्नन्तीति तथोक्तास्सन्तस्सर्वकिल्बिषैः पारमेश्वरज्ञानप्रत्यूहभूतैः पुराकृतैर्मुच्यन्ते । ये जना आत्मकारणादात्मार्थमित्यर्थः । पचन्ति, न तु परमेश्वरनिवेदनपूर्वकवैश्वदेवाद्यर्थम् । ते पापा अघं पापमेव भुञ्जते । अत एव 'स केवलाघो भवति केवला'दीति श्रूयते ॥१३॥

न केवलं परमेश्वराज्ञारूपत्वात्स्वधर्मस्यानुष्ठेयत्वं, किंतु जगच्चक्रप्रवृत्तिमूलत्वादपीत्याह—

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥१४॥

अन्नादिति । अन्नाद्भुक्ताच्छुक्लादिरूपेण परिणतादित्यर्थः । भूतानि भवन्ति जायन्त इत्यर्थः । पर्जन्याद्वृष्टेरित्यर्थः । अन्नसम्भव ओषधयस्समुत्पद्यन्ते । पर्जन्यो वृष्टिप्रदो मेघो यज्ञाद्भवति । तदुक्तं मनुना—'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा' इति । यज्ञो धर्माख्यः कर्मसमुद्भवः कर्ममूल इत्यर्थः ॥१४॥

---

इष्टानिति, देवस्वापहारीति । देवर्णमनपाकृत्य स्वात्मपोषणान्न केवलं परमनिश्श्रेयसानर्हः, अपि तु नरकगामी च भवेदित्याशयः ॥१२॥

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माऽक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५॥

कर्मेति । कर्म यज्ञरूपं कर्म ब्रह्मोद्भवं वेदमूलमित्यर्थः । 'वेदोऽखिलं धर्ममूल'मिति स्मरणात् । ब्रह्म वेदोऽक्षरसमुद्भवं- अक्षरं परमेश्वरः 'शिव एव केवलः', 'तदक्षरं', 'तत्सवितुर्वरेण्य'मिति श्रवणात् । तस्मान्निश्वासतुल्यमुद्भूतमित्यर्थः । 'अस्य महतो भूतस्य निश्वसितं यदृग्वेदो यजुर्वेद' इत्यादिश्रुतेः । तस्माद्यज्ञमूलस्यापि वेदस्य परमेश्वरकृतित्वादित्यर्थः । सर्वगतं सर्वेषामप्यविकारिणामन्तरात्मभूतो ब्रह्म परमेश्वरो नित्यं सदा यज्ञे यज्ञरूपे कर्मणि प्रतिष्ठितम् । फलप्रदत्वात्- 'आवो राजानमध्वरस्य रुद्र'मितिश्रुतेर्यज्ञाधिपतित्वाच्च तत्र स्थित इत्यर्थः । अत एव 'सर्वव्यापी च भगवान् तस्मात्सर्वगतशिव' इति श्रुतिः ॥१५॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ ! स जीवति ॥१६॥

एवमिति । एवमुक्तक्रमेण परमेश्वराद्वेदाविर्भावः, वेदात्कर्मविज्ञानं, तदनुष्ठानात्पर्जन्यः, ततोऽन्नं, तस्माद्भूतोत्पत्तिरिति परमेश्वरेण प्रवर्तितं चक्रं चक्रवदन्योन्यकार्यकारणभावेन जगन्निर्वाहकं विधानमित्यर्थः । यो नरो नानुवर्तयति नानुतिष्ठति, अघायुः- अघं पापमात्रारम्भकमायुर्जीवनं यस्य तथाभूतः, इन्द्रियाराम इन्द्रियैर्विषयेष्वारमत इति पारमेश्वरज्ञानरहिततया विषयभोगैकरतिरित्यर्थः । स जनो मोघं व्यर्थमेव जीवतीत्यर्थः ॥१६॥

ननु पारमेश्वरयोगनिष्ठस्यापि निश्श्रेयसार्थं कर्म स्यादित्यत आह—

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥१७॥

यस्त्विति । यो जनस्त्वात्मरतिः 'शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा, आत्मा वाऽरे द्रष्टव्य' इत्यादाविव प्रकृत आत्मशब्दः परमेश्वरपरः । आत्मनि परमेश्वरे रती रागो यस्य । आत्मतृप्तश्चिदचिद्विषयकरतितृप्त्यभावात्पारमेश्वरयोगनिष्ठः । परमेश्वरं साक्षात्कुर्वन् निरतिशयं शिवानन्दमनुभवति । आत्मन्येव परमेश्वर एव । न तु स्रक्चन्दनवनितादौ । सन्तुष्ट आनन्दानुभव-

शालितया कृतकृत्यः। अत एव 'आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ' इति श्रुतेस्तस्य योगिनः कार्यं चित्तशुद्धिसम्पादनद्वारा शिवयोगसाधकं कर्म न विद्यते नोपयुज्यत इत्यर्थः ॥१७॥

नैव तस्य कृतेनाऽर्थो नाऽकृतेनेह कश्चन।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥१८॥

नैवेति। तस्य शिवनिष्ठागरिष्ठस्य कृतेन कर्मानुष्ठानेनार्थो निश्श्रेयसलक्षणो नैवास्ति। अकृतेनाननुष्ठानेन सर्वभूतेषु ब्रह्मादिस्तम्बपर्यन्तेष्वर्थव्यपाश्रयो लोकनिन्द्यत्वरूपः प्रत्यवायप्रदो वा कश्चनानर्थोपि नास्तीत्यर्थः। परमेश्वरनिष्ठस्य कृतकृत्यत्वात्तस्य कर्मणा प्रयोजनं नास्तीत्यर्थः ॥१८॥

त्वं कर्माधिकृत एवेत्याह—

तस्मादसक्तस्सततं कार्यं कर्म समाचर।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥१९॥

तस्मादिति। तस्मात्तव योगसिद्धत्वाभावादित्यर्थः। असक्तः फलवाञ्छारहितः कार्यं विहितमित्यर्थः। कर्म धर्मं सततं नित्यं समाचराऽनुतिष्ठ। असङ्गकर्माचरणे किं प्रयोजनमित्यत आह—असक्तः फलापेक्षावर्जं कर्म स्वधर्ममाचरन्ननुतिष्ठन् परं पारमेश्वरयोगभङ्गकराखिलपापनिवृत्तिद्वारा योगसिद्ध्या परमेश्वरमाप्नोति। सायुज्यरूपपरममुक्तिमधिगच्छतीत्यर्थः ॥१९॥

ज्ञानयोगार्थिनोपि तत्साधनतया कर्मयोगोऽनुष्ठेय इत्याह—

कर्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसंग्रहमेवाऽपि सम्पश्यन्कर्तुमर्हसि ॥२०॥

कर्मणैवेति। कर्मणैव कर्मयोगेनैव संसिद्धिं ध्यानयोगसिद्धिमास्थिता लब्धवन्तो जनकादयोऽजातशत्रुजनकमुख्याः पुराणप्रशिद्धा ज्ञाननिष्ठाः। लोकसंग्रहं लोकानां स्वधर्मप्रवर्तनमपि सम्पश्यन् कर्म कर्तुमर्हसि। लोकसंग्रहार्थमपि कर्म कर्तव्यमेवेत्याशयः ॥२०॥

यद्यदाचरति श्रेष्ठः तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥२१॥

यदिति। यद्यद्वैदिकं लौकिकं वा कृत्यमाचरत्यनुतिष्ठते श्रेष्ठोऽभिज्ञ-

तया प्रसिद्धः । इतरो जनोऽभिज्ञोऽपि तत्तदेव कृत्यमवलम्बनीत्यर्थः । स श्रेष्ठो यच्छास्त्रं प्रमाणं मन्यते, लोको जनस्तत्तदेव शास्त्रमनुवर्ततेऽनुसरति । तस्मात्त्वयाऽवश्यं कर्म कर्तव्यमित्यर्थः ॥२१॥

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥२२॥

नेति । पार्थ! मे मम किमपि कर्तव्यं नास्ति । त्रिष्वपि लोकेष्वनवाप्तमप्राप्तमवाप्तव्यमपि नास्ति । तथाऽपीति शेषः । कर्मणि विहिते वर्त एव करोम्येवेत्यर्थः ॥२२॥

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ! सर्वशः ॥२३॥

यदीति । अहं पारमेश्वरध्यानयोगसिद्धः, जातु कदाचिदपि, अतन्द्रितोऽनलसः कर्मणि स्वधर्मे न वर्तेयं, यदि कर्म नानुतिष्ठेयंचेदित्यर्थः। सर्वशः सर्वथा मनुष्या मम वर्त्म पद्धतिमनुवर्तन्तेऽनुवर्तेरन्ननुसरेयुः । प्रजास्सर्वेऽपि स्वधर्मं नानुतिष्ठेयुरित्यर्थः ॥२३॥

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥२४॥

उत्सीदेयुरिति । अहं योगसिद्ध्या कृतार्थोऽपि कर्म स्वधर्मं न कुर्यांचेन्नावलम्बेयं तर्हि- इमे लोका जना उत्सीदेयुः कर्मत्यागान्नश्येयुः । सङ्करस्य वर्णविभागमूलधर्मनाशाद्वर्णसङ्करस्य कर्ता च प्रवर्तको भवेयमित्यर्थः । ततः प्रजा उपहन्यां प्रजानाशं कुर्यामित्यर्थः ॥२४॥

तस्माद्ब्रह्मविदापि लोकसंग्रहार्थं कर्म कर्तव्यमेवेत्युपसंहरति—

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत !**
**कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥२५॥**

**सक्ता इति ।** भारत! अविद्वांसः अनभिज्ञाः कर्मणि कर्मफले सक्ताः आसक्तियुताः यथा कर्म कुर्वन्ति विद्वानभिज्ञोपि असक्तः फलाभिसन्धिरहितः लोकसंग्रहं लोकानुग्रहचिकीर्षुः तथैव कुर्यादित्यर्थः । विद्वदविदुषोः फलविषयाभिसन्ध्यनभिसन्धिभ्यामेव वैषम्यं, नतु कर्माचरणे । तस्माद्ब्रह्मविदापि लोकरक्षार्थं यथाविधि कर्मानुष्ठातव्यमेवेत्याशयः ॥२५॥

ननु कृपया लोकेभ्यः पारमेश्वरज्ञानमेव किमिति नोपदेष्टव्यम् ? कुतश्च कर्मयोग एव प्रवर्तनीय इत्याशङ्क्याह—

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**जोषयेत्सर्वकर्माणि विद्वान् युक्तस्समाचरन् ॥२६॥**

**नेति ।** अज्ञानां पारमेश्वरज्ञानरहितानामत एव कर्मसङ्गिनां कर्मयोगाधिकृतानां बुद्धिभेदं ध्यानयोगोपदेशेन कर्मयोगात्तेषां बुद्धिप्रचालनं न जनयेन्न कुर्यादित्यर्थः । किं तु जोषयेत्सेवयेज्जुषप्रीतिसेवनयोः । कारयेदित्यर्थः । सर्वकर्माणि । कथं स्वयम् । युक्तश्श्रद्धावानाचरन्नेव कर्मयोगमात्राधिकृतानां बुद्धिचालने कृते तु कर्मसु बुद्धिभ्रंशाद्ध्यानयोगस्यासिद्धेश्च त उभयभ्रष्टा नश्येयुरित्याशयः ॥२६॥

विद्वदविदुषोः कर्मानुष्ठाने तुल्येऽपि तयोर्विशेषमाह—

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।**
**अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥२७॥**

**प्रकृतेरिति ।** प्रकृतेः परमेश्वरप्रेरिताया इति शेषः । अन्यथा तस्या अचेतनत्वेन तद्गुणानामपि कारयितृत्वमसमञ्जसं भवेत् । गुणैस्सत्त्वादिभिः क्रियमाणानि सर्वशः सर्वाण्यपि कर्माण्यहङ्कारविमूढात्माऽहङ्कारेणाहमेव स्वतन्त्र-

---

**प्रकृतेरिति ।** परमेश्वर एव स्वतन्त्रकर्तेति सू- 'परात्तु तच्छ्रुते'रिति जीवस्य परमेश्वराधीनकर्तृत्वनिर्धारणादिति भावः । एतेन कर्ताहमिति वाक्यमाप्या-

कर्तेत्यनाद्यज्ञानेन विमूढः परमेश्वर एव स्वतन्त्रकर्तेति ज्ञानरहित आत्मा बुद्धिर्यस्य तथाभूतः परमेश्वरो नियन्तेति ज्ञानाभावादहमेव कर्तेति मन्यत इत्यर्थः ॥२७॥

तत्त्ववित्तु महाबाहो ! गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥२८॥

तत्त्वविदिति । महाबाहो ! गुणकर्मविभागयोस्सत्त्वादिगुणविभागे तदीयकार्यविभागे च तत्त्ववित्तु याथात्म्यज्ञस्तु गुणास्सत्त्वादयो गुणेषु स्वस्व-कार्येषु वर्तन्त इति मत्वा गुणकर्मसु सक्तो न भवतीत्यर्थः ॥२८॥

प्रकृतेर्गुणसम्मूढास्सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥२९॥

प्रकृतेरिति । प्रकृतेः प्रधानस्य गुणैस्सम्मूढाः यथावस्थितात्मस्वरूपा-नभिज्ञा गुणकर्मसु क्रियासु सज्जन्ते आसक्ता भवन्ति, न तु पारमेश्वरज्ञानयोग इत्यर्थः । अकृत्स्नविदोऽज्ञान् तान् कर्मयोगपरान् कृत्स्नवित्पारमेश्वरज्ञानयोग-निष्ठो न विचालयेत्कर्मयोगान्न प्रच्यावयेदित्यर्थः ॥२९॥

विदुषः कर्मयोगानुष्ठानप्रकारमाह—

मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥३०॥

मयीति । मयि मदन्तरात्मनि परमेश्वरे सर्वाणि कर्माणि लौकिकानि वैदिकानि चाध्यात्मचेतसा सर्वान्तर्यामिभूतपरमेश्वरपराधीनोऽहमिति बुद्ध्या 'यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृत एष ह्येव साधु कर्म कारयति, अन्तःप्रविष्टश्शास्ता जनाना'मित्यादिश्रुतिभिः परमेश्वरस्य सर्वान्तर्यामित्वसर्वनियन्तृत्वश्रवणात्सन्न्यस्य समर्प्य परमेश्वराराधनरूपाणीति निश्चयेन परमेश्वरायार्पयित्वा निराशीस्तत्फले वाञ्छारहितः, अत एव निर्ममः कर्मणि ममतारहितो भूत्वा विगतज्वरः ऐहिकामुष्मिकादिसुखदुःखनिमित्त-शोकमोहरहितस्त्वं मुमुक्षुर्युध्यस्व स्वधर्ममाचर ॥३०॥

---

सिककर्तृत्वबोधकमिति विवृण्वन्तः परास्ताः । 'कर्ता शास्त्रार्थवत्त्वा'दित्यात्मनः कर्तृत्वस्याचार्येण निर्धारितत्वात् । विस्तरस्तु निगमान्तार्थनिष्कर्षे द्रष्टव्यः ॥२७॥

एवमुपपादितवैदिकमतपरमसिद्धान्तानुसारेण परमेश्वराराधनबुद्ध्या कर्मानुष्ठानस्य फलमाह—

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥३१॥

य इति । ये मानवा मनुष्याधिकारत्वाच्छास्त्रस्येदं फलाभिसन्धि राहित्येन परमेश्वराराधनबुद्ध्या कर्माचरणरूपं मे मतं मदन्तरात्मभूतपरमेश्वरोक्तवेदतात्पर्यसिद्धतया वैदिकं मतं श्रद्धावन्तोऽप्येवमेवेति विश्वासशालिनोऽनसूयन्तो दुःखात्मके कर्मणि मां प्रवर्तयतीति परमेश्वरे दोषदृष्टिरहिता अनुतिष्ठन्त्याचरन्ति ते कर्मभिर्बन्धहेतुभिर्मुच्यन्ते परमेश्वरप्रसादलाभेन बन्धमुक्तिमधिगमिष्यन्तीति भावः ॥३१॥

विपक्षे दोषमाह—

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥३२॥

ये त्विति । तुशब्दः श्रद्धाजाड्यं सूचयति । ये नास्तिक्यादत्र श्रद्धारहिता अभ्यसूयन्तो मदुक्तं वैदिकराद्धान्तं द्विषन्तो मे परमेश्वरस्य मतं प्रतिपादितं नानुतिष्ठन्ति नावलम्बते, सर्वज्ञानविमूढान् सर्वेषु कर्मयोगज्ञानयोगविषयेषु ज्ञानेषु विमूढान् विमोहेन विपरीतार्थग्रहणपरानचेतसो बुद्धिहीनान्, अत एव नष्टान् कर्मज्ञानरूपोभयभ्रष्टान् विद्धीत्यर्थः ॥३२॥

नन्वेवं तर्हि सर्वेपि निष्कामास्स्वधर्मं परमेश्वराराधनबुद्ध्या कुतो नानुतिष्ठन्तीत्यत आह—

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥३३॥

सदृशमिति । ज्ञानवानपि विद्वानपि स्वस्यास्स्वीयायाः प्रकृतेः प्राग्जन्मसंस्कारस्य सदृशमनुगुणमेव चेष्टते प्रवर्तते । भूतानि प्राणिनस्सर्वेपि प्रकृतिं प्राग्जन्मवासनां यान्त्यनुवर्तन्ते । एवंसति निग्रह इन्द्रियजयः किं करिष्यति ? न शक्नोतीत्यर्थः ॥३३॥

प्रकृतिवशवर्तित्वप्रकारमाह—

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥३४॥**

इन्द्रियेति । इन्द्रियस्येन्द्रियस्य श्रोत्रादिज्ञानेन्द्रियस्यार्थे शब्दादौ वागादिकर्मेन्द्रियस्यार्थे वचनादौ रागद्वेषौ तदनुबुभूषारूपो रागस्तदनुभवे प्रतिहते च द्वेषश्च व्यवस्थितावववर्जनीयतया स्थितावित्यर्थः । तावेवं श्वश्श्रेयसे यतमानं पुरुषं प्रसह्य स्वकार्येषु प्रवर्तयत इति भावः । तस्मात्तयो रागद्वेषयोर्वशमायत्ततां नागच्छेत् । यतश्चास्य श्रेयस्कामस्य तौ परिपन्थिनौ हि परमवैरिणः । यद्यपि भूतानां प्रकृती रागद्वेषादिवर्तिन्येव, तथापि तयोर्वशवर्ती न भवेरिति शास्त्रं नियमयति ॥३४॥

ननु स्वधर्मस्य युद्धादिरूपस्य यथावद्दुरनुष्ठेयत्वात्परधर्मस्याहिंसादेस्सुकरत्वाद्धर्मत्वाविशेषाच्च तत्र न कुतः प्रवर्तितव्यमित्यत्र आह—

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥३५॥**

श्रेयानिति । विगुणः कतिपयाङ्गहीनोऽपि स्वधर्मस्स्वस्ववर्णाश्रमविहितो युद्धादिस्स्वनुष्ठितात्सर्वाङ्गसम्पूर्णं समनुष्ठितादपि परधर्मात्तदपेक्षया श्रेयान् प्रशस्यतरः । तत्र को हेतुरित्यत आह—**स्वधर्म इति** । स्वधर्मे युद्धादौ निधनं मरणमपि श्रेयः स्वर्गादिप्राप्तेस्सुकीर्तिलाभश्चेति भावः । परधर्मस्तु स्वस्येति शेषः । भयावहः प्रतिषिद्धत्वेन नरकहेतुत्वादित्यर्थः ॥३५॥

---

**इन्द्रियस्येति, शास्त्रं नियमयतीति** । अत्रायं भावः—प्रकृतिर्विषयस्मरणादिना रागद्वेषजननपूर्वकमनवहितं पुरुषमनर्थे गम्भीरस्रोतसीव पातयति । शास्त्रं तु ततः पुरस्तादेव शब्दादिविषयरागद्वेषविनाशपूर्वकं परमेश्वरभजनादौ तरणाविव प्रवेशयति । एवं च नौकारूढो गम्भीरस्रोतस इव परमेश्वरसेवकः विषयप्रवाहादनर्थे न प्राप्नोतीति । एतेन स्वाभाविकीं पश्वादिसदृशीं प्रकृतिं विजित्य स्वधर्मे प्रवर्तितव्यमित्युक्तं भवति ॥३४॥

तयोर्न वशमागच्छेदित्युक्तं, तत्र रागद्वेषयोरपि प्रवर्तकः क इति विजिज्ञासुराह—

अर्जुन उवाच—

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय ! बलादिव नियोजितः ॥३६॥

अथेति । वार्ष्णेय वृष्णिवंशावतीर्णपूरुष! पापमनर्थरूपं कर्तुमनिच्छन्नपि बलान्नियोजित इव बलात्कारेण केन कारणभूतेन राज्ञेव प्रयुक्तः प्रेरितः चरत्याचरति तमनर्थमार्गप्रवर्तकं ब्रूहि- तद् ज्ञात्वा समुच्छेत्तुमिति भावः ॥३६॥

काममय एवायं पुरुष इति श्रुतिमनुसृत्योत्तरमाह—

श्रीभगवानुवाच—

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥३७॥

काम इति । एष त्वया पृष्टः रजोगुणसमुद्भवः दुःखप्रवर्तकप्रकृतिगुणप्रसूतः प्राचीनवासनाजन्य एष काम एव, क्रोधः काम एव केनचित्प्रतिहतः क्रोधरूपेण परिणमत इत्यर्थः । महाशनो महदशनमस्येति । 'यत्पृथिव्यां व्रीहियवं हिरण्यं पशवस्स्त्रियः । नालमेकस्य तत्सर्वं इति मत्वा शमं व्रजे'दिति स्मरणात् । महापाप्माऽतिभयङ्करः तेनैव प्रेरिताऽनर्थमिति जानन्नपि पापं करोति । तस्मादेनं काममिह संसारे वैरिणं जानीहि ज्ञात्वा तं जहीति भावः ॥

अस्य वैरित्वं दृष्टान्तैः प्रतिबोधयति—

धूमेनाव्रियते वह्निर्यथाऽदर्शो मलेन च ।
यथोल्बेनाऽऽवृतो गर्भस्तथा तेनेदमावृतम् ॥३८॥

धूमेनेति । इदं विवेकज्ञानं तेन कामेनावृतमाच्छादितं धूमेन वह्नि-

---

काम इति । वैरिणमिति । अत एव- 'अकामतः क्रियाः काश्चित्पश्यन्ते नेह कस्य चित् । यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥' इत्युक्तम् । एतेन कामोयं प्रतिषिद्धक्रियासु प्रवर्तयन् केनचित्प्रतिहतः क्रोधरूपेण परिणमन् हिंसामापादयंश्च जनस्य सर्वानर्थहेतुरित्युक्तं भवति ॥३७॥

राव्रियते आदर्शो मलेन च । यथा च गर्भ उल्बेन जरायुणा तथा कामेनावृतमित्यर्थः ॥३८॥

आवरणविधमाचष्टे—

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय ! दुष्पूरेणाऽनलेन च ॥३९॥

आवृतमिति । ज्ञानिनो ज्ञानस्वभावस्य जन्तोर्नित्यवैरिणा दुरन्तशत्रुणा विषयव्यामोहजननेनाविच्छिन्नसंसाररूपानर्थहेतुनेत्यर्थः । दुष्पूरेण पर्याप्तिरहितेनानलेन च- अत्र चशब्द इवार्थः । वह्निसदृशेन कामस्य वह्निसादृश्यं पुराणप्रसिद्धमेव । यथा 'न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इति कामरूपेण वाञ्छारूपेण नित्यवैरिणा ज्ञानं परमेश्वरविषयमुक्तिमूलमावृतमित्यर्थः ॥३९॥

शत्रोरधिष्ठानेऽज्ञाते स न जेतुं शक्य इति तदधिष्ठानमाह—

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥४०॥

इन्द्रियाणीति । इन्द्रियाणि श्रोत्रादीनि, वागादीनि च मनस्सङ्कल्पात्मकं बुद्धिरव्यवसायरूपा चास्य कामस्याधिष्ठानमित्यर्थः । एतैरिन्द्रियादिभिः सव्यापारैर्ज्ञानमाच्छाद्य देहिनं विमोहयतीत्यर्थः ॥४०॥

कामजयोपायमाह—

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ !
पाप्मानं प्रजहिह्येनं ज्ञानविज्ञाननाशनम् ॥४१॥

इन्द्रियाणीति । भरतर्षभ शत्रुजयकुशलेत्यर्थः । तस्मादिन्द्रियद्वारा देहिमोहकत्वात्कामस्य । आदौ मोहनात्पुरस्तादेव त्वमिन्द्रियाणि नियम्य निगृह्य विजित्येत्यर्थः । एवंज्ञानविज्ञाननाशनं कामरूपं पाप्मानं शत्रुं प्रजहिहि-घातयेत्यर्थः ॥४१॥

पूर्वस्मिन्श्लोके इन्द्रियाणां वशंकार्यत्वमुक्तमत्र वशीकार्यत्व इन्द्रियादीनां परापरभावं दर्शयति—

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥४२॥

वशीकार्यत्व इन्द्रियेभ्यः श्रोत्रादिभ्यः मनः परं, मनसि विषयध्यानप्रवृत्तौ विषयासन्निधानेपि रागादिविजृम्भणात् । तस्मादपि बुद्धिः परा- अध्यवसायाभावे मनसोऽकिंचित्करत्वात् । बुद्धेरप्यात्मा परः- सर्वस्यापि विषयप्रवृत्तेरात्मेच्छायत्तत्वात् । अत एवोक्तं- 'यो बुद्धेः परतस्तु स' इति ॥४२॥

एवं बुद्धेः परं बुध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो! कामरूपं दुरासदम् ॥४३॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगोनाम
तृतीयोऽध्यायः ।

एवमुक्तरीत्या प्रत्यगात्मानं बुद्धेः परं बुध्वा आत्मैव भूतनिश्चयात्मकया बुद्धयाऽऽत्मानं मनस्संस्तभ्य पारमेश्वरबुद्धया योगे प्रतिष्ठाप्य स्थिरीकृत्य दुरासदं दुर्धर्षं कामरूपशत्रुं जहीत्यर्थः ॥४३॥

इति श्रीमज्जगद्गुरु श्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्य
नीलकण्ठभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
तृतीयोऽध्यायः ।

---

अत्रार्थे श्रुतिः- 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति'रिति ।

अस्यायमर्थः—इन्द्रियेभ्योऽर्थास्तद्विषयाश्शब्दादयो वशीकार्यत्वपराः प्रबलाः । वश्येन्द्रियस्यापि विषयसन्निधाविन्द्रियविजृम्भणात्तेभ्यो मनः परं- मनसि विषयध्यानप्रवृत्तौ विषयासन्निधानेपि रागादिविजृम्भणात् । तस्मादपि बुद्धिः

परा- अध्यवसाय भावे मनसोऽकिञ्चित्करत्वात् । ततोऽप्यात्मा परः- सर्वस्यापि विषयप्रवृत्तेरात्मेच्छायत्तत्वात् । तत एवात्माऽणुरपि महानिति विशिष्यते । तस्मादप्यव्यक्तं शरीरं परम् । तदायत्तत्वात्सर्वासामपि पुरुषप्रवृत्तीनाम् । तस्मादपि परः सर्वान्तर्यामी सर्वप्रेरकः परिपूर्णत्वात्पुरुषशब्दवाच्यःशिव इतीन्द्रियादयो वशीकार्यतायामुत्तरोत्तरं परा उच्यन्त इति । 'यच्छेद्वाङ्मनसी प्राज्ञ' इत्यादिमन्त्रोऽप्युक्तमर्थं स्फुटीकरोति । तथा हि श्रु- 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेद्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्म'नीति । अस्य मन्त्रस्यायमर्थः—वागुपलक्षितं सर्वमपीन्द्रियजातं मनसि नियच्छेद्बाह्येन्द्रियव्यापकत्वमुत्सृज्य मनोमात्रेणावतिष्ठेत् । विषयविकल्पाभिमुखं तन्मन आत्मनि निश्चितायां बुद्धौ विषयदोषाध्यवसायरूपायां नियच्छेत्तां बुद्धिं महति प्रत्यगात्मनि नियच्छेत्तदुपादेयताविषयां तत्प्रवणं कुर्यात्, तं च प्रत्यगात्मानं निरुपप्लवे परमात्मनि यच्छेत्तच्छेषताप्रतिपत्तिं न कुर्यादिति । कथमयमर्थो लभ्यत इति चेत्पूर्वापरपरामर्शेन वागादिशब्देषु छान्दसव्युत्पत्त्याश्रयणात्कचित्किञ्चिन्नियच्छेदिति कर्माधिकरणयुक्तं हि नियमनं द्वितीयादिवाक्येषूच्यते । अतो वागित्यत्र द्वितीयार्थे प्रथमा सुपां सुलुगिति द्वितीयायास्सुलुग्वा मनसी इति छान्दसो दीर्घः । इयान् याजीत्यादिसूत्रेण सप्तम्या ईकारो वा चतुर्थवाक्ये तदिति लिङ्गव्यत्ययः पूर्ववाक्ये सप्तमीनिर्दिष्टस्यानन्तरवाक्ये द्वितीयया निर्देश इति पूर्ववाक्येषु दर्शनेनात्र तत्परस्य चात्मपरत्वात् ।

एतेन प्रकृतगीताविवृतौ गूढार्थदीपिकाख्यायां तत्कृता 'इन्द्रियेभ्यः परा ह्यर्था' इत्यादिमन्त्रे एतानामव्याकृतादिपरतया यद्व्याख्यातं तदसत्- ब्रह्ममीमांसायामानुमानिकाधिकरणे तत्रत्याव्यक्तपदस्य शरीरपरत्वेन निर्धारिततया तद्विरुद्धत्वात् । बहुश्रुत्यन्तरविरुद्धत्वाच्चेत्यलं बहुना ॥४२॥

इति श्रीमल्लोकाराध्यशिवयोगिमहोपाध्याय नागलिङ्गशिवाराध्य-
कृतायां लघुचन्द्रिकाख्यतत्त्वामृताकरव्याख्यायां
तृतीयोऽध्यायः ।

श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित
श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## यज्ञविभागयोगोनाम चतुर्थोऽध्यायः ।

तृतीयेऽध्याये मुमुक्षोः कर्मयोगसमुच्चितं ज्ञानयोगं विधाय तत्राप्यसङ्ग-कर्मयोग एव श्रेयांस्तत्र ज्ञानयोगस्याप्यन्तर्भावादिति समर्थितम् । एवं प्रपञ्च-स्थितिहेतुभूतस्य कर्मयोगस्य परमेश्वरार्पणविधानेन ज्ञानयोगसाहित्यमुपपादयितु-मादौ परम्पराप्राप्तत्वेन स्तुवन्—

श्रीभगवानुवाच—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥१॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तप! ॥२॥
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥३॥

इममिति । अर्जुन ! अयं कर्मयोगः केवलं युद्धप्रोत्साहनाय निगदित इति न मन्वीथाः, अपि तु लोकस्थितिमूलत्वात्, परमपुमर्थसाधनत्वाच्च योग-मिमं पुराऽहं नारायणो विवस्वते क्षत्रियकुलमूलकन्दायादित्याय प्रोक्तवानुप-दिष्टवान् । स तु मनवे स्वपुत्राय प्रोक्तवानित्यर्थः । सोऽपीक्ष्वाकवे निज-पुत्रायाऽब्रवीत् । 'ज्येष्ठपुत्राय प्रा'हेति श्रवणात् । एवमादित्यमारभ्य गुरु-परम्पराप्राप्तमिमं योगं राजर्षयः प्रभुत्वे सति सूक्ष्मार्थग्राहिण इत्यर्थः । राजर्षि-पदं मुमुक्षूणामुपलक्षकमन्येपीत्यर्थः । सोऽनादिवेदमूलोऽनन्तफलोऽनादिगुरु-परम्पराप्राप्तश्चेत्यर्थः । योगो महता दीर्घेण कालेन धर्महानिकरेणेत्यर्थः ।

नष्टः- विच्छिन्नसम्प्रदायो जात इत्यर्थः । स एवायं पुरातनोऽनादिगुरुपरम्पराप्राप्तो योगः- अद्य विच्छिन्नसम्प्रदाये काले मया ते तुभ्यं त्वं मम भक्तस्सखा चेति प्रोक्तः । मयान्यस्मै नोच्यत इत्यर्थः । हि यस्मादेतद्ज्ञानमुत्तमं रहस्यमतिरहस्यम् ॥३॥

वासुदेवस्य विवस्वन्तंप्रति योगोपदेशासम्भवं पश्यन्नर्जुनः पृच्छति—

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥४॥

अपरमिति । भवतो जन्म भवदुत्पत्तिः । अपरमल्पकालिकमिदानीन्तनत्वाद्विवस्वत आदित्यस्य जन्म । परं सर्गादिभवत्वाद्बहुपूर्वकालिकं- 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पय'दिति श्रवणादित्यर्थः । तस्मात्त्वेदानीन्तनत्वान्मनुष्यमात्रत्वादसर्वज्ञत्वाच्च त्वं पूर्वतनाय देववराय सर्वविद उपदिष्टवानित्येतदिममर्थं कथं विजानीयां विश्वसेयमित्यर्थः ॥४॥

एवं पृष्टवन्तमर्जुनं प्रति भवान्तर उपादिशमित्याह—

श्रीभगवानुवाच—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन !
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ! ॥५॥

बहूनीति । मे मम बहूनि जन्मानि तव च व्यतीतानि; तानि सर्वाण्यहं वेद जानामि; जातिस्मरत्वादित्यर्थः । त्वं तु न वेत्थ न जानासि । एतेनातीते जन्मनि प्रोक्तवानित्युक्तं भवति ॥५॥

स्वस्य जातिस्मरत्वे कारणमाह—

अजोपि सन्नव्ययात्मा भूतानामीश्वरोपि सन् ।
प्रकृतिं स्वामवष्टभ्य सम्भवाम्यात्ममायया ॥६॥

अजोऽपीति । अव्ययात्मा पारमेश्वरचिच्छक्त्यंशरूपः, अत एवाजोऽपि जन्मरहितोऽपि सन् भूतानां जीवानामीश्वरोऽपि पारमेश्वरचिच्छक्त्यंशभूतत्वा-

---

अजोपीति, पारमेश्वरचिच्छक्त्यंशरूप इति । श्रु- 'या उमा सा महाविष्णु'रिति श्रवणादित्यर्थः । अत एव हरिवंशे पारिजातसंहितायां'

देवेत्यर्थः। स्वां स्वीयां पारमेश्वरचिच्छक्तिरूपां प्रकृतिं मूलप्रकृतिमवष्टभ्याधिष्ठायात्ममायया स्वशक्त्या सम्भवामि शरीरधारणं करोमीत्यर्थः ॥६॥

कदा सम्भवसीत्यत आह—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत !
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥७॥

यदेति। धर्मस्य लोकस्थितिमूलस्य वर्णाश्रमनिबन्धनस्य; वेदविहितस्येत्यर्थः। ग्लानिर्हानिर्यदा भवति, अधर्मस्य वेदप्रतिषिद्धस्याभ्युत्थानमाधिक्यं तदाऽऽत्मानं देहं सृजामि बिभर्म्यवतरामीत्यर्थः ॥७॥

एवं पारमेश्वरशक्त्यंशभूतस्य तव भुवि किमर्थो देहपरिग्रह इत्याशङ्क्याह—

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥८॥

परित्राणायेति। साधूनां धार्मिकाणां परित्राणाय संरक्षणाय, दुष्कृतां पापिनां विनाशाय च वधाय च, धर्मसंस्थापनस्य दुष्टनिग्रहशिष्टानुग्रहमूलत्वादिति भावः। धर्मसंस्थापनार्थाय धर्मं स्थिरीकर्तुमित्यर्थः। लोकस्थितेर्धर्मस्थितिनिबन्धनत्वाल्लोकस्थितेर्मदधिकृतत्वाच्चेति भावः ॥८॥

---

पारिजातप्रार्थनार्थं वासुदेवेन दूततया इन्द्रं प्रति प्रेषितेन नारदेन नानाविधोपायैः प्रार्थित इन्द्रो यदा पारिजातं न दातुमैच्छत्तदा- 'य एको विश्वमध्यास्ते प्रधानं जगतो हरः। प्रकृत्याऽयं परं सर्वे क्षेत्रज्ञं वै विदुर्बुधाः ॥ तस्याऽव्यक्तस्य यो व्यक्तो भागस्स च भवोद्भवः। तस्यात्मा प्रथमो देवो विष्णुस्सर्वत्र धीमतः ॥ प्रकृत्याः प्रथमो भागः उमादेवीह शाश्वती। व्यक्तस्सर्वमयो विष्णुः स्त्रीसंज्ञो लोकभावनः ॥' इत्युक्तम्। तत्रैव श्रीकृष्णंतपश्चर्यानन्तरं शिवेन सह प्रत्यक्षीभूताया उमायाः कृष्णंप्रति- 'वत्स जाने तवानन्यां निश्चलां सर्वदाऽच्युत। अनन्यामीश्वरे भक्तिमात्मन्यपि च केवश ॥ त्वं हि नारायणस्साक्षात्सर्वात्मा पुरुषोत्तमः। प्रार्थितो दैवतैः पूर्वं सञ्जातो देवकीसुतः ॥ पश्य त्वमात्मनात्मानममलं परमं पदम्। नावयोर्विद्यते भेदमैक्यं पश्यन्ति सूरय' इति। एवं च नारायणस्य सर्वं पारम्यं शिवशक्त्यंशत्वमूलमेवेति भावः ॥६॥

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ! ॥९॥

जन्मेति । मे जन्म- अवताररूपं, कर्म धर्मपरिपालनरूपं च यस्तत्त्वतो याथार्थ्येन वेत्ति जानाति स तत्त्वविद्देहं त्यक्त्वा देहावसान इत्यर्थः । पुनर्जन्म पुनर्भवं नैति न प्राप्नोति । किंतु मां सर्वान्तरात्मतया मदन्तरात्मानं परमेश्वर-मेवैति प्राप्नोतीत्यर्थः ॥८॥

ननु भवदीयजन्मकर्मज्ञानेन वा परमेश्वरज्ञानेन वा कथं परमेश्वरप्राप्ति-रित्यत आह—

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥१०॥

वीतरागेति । वीतरागभयक्रोधाः वीता विगता रागभयक्रोधा राग-द्वेषादयो येभ्यस्ते तथोक्ताः, प्रशान्तान्तःकरणतया कामादिदोषरहिता इत्यर्थः । मन्मया अनन्यभावेन परमेश्वरध्यानपरा एवं मां मदन्तरात्मानं परमेश्वरमुपाश्रिता भक्तियोगेन सेव्यमाना ज्ञानतपसा ध्यानयोगेन पूता निर्दग्धाशेषकर्मपाशा बहवो योगिनो मद्भावं परमेश्वररूपतामागताः प्राप्ताः ॥१०॥

ननु ये ज्ञानतपसा पूता निष्कामास्ते परमेश्वरप्राप्तिरूपां मुक्तिमधि-गच्छन्ति, न त्वन्ये सकामा इति परमेश्वरस्य कथं पात्येषु मर्त्येषु वैषम्यं युज्यत इत्यत आह—

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्माऽनुवर्तन्ते मनुष्याः पार्थ ! सर्वशः ॥११॥

ये यथेति । ये जना मां मदन्तरात्मानं परमेश्वरं यथा येन प्रकारेण

---

जन्मेति, मदन्तरात्मानमिति । अस्मच्छब्दोऽन्तर्यामिपर इति भावः । अत्र ये ते वासुदेवस्येश्वरत्वमभिमन्यन्ते ते 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इत्यादिभिर्वक्ष्यमाणोक्तिभिः पराहन्यन्त इत्याशयः । नच वासुदेवगतजन्मकर्मज्ञानेन तदितरपरमेश्वर-प्राप्त्युक्तिर्विरुद्धेति शङ्क्यं, वासुदेवः पारमेश्वरचिच्छक्त्यंशभूत इत्यादिज्ञानस्य परमेश्वरज्ञानमूलत्वात्परमेश्वरज्ञानस्य च तत्प्राप्तिहेतुत्वाच्च ॥९॥

प्रपद्यन्ते सेवन्तेऽहं परमेश्वरस्तांस्तथैव तेन तेन प्रकारेणैव भजाम्यनुगृह्णातीत्यर्थः। मोक्षप्रदानेन निष्कामान् भोगप्रदानेन सकामांश्च सर्वानपि परमेश्वरोऽनुगृह्णातीति न तस्य किञ्चिदपि वैषम्यं विद्यते। सेवानुरूपफलप्रदानादित्याशयः। हे पार्थ! सर्वशस्सर्वेऽपीन्द्रादिसेवका अपि मनुष्या मम परमेश्वरस्य वर्त्म भजनमार्गमनुवर्तन्तेऽनुसरन्ति। इन्द्रादिरूपेणापि परमेश्वरस्यैव सेव्यमानत्वादित्यर्थः ॥११॥

ननु सर्वेऽपि किमिति मोक्षार्थमेव परमेश्वरं न सेवन्त इत्यत आह—

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥१२॥**

**काङ्क्षन्त इति।** ये जनाः कर्मणामग्निष्टोमादीनां सिद्धिं स्वर्गादिफलं काङ्क्षन्तः कामयमाना इह लोके देवता इन्द्रादीन् भजन्ते सेवन्ते तेषां जनानां कर्मजा कर्मफलभूता सिद्धिः स्वर्गादिः क्षिप्रं शीघ्रमेव भवति। नतु मोक्षसिद्धिः तस्या भक्तियोगैकलभ्यत्वात्। भक्तियोगस्यापि 'कोटिजन्मार्जितैः पुण्यैश्शिवे भक्तिः प्रजायते' इत्यनन्तजनुरन्तरारचितप्रभूतसुकृतैकलभ्यतया दुर्लभत्वादित्यर्थः ॥१२॥

भवदुक्तः कर्मयोगस्सर्वैरपि किमिति नानुष्ठेय इत्यत आह—

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥१३॥**

**चातुर्वर्ण्यमिति।** चत्वारो वर्णा एव चातुर्वर्ण्यं मया मदन्तर्यामिणा ईश्वरेण सृष्टमुत्पादितं, गुणकर्मविभागशः ब्राह्मणादीनां सत्त्वादिगुणप्रधानत्वात्, शमदमशौर्यादिकर्मपरत्वाच्च गुणानां कर्मणां च विभागैः सृष्टमित्यन्वयः। एवं तस्य गुणकर्मविभागप्रयुक्तस्य वर्णविभागस्य कर्तारं कारणभूतमपि मामकर्तारं विषमसृष्टेः प्राणिधर्माधर्मसापेक्षतया न निरपेक्षं कारणमिति विद्धि, अत एव सू- 'वैषम्यनैर्घृण्ये न सापेक्षत्वा'दित्याचार्येणोक्तम् ॥१३॥

उक्तमर्थमुपसंहरति—

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥१४॥

कर्माणि विचित्रसर्गादीनि मां मदन्तरात्मानं परमेश्वरं न लिम्पन्ति न स्पृशन्ति; सृष्टेः सृज्यप्राणिकर्ममूलत्वेन रागद्वेषप्रयुक्तत्वाभावादित्यर्थः । मे परमेश्वरस्य कर्मफले सर्गादिकर्मफले स्पृहा वाञ्छा न विद्यते, 'आप्तकामस्य का स्पृ'हेति श्रुतेरिति सृष्टेः पर्जन्यवन्निमित्तमात्रमेव परमेश्वरस्सृष्टिवैचित्र्ये तु करणभूतं सृज्यप्राणिकर्मैवेति मां परमेश्वरयाथात्म्यं यो जनोऽभिजानाति स विद्वान् कर्मभिः पुनर्भवप्रदैः पुण्यपापैर्न बध्यते; कर्मपाशाद्विमुक्तो भवतीत्यर्थः ॥

ये यथा मां प्रपद्यन्त इत्यादिचतुश्श्लोक्या प्रसङ्गात्प्राप्तमीश्वरस्य वैषम्यमपनुद्य पूर्वमुक्तं कर्मयोगं सविशेषमुपदेष्टुं प्रस्तौति—

एवं ज्ञात्वा कृतं कर्म सर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥१५॥

एवमिति । एवमुक्तरीत्या वैषम्यनैर्घृण्यरहितं मां परमेश्वरं ज्ञात्वा सर्वैः पूर्वैर्मन्वादिभिरपि मुमुक्षुभिः पूर्वतरं युगान्तरेपि कृतमाचरितं कर्मैव कर्मयोग एव, तस्मात्कारणात्त्वं कर्मैव कर्मयोगमेव कुर्वाचर ॥१८॥

वक्ष्यमाणः कर्मयोगो दुर्बोध इत्याह—

किं कर्म किमकर्मेति मुनयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यद्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१९॥

किमिति । कर्म मुमुक्षुणाऽनुष्ठेयं कर्म किं किंरूपम् ? अकर्मकर्तुरात्मनो याथात्म्यं किं किंरूपमिति । अत्रास्मिन्नर्थे कवयः प्रतिभाशालिनोऽपि मोहिता मोहं गता यथावन्न जानन्तीत्यर्थः । यत्कर्मयोगं ज्ञात्वा विज्ञाय अशुभात्संसारान्मोक्ष्यसे विमुक्तिमधिगमिष्यसि, तत्तथाविधं कर्मयोगं ते तुभ्यं प्रवक्ष्यामि ब्रवीमि । शृण्विति शेषः ॥१८॥

---

न मामिति, पर्जन्यवदिति । यथा सस्योत्पत्त्यादौ वृष्टिप्रदः पर्जन्यो निमित्तमात्रमेव, फलविशेषे तु तत्तत्क्षेत्रगतं सारवत्त्वं तथैवेत्याशयः ॥१४॥

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥१७॥

**कर्मण इति ।** कर्मणो नित्यनैमित्तिकरूपस्य विहितस्यापि तत्त्वं बोद्धव्यमस्ति । एवं विकर्मणः प्रतिषिद्धस्यापि बोद्धव्यमस्ति । अकर्मणश्च तूष्णींभावस्यापि तत्त्वं बोद्धव्यमस्तीत्यर्थः । तस्मात्कर्मणो विधिप्रतिषेधविषयस्य गतिस्तत्त्वं गहना दुर्विज्ञेयमित्यर्थः ॥१७॥

कर्माकर्मणोर्बोद्धव्यमाह—

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥१८॥

**कर्मणीति ।** कर्मणि विहिते नित्यनैमित्तिकरूपेऽकर्म परमेश्वराराधनरूपतयाऽबन्धहेतुत्वम् । फलासङ्गराहित्येन पुण्यपापरूपजन्मान्तरमूलत्वाभावादित्यर्थः । अकर्मणि च विहिताकरणे कर्म प्रत्यवायजनकत्वेन बन्धहेतुत्वं यः पश्येज्जानीयात्स जनो मनुष्येषु पण्डितम्मन्येषु बुद्धिमाञ्ज्ञानयोगवित् । कृत्स्नकर्मकृत्- परमेश्वराराधनबुद्ध्यानुष्ठितस्य कर्मणः प्रसादहेतुत्वेन तत्र सर्वकर्मफलानामन्तर्भावादित्यर्थः । युक्तः पारमेश्वरयोगयुक्तोऽपि भवति । पारमेश्वरभावयुक्तत्वादित्याशयः ॥१८॥

---

**कर्मणीति ।** यत्तु कर्मणि देहेन्द्रियव्यापारे विहिते प्रतिषिद्धे चाहं करोमीति धर्म्यध्यासेनात्मन्यारोपिते नौस्थेनाचलत्सु तटस्थवृक्षादिषु समारोपिते चलन इवाकर्त्रात्मस्वरूपालोचनेन वस्तुतः कर्माभावं तटस्थवृक्षादिष्विव यः पश्येत्स पश्यतीत्यादि, तदसङ्गतमेव- तेजस्तिमिरयोरिव विरुद्धस्वभावयोस्सदसतोरात्मानात्मनोः परस्परमध्यासस्याऽसम्भावितत्वेन नौस्थेनेत्याद्युपमाननिरूपणस्य वृथायासविलसितत्वात् ।

ततो यदपि कर्मणि नित्ये परमेश्वरार्थेऽनुष्ठीयमाने बन्धहेतुत्वाभावादकर्मेदमित्यादिना तदसङ्गतमेव नित्यकर्मण्यकर्मेदमिति ज्ञानस्याशुभमोक्षहेतुत्वाभावात् । मिथ्याज्ञानत्वेन तस्यैवाशुभत्वाच्चेत्यादि, तत्तुच्छम्—परमेश्वराराधन-

यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥१९॥

यस्येति । यस्य मुमुक्षोस्सर्वे नित्यनैमित्तिकादिरूपास्समारम्भास्समारभ्यन्त इति तथोक्ताः; कर्माणीत्यर्थः । कामसङ्कल्पवर्जिताः फलाभिसन्धिरहिता ज्ञानाग्निदग्धकर्माणं कर्माणि परमेश्वराराधनरूपतया परमेश्वरप्रसादद्वारा बन्धमुक्तिकराण्येवेति ज्ञानाग्निना जन्मान्तरमूलकर्मबीजानां दग्धत्वेन तथोक्तं, तमेव पण्डितं ज्ञानिनमाहुः । वेदार्थविद इति शेषः ॥१९॥

उक्तमर्थं विवृणोति—

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥२०॥

त्यक्त्वेति । कर्मफलासङ्गं- अनुष्ठीयमानस्य कर्मणः फले वाञ्छां त्यक्त्वोत्सृज्य नित्यतृप्तो नित्ये स्वात्मभूतपरमेश्वरे तृप्त आनन्दयुक्तः; परमेश्वरानुसन्धानसम्भावितानन्दानुभववानित्यर्थः । निराश्रयः- योगक्षेमायान्याश्रयरहितः, योगक्षेमविषये निश्चिन्त इत्यर्थः । 'योगक्षेमं वहाम्यह'मिति वक्ष्यमाणतया योगक्षेमभारं परमेश्वर एव प्रतिष्ठाप्य निर्विचार इत्यर्थः । एवम्भूतस्स विद्वान्कर्मणि नित्यनैमित्तिकादावभिप्रवृत्तोऽप्याचरन्नपि किञ्चिदपि न करोत्येव । कर्मापदेशेन तेन पारमेश्वरज्ञानस्यैवाभ्यस्यमानत्वात्; फलाभिसन्धिराहित्येन कर्मगतपुनर्भवांकुराणां दग्धत्वाच्चेति भावः ॥२०॥

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥२१॥

निराशीरिति । निराशीः निर्गता आशीः कामना यस्य स निष्कामः

---

बुद्ध्या समनुष्ठितस्य कर्मणोऽबन्धकत्वस्य मुनेरूपेतत्वेन तदनभ्युपगमस्य शास्त्रार्थविपर्यासीकरणनिश्चयकृतत्वात्पारमेश्वरद्वेषमूलत्वाच्च । ततोऽपि यदुक्तं शास्त्रेण नामादिषु ब्रह्मदृष्टिवदविहितत्वादित्यादिना, तदयुक्तमेव- 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव'इति कर्मणां परमेश्वराराधनरूपत्वस्य विहितत्वात्, तस्माद्यथोक्तमेव युक्तम् ॥१८॥

यतं नियमितं चित्तं मन आत्मा शरीरं च यस्य स तथोक्तः। त्यक्तस्सर्वविधोपि परिग्रहो येन, सर्वत्र ममताशून्य इत्यर्थः। शारीरं केवलं शरीरपोषणोपयुक्तमात्रमपि कर्म कुर्वन् शरीरमात्रनिर्वर्त्यं नित्यनैमित्तिकादिकमाचरन् किल्बिषं मोक्षप्रतिबन्धकं दोषं नाप्नोतीत्यर्थः ॥२१॥

यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः।
समस्सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥२२॥

यदृच्छालाभसन्तुष्टः अप्रयत्नोपपन्नलाभेनैव सन्तृप्तः, द्वन्द्वातीतः शीतोष्णादिसहः, विमत्सरः निर्वैरः, अयत्नोपनतस्य सिद्धावसिद्धावपि समः हर्षशोकरहित एवंभूतः कर्मयोगी कर्म कृत्वापि न निबध्यते स्वीयेन शुभाशुभरूपेण तत्फलेन न लिप्तो भवतीत्यर्थः ॥२२॥

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥२३॥

गतसङ्गस्य निष्कामस्य, ज्ञाने पारमेश्वरेऽवस्थितं चेतो यस्य तस्य, यज्ञाय परमेश्वरार्थं कर्म कुर्वतः समग्रं सर्वमपि प्रविलीयते प्रकर्षेण विलीयते; पुनर्जन्मबन्धकरं न भवतीत्यर्थः ॥२३॥

एवं प्रकृतिविविक्तात्मस्वरूपानुसन्धानेन कृतत्वात्कर्मणो ज्ञानाकार्यत्वमुक्त्वाऽथ सर्वस्य कर्मणः परमेश्वरात्मकत्वेनानुष्ठानाद्ज्ञानाकार्यत्वमुपपादयति—

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्म कर्मसमाधिना ॥२४॥

अर्प्यतेऽनेनेत्यर्पणं स्रुक्स्रुवादि ब्रह्म परमेश्वर एव, हविराज्यादिकं ब्रह्म परमेश्वर एव, ब्रह्माग्नौ हूयमानोऽग्निरपि परमेश्वर एव, तस्मिन् ब्रह्मणा कर्त्रा हुतं हूयत इत्येवं ब्रह्मणि परमेश्वर एव कर्मरूपे समाधिश्चित्तवृत्तिर्यस्य तेन गन्तव्यं प्राप्तव्यं ब्रह्मैव परमेश्वर एव, नतु फलान्तरमित्यर्थः ॥२४॥

---

कृत्वापीति। ज्ञाननिष्ठां विनापीति भावः ॥२२॥

न तु फलान्तरमिति। अग्निः कर्ता क्रियापि सर्वं परमेश्वर एवेति निश्चयेन कर्माचरतस्तत्र बन्धकं भवतीति। किंतु परमेश्वरसायुज्यरूपपरममुक्तिसाधकमेवेति भावः ॥२४॥

दैवमेवाऽपरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥२५॥

दैवमिति । दैवं देवतोद्देशेन हविस्त्यागरूपमेव यज्ञ इत्यपरे केचिद्योगिनः कर्मयोगिनः पर्युपासतेऽनुतिष्ठन्तीत्यर्थः । अपरेऽन्ये तु ब्रह्माग्नौ 'रुद्रो वा एष यदग्नि'रित्यादिश्रुतिप्रामाण्येन परमेश्वररूपेऽग्नौ यज्ञं ब्रह्मार्पणमिति पूर्वश्लोकोक्तप्रकारेणोपजुह्वति यज्ञमनुतिष्ठन्तीत्यर्थः ॥२५॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्ये इन्द्रियाग्निषु जुह्वति ॥२६॥
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥२७॥

श्रोत्रादीनीति । श्रोत्रादीनीन्द्रियाणि संयमरूपाग्नौ जुह्वति विलापयन्ति इन्द्रियाणि निपीड्य संयमनिष्ठा भवन्तीत्यर्थः । प्रतीन्द्रियमपि संयमस्य भिन्नत्वेन युज्यते बहुत्वम् । अन्ये तु शब्दादीन्विषयानिन्द्रियरूपेष्वग्निषु जुह्वत्यर्पयन्ति । अपरे तु इन्द्रियकर्माणि ज्ञानेन्द्रियाणां श्रवणादिकर्माणि कर्मेन्द्रियाणां वचनादिकर्माणि च ज्ञानदीपिते आत्मसंयमे ध्यानरूपे योगाग्नौ जुह्वति विलापयन्तीत्यर्थः ॥२६-२७॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयस्संशितव्रताः ॥२८॥

द्रव्ययज्ञा इति । द्रव्यदानमेव यज्ञो येषां ते द्रव्ययज्ञाः । कृच्छ्रचान्द्रायणादितप एव यज्ञो येषां ते तपोयज्ञाः । योगश्चित्तवृत्तिनिरोध एव यज्ञो येषां ते योगयज्ञाः । स्वाध्यायो वेदपाठः श्रीरुद्राध्यायादिजपविज्ञानं पशुपाशपतिज्ञानमेव च जपो येषां ते स्वाध्याययज्ञा ज्ञानयज्ञाश्च । यतयो यत्नशीलाः सम्यक्शितानि तीक्ष्णानि व्रतानि येषां ते व्रतयज्ञाश्च सर्वेऽप्येते यान्ति ब्रह्म सनातनमित्युत्तरेणान्वयः ॥२८॥

---

इन्द्रियरूपेष्वग्निष्विति । विषयानुभवदशायामपि निस्सङ्गा अग्नित्वेन भावितेष्विन्द्रियेषु शब्दादीन् हविर्भावनया समर्पयन्तीति भावः ॥२६-२७॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगती रुध्वा प्राणायामपरायणाः ॥२९॥
अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।

अपान इति । केचित्प्राणमपाने जुह्वति पूरकं कुर्वन्तीत्यर्थः । अपानं प्राणे जुह्वति रेचकं कुर्वन्ति; प्राणापानगती रुध्वा कुम्भकं कृत्वा प्राणायामपरायणाः प्राणायाममाचरन्तः प्राणायामपरा अपि सनातनं ब्रह्म यान्तीत्युत्तरेणान्वयः । अपरे नियताहारा आहारनियमरूपव्रतपराः जीव्यमाणेषु प्राणेषु तत्तदिन्द्रियेषु प्राणांस्तद्वृत्तीर्जुह्वति तत्तदिन्द्रियवृत्तिलयं भावयन्तीत्यर्थः ॥२९॥

सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥३०॥
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ! ॥३१॥

एते उक्ता द्रव्ययज्ञादिपरास्सर्वेऽपि यज्ञविदो यज्ञस्वरूपविद एव । यज्ञैर्द्रव्ययज्ञादिभिः क्षपितं नाशितं कलुषं येषां ते तथोक्ताः । यज्ञान् कृत्वा तदुत्तरकाले शिष्टमवशिष्टममृतरूपमन्नं भुञ्जत इत्येवंविधाः । परमेश्वराराधनबुद्ध्या कर्मयज्ञानाचरन्तः परमेश्वरानुग्रहेणैव पशुपाशप्रतिरूपज्ञानमवाप्य सनातनं ब्रह्म परमेश्वरं यान्ति सायुज्यमुक्तिं लभन्त इत्यर्थः । अयज्ञस्योक्तेष्वेकमप्यनाचरतोऽयं लोकोऽल्पसुखोपीत्यर्थः । नास्त्यन्यो बहुसुखस्स्वर्गः कुतः कथमपि न स्यादिति भावः ॥३१॥

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥३२॥

एवमिति । एवमुक्तप्रकारेण बहुविधा यज्ञा ब्रह्मणो वेदस्य मुखद्वारे

---

द्रव्यदानमेवेति । न्यायार्जितधनत्याग इत्यर्थः । त्यागश्चेष्टापूर्तदत्तरूपेण विविधो द्रष्टव्यः । व्रतानीति नक्तव्रतादीनीति भावः ॥२८॥

आहारनियमेति । भरितव्रतनिष्ठा इत्यर्थः । तत्तदिन्द्रियेष्विति । 'जिह्वांगे गुरुलिङ्गं स्या'दित्यादिस्मृत्या जिह्वादिषु रसादीनर्पयन्ति ये तेप्यर्पणयज्ञपरा अपीति भावः ॥२९॥

वितता विस्तरेणोक्ता इत्यर्थः । सर्वानपि तान् कर्मजान् कायिकवाचिकमानसिककर्मसम्भवान्विद्धि जानीहि । एवं ज्ञात्वा विमोक्ष्यसे बन्धविमुक्तिं गमिष्यसीत्यर्थः ॥३२॥

कर्मयोगे ज्ञानस्यान्तर्भूतत्वात्कर्मणो ज्ञानरूपत्वमुक्तम् । तत्र ज्ञानांशस्य प्राधान्यमाह—

श्रेयान्द्रव्यमयाद्यज्ञाद्ज्ञानयज्ञः परन्तप !
सर्वं कर्माखिलं पार्थ! ज्ञाने परिसमाप्यते ॥३३॥

श्रेयानिति । कर्मज्ञानोभयात्मककर्मणि द्रव्यमयाद्यज्ञात्कर्मरूपादंशाद्ज्ञानयज्ञो ज्ञानरूपांशश्श्रेयान् श्रेष्ठः । तत्र कारणमाह—पार्थ! अखिलमप्रतिबद्धं समस्तं श्रौतस्मार्तरूपं कर्म ज्ञाने पतिपशुपाशस्वरूपविषये परिसमाप्यते तत्राराधनत्वेनोपयुज्यत इत्यर्थः ॥३३॥

मोक्षसाधनभूतज्ञानसिद्धौ साधननाह—

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥३४॥

तदिति । तद्ज्ञानमविनाशि तु 'तद्विद्धी'त्यारभ्य 'एषा तेऽभिहिता साङ्ख्ये बुद्धि'रितिपर्यन्तं मयोक्तम् । ज्ञानं तेऽहमित्यादिना वक्ष्यमाणं च प्रणिपातेन प्रकर्षेण नीचैः पतनेन, परिप्रश्नेन कुतो मम संसारप्राप्तिः ? कथं च तन्निवृत्तिरिति प्रश्नेन, सेवया शुश्रूषया च तत्त्वदर्शिनो याथार्थ्यविदो ज्ञानिनः समाधिसाक्षात्कृतपारमेश्वरस्वरूपा महान्तस्ते ज्ञानं पत्यादिविषयं तदुपदेक्ष्यन्ति ज्ञापयिष्यन्तीत्यर्थः ॥३४॥

ज्ञानप्राप्तिफलमाचष्टे—

यद्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव !
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥३५॥

यदिति । पाण्डव! ज्ञानिभिरुपदिष्टं यद्ज्ञानमधिगम्य पुनस्तत एव मनुष्याद्यात्माभिमानरूपं मोहं बन्धुवधादिमूलं भ्रमं न यास्यसि, किंच येनैव ज्ञानेन अशेषाणि समस्तानि भूतानि प्राणिजातान्यात्मनि स्वात्मनि, ततो मयि

परमेश्वरे च द्रक्ष्यसि । 'निरञ्जनः परमं साम्यमुपै'तीति श्रुतिसिद्धपरमेश्वरे परमसाम्यरूपमोक्षं लभिष्यसीत्यर्थः ॥३५॥

**अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।**
**सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥३६॥**

**अपीति ।** त्वं यदि सर्वेभ्यः पापात्मभ्यः पापकृत्तमः अतिशयेन पापकारी स्याचेदपि सकलमपि पापजलधिं ज्ञानरूपेण पोतेन सन्तरिष्यसि अनायासेनातिक्रमिष्यसीत्यर्थः ॥३६॥

एवं कर्मणामकार्यकरत्वेन तदतिलङ्घने दृष्टान्तमभिधाय तन्नाशे दृष्टान्तमाह—

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।**
**ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ॥३७॥**

**यथेति ।** समिद्धः प्रज्वलितोऽग्निरेधांसि काष्ठानि यथा भस्मसात्करोति तथैव ज्ञानाग्निस्सर्वाण्यपि कर्माणि भस्मीकरोतीत्यर्थः ॥३७॥

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥३८॥**

**न हीति ।** तस्माद्ज्ञानेन सदृशं ज्ञानतुल्यं ततोऽन्यत्पवित्रं पावनमिह तद्योगादिषु न विद्यते । तद्ज्ञानं योगसंसिद्धः कर्मयोगपूर्वकध्यानयोगसिद्धिद्वारा कालक्रमेण स्वयमात्मन्येव विन्दति जानातीत्यर्थः ॥३८॥

---

**मोक्षमिति ।** स्वात्मनि परमेश्वरेपि सर्वभूताधिकरणत्वे दर्शनस्य परमेश्वरसारूप्यैकलभ्यत्वादिति भावः ॥३५॥

**पापजलधिमिति ।** जलधिवद्दुस्तरमपीति भावः ॥३६॥

**कर्माणीति ।** पुण्यपापरूपाणीत्यर्थः । पापस्येव पुण्यस्यापि जन्ममूलत्वेन बन्धकत्वात् ॥३७॥

**स्वयमिति ।** 'ततस्तु तं पश्यते निष्कलं ध्यायमानः पुरि शयं पुरुषमीक्षते' इत्यादिश्रुतिशतेन निगदितः । परमेश्वरसाक्षात्कारः स्वसंवेद्य एव, नतु गुर्वादिभिः संवेदयितुं शक्य इति भावः ॥३८॥

श्रद्धावान् लभते ज्ञानं तत्परस्संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शक्तिमचिरेणाधिगच्छति ॥३९॥

श्रद्धावानिति । श्रद्धावान् गुरूपदिष्टे शास्त्रोक्ते वाऽऽस्तिक्यबुद्धियुक्तः तत्परो योगसाधनैकायत्तचित्तस्संयतेन्द्रियस्सम्यङ्निश्चितबाह्याभ्यन्तरिन्द्रियो ज्ञानं समाधिलभ्यपरमेश्वरसाक्षात्काररूपमपरोक्षज्ञानं लभते । तादृशं ज्ञानं लब्ध्वाऽचिरेण शीघ्रमेव परां शन्तिं परममुक्तिमधिगच्छति प्राप्नोतीत्यर्थः ॥३९॥

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥४०॥

अज्ञ इति । अज्ञश्शास्त्राचार्योपदेशजन्यज्ञानरहितो वाऽश्रद्दधानः-उपदिष्टेपि पतिपशुपाशविषये ज्ञाने आस्तिक्यरहितो वेदं मम सिध्येद्वा न वेति तत्र संशयाक्रान्तचित्तो वा विनश्यति स्वार्थाद्भ्रश्यतीत्यर्थः । त्रिष्वपि संशयात्मा पापिष्ठ इत्याह—संशयात्मन इति । अयं लोको नास्ति- धनार्जनादिविरहात् । परलोकोऽपि नास्ति- कर्मयोगाभावात् । सुखं सुखलाभोऽपि नास्तीत्यर्थः ॥४०॥

योगसन्न्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ! ॥४१॥

योगसन्न्यस्तकर्माणं परमेश्वराराधनरूपेण कर्मयोगेन सन्न्यस्तानि तस्मिन्नर्पितानि कर्माणि, अथ वा समाधिनिष्ठापारवश्यात्सन्न्यस्तानि सुप्तहस्तस्थपुष्पवत्स्वयमेव प्रच्युतानि यस्य तं तथाविधम्— ज्ञानेन परमेश्वरसाक्षात्काररूपापरोक्षज्ञानेन सम्यग्भिन्नास्संशया यस्य 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः' इति श्रुतेः तथाविधम् । आत्मवन्तमप्रमत्तं कर्माणि बन्धकानि पूर्वकर्माणि न निबध्नन्ति । पुनर्जन्मसाधकानि न भवन्तीत्यर्थः ॥४१॥

---

सुखलाभोऽपीति । संशयेनैव भोगलाभो न स्यादिति भावः ॥४०॥

तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ ! भारत ! ॥४२॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे यज्ञविभागयोगो नाम चतुर्थोऽध्यायः ।

तस्मादिति । ततोऽज्ञानसम्भूतमविवेकसम्भवं मनोगतं संशयं गुरूपदेशजन्यज्ञानासिना छित्त्वा मदुपदिष्टं कर्मयोगमनुतिष्ठ । तदर्थमुत्तिष्ठ युद्धायेत्यर्थः ॥४२॥

इति श्रीमज्जगद्गुरुश्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्यनीलकण्ठभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये चतुर्थोऽध्यायः ।

---

इति श्रीमल्लोकाराध्यशिवयोगिमहोपाध्यायनागलिङ्गशिवाराध्यकृतायां लघुचन्द्रिकाख्यतत्त्वामृताकरव्याख्यायां चतुर्थोऽध्यायः ।



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु



## कर्मयोगोनाम पञ्चमोऽध्यायः ।

अर्जुन उवाच—

सन्न्यासं कर्मणां कृष्ण! पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥१॥

सन्न्यासमिति । चतुर्थे- 'यस्य सर्वे समारम्भा' इति कामसङ्कल्पादिरहितस्य कर्मणो ज्ञानाकारत्वमुक्तं, इदानीं कर्मयोगस्याऽऽत्मप्राप्तिसाधनत्वेपि ज्ञाननिष्ठाया एवान्तरङ्गत्वं कर्मयोगान्तर्गताकर्तृत्वानुसन्धानप्रकारं च प्रतिपाद्य तन्मूलविज्ञानं विशोध्यते । योगसन्न्यस्तकर्माणमिति । ज्ञानयोगं नियतं कुरु कर्म त्वमिति कर्मयोगं च शंससि, एतयोर्निश्चितमेकमेव वदेत्यन्वयः ॥१॥

---

एकमेवेति । एतयोर्मध्ये यस्मिन्नेकस्मिन्ननुतिष्ठते मम श्रेयस्स्यात्तदेव ब्रूहीत्याशयः । नन्वत्र सन्न्यासं ज्ञानयोगपरतया विवृतं भाष्यकृद्भिः, परैस्तु कर्मसन्न्यासपरतया, अत्र परकीयमेव विवरणं मूलानुसारितया प्रतिभातीतिचेन्न, पुरस्तात्क्वापि कर्मसन्न्यासस्यानुक्तत्वत्- 'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां श्रुणु, लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ । ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति च ज्ञानयोगकर्मयोगयोरेवोक्तत्वप्रतिज्ञानाच्च । नच कर्मण्यकर्म यः पश्येदित्यादिवचनैः कर्मसन्न्यासः प्रतिपादित इति परैरुक्तमिति शङ्क्यम् । तेषां वचनानां कर्मसन्न्यासप्रतिपादकत्वाभावात्प्रत्युत—

श्रीभगवानुवाच—

सन्न्यासः कर्मयोगश्च निश्श्रेयसकरावुभौ ।
तयोऽस्तु कर्मसन्न्यासात्कर्मयोगो विशिष्यते ॥२॥

सन्न्यास इति । सन्न्यासो ज्ञानयोगः कर्मयोगश्चोभावपि निश्श्रेयसकरौ; एवमप्युभयोर्ज्ञानयोगात्कर्मयोगो विशिष्यते विशिष्य निश्श्रेयसकर इत्यर्थः ॥२॥

ज्ञेयस्स नित्यसन्न्यासी यो न द्वेष्टि न कांक्षति ।
निर्द्वन्द्वो हि महाबाहो! सुखं बन्धात्प्रमुच्यते ॥३॥

ज्ञेय इति । न द्वेष्टि न कांक्षति रागद्वेषरहितस्सन् परमेश्वराराधनबुद्ध्या यः कर्माण्यनुतिष्ठति स एव नित्यसन्न्यासी ज्ञानयोगनिष्ठ इति ज्ञेयः । निर्द्वन्द्वः- रागद्वेषशून्यः, बन्धात्सुखं प्रमुच्यते विमुक्तो भवतीत्यर्थः ॥३॥

---

'यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत् । एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ॥ कर्तव्यानीति मे पार्थ! निश्चितं मतमुत्तमम् । काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः ॥ सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः । न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ॥ नच सन्न्यसनादेव सिद्धिं समधिगच्छति । नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते ॥ मोहात्तस्य परित्यागः तामसः परिकीर्तित' इति च ।

काम्यकर्मफलत्यागयोरेव त्यागत्वविधानपूर्वकं कर्मसन्न्यासस्य कण्ठरवेणैव निराकरिष्यमाणत्वात् , परस्तादपि 'साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिता' इति भगवतैव सन्न्यासपदस्य ज्ञानयोगपरतया निर्धारितत्वाच्च । तस्मात्सन्न्यासशब्दितो ज्ञानयोग एवेति युक्तः ॥१॥

निश्श्रेयसकराविति । ज्ञानयोगशक्तस्यापीति शेषः । विशिष्येति । अत्यन्तमुपकारक इति भावः ॥२॥

ज्ञानयोगनिष्ठ इति । अनुष्ठीयमाने कर्मणि परमेश्वराराधनरूपत्वनिश्चयात्पारमेश्वरज्ञानयोगनिष्ठ एवेति भावः ॥३॥

कर्मज्ञानयोगयोस्तुल्यफलत्वमाह—

साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।
एकमप्यास्थितस्सम्यगुभयोर्विन्दते फलम् ॥४॥

साङ्ख्ययोगाविति। साङ्ख्ययोगौ ज्ञानयोगकर्मयोगौ पृथग्भिन्नाविति बालाः प्रवदन्ति; पण्डितास्तत्त्वविदस्तु नैवं मन्यन्ते। द्वयोरपि परमेश्वरप्राप्तिसाधनत्वेन तयोरेकमपि सम्यगास्थितोऽनुष्ठाता उभयोरप्यनुष्ठितयोर्यत्फलं बन्धविमुक्तिद्वारा परमेश्वरप्राप्तिरूपं तद्विन्दते प्राप्नोति ॥४॥

उक्तार्थं विवृणोति—

यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।
एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥५॥

यदिति। साङ्ख्यैर्ज्ञाननिष्ठैर्यत्परमेश्वरसायुज्यरूपं स्थानं पदं प्राप्यते तत्पदं योगैः कर्मनिष्ठैरपि गम्यते प्राप्यते। साङ्ख्यं योगं च द्वयमप्येकमभिन्नत्वेन यः पश्यति मनुते स एव पश्यति, पारमेश्वरतत्त्वविद्भवतीति ॥५॥

द्वयोरविशेषत्वेपि फलप्राप्तिद्वारे क्रियान्विशेषो विद्यत इत्याह—

सन्न्यासस्तु महाबाहो! दुःखमाप्तुमयोगतः।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥६॥

सन्न्यासस्त्विति। सन्न्यासो ज्ञानयोगस्त्वयोगतः कर्मयोगं विहायाप्तुमधिगन्तुं दुःखमशक्य इत्यर्थः। योगयुक्तः कर्मयोगनिष्ठो मुनिः कर्मणः परमेश्वराराधनरूपत्वेन पारमेश्वरतत्त्वमननशीलस्सुखेनानायासेनैव न चिरेणाल्पकालेन ब्रह्माधिगच्छति प्राप्नोतीत्यर्थः ॥६॥

---

साङ्ख्ययोगाविति। पण्डितास्तु नैवं मन्यन्त इति। एतेन फलादिभेदात्कर्मज्ञानयोगयोर्भिन्नाधिकारिकत्वमभिमन्वतामीप्सितं व्याहतम् ॥४॥

यदिति। स एवेति। कर्मज्ञानयोगद्वयाभिन्नत्वनिश्चयवानेवेत्यर्थः। तत्त्वविद्भवतीति। याथात्म्यज्ञानद्वारा पारमेश्वरसायुज्यरूपपरममुक्तिभाग्भवतीति भावः ॥५॥

सन्न्यासस्त्विति। अनायासेनैवेति। एतेन ज्ञानं योगस्य दुःखसाध्यत्वात्तन्निष्ठश्चिरेणैव मुक्तो भवतीत्युक्तं भवति ॥६॥

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥७॥

योगयुक्त इति । योगयुक्तो विहिते परमेश्वराराधनरूपे कर्मणि वर्तमानोऽत एव विशुद्धात्मा चित्तशुद्धस्तत एव विजितात्मा विजितेन्द्रियमनस्कः सर्वभूतात्मभूतात्मा सर्वेषां भूतानां देवादीनां प्राणिनामात्मभूतः परमात्मरूपः परमेश्वर एव । स्वयमपि परमात्मेति मन्वानः कुर्वन् कर्माचरन्नपि न लिप्यते तत्फलेन न लिप्तो भवतीति ॥७॥

कर्माचरणप्रकारमेवाह—

नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन् शृण्वन्स्पृशन् जिघ्रन्नश्नन्गच्छन्स्वपन्श्वसन् ॥८॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥९॥

नैवेति । तत्त्ववित्परमेश्वरोपासको युक्तः कर्मयोगनिष्ठश्श्रोत्रादीनि ज्ञानेन्द्रियाणि वागादीनि कर्मेन्द्रियाणि च पञ्च प्राणाश्च स्वस्वविषयेषु वर्तन्त इति धारयन्नवधारयन्नहं न किञ्चित्करोमीति मन्यते । ज्ञानात्मनो मम कर्ममूलमिन्द्रियादिसम्बन्धनिबन्धनं कर्तृत्वं न स्वतस्सिद्धमिति निश्चिनोतीत्यर्थः ॥८-९॥

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥१०॥

ब्रह्मणीति । यः कर्माणि ब्रह्मणि परमेश्वरे आधाय समर्प्य सङ्गं

---

योगयुक्त इति । अत एवेति । शास्त्रविहितस्य परमेश्वराराधनभावेनानुष्ठितस्य च कर्मणश्चित्तशुद्धिसाधकत्वादित्यर्थः ॥७॥

नैवेति । श्रोत्रादीनीति । दर्शनश्रवणस्पर्शनाघ्राणनाशनानि चक्षुरादिज्ञानेन्द्रियव्यापारा गतिः पादयोस्स्वापो बुद्धेश्श्वासः प्राणस्य प्रलपनं वाचो विसर्गः पायूपस्थयोरुन्मेषनिमेषौ कूर्माख्यप्राणविशेषस्य च नेत्रयोः । एवमिन्द्रियादीनां व्यापाराः पश्यन्नित्यादिना निबद्धा इति भावः ॥८-९॥

फलाभिसन्धिं त्यक्त्वा करोत्याचरति स पापेन संसारनिदानेन तत्फलेन न लिप्यते न बध्यते, यथा पद्मपत्रमित्यर्थः ॥१०॥

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥११॥

कायेनेति । केवलैः कर्मोऽभिनिवेशरहितैः कायादिभिः सङ्गं फलतृष्णां विहाय आत्मशुद्धये चित्तशुद्धये कुर्वन्ति ईश्वरायैव करोमि, नतु मम फलायेति भावेनानुतिष्ठन्तीत्यर्थः ॥११॥

बन्धमूलस्य कर्मणः कथं बन्धनिवारकत्वमित्याशङ्क्याधिकारिभेदेन युज्यत इत्याह—

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥१२॥

युक्त इति । युक्तः परमेश्वरप्रीत्यर्थं कर्म करोमीति भाववान् कर्मफलं त्यक्त्वा कर्मफलभूतं बन्धं विहाय, नैष्ठिकीं परमेश्वरसायुज्यरूपां शान्तिं मुक्तिमाप्नोति । अयुक्तो ममाभ्युदयायैव करोमीति भाववान् कामकारेण मनोरथपारवश्येन फले कर्मफले सक्तस्तु बध्यते बद्ध एव वर्तत इत्यर्थः ॥१२॥

इदानीं देहादिरूपेण परिणतायां प्रकृतौ कर्तृत्वसन्न्यास उच्यते—

सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देहे नैव कुर्वन्नकारयन् ॥१३॥

सर्वेति । आत्मनः कर्तृत्वं प्राक्तनकर्मफलभूतदेहसम्बन्धसिद्धं, न

---

ब्रह्मणीति । कर्माणीति । वैदिकानि लौकिकान्यपीत्यर्थः । यथा पद्मपत्रमिति । यथा पद्मपत्रमुपरि निक्षिप्तेन जलेन न लिप्यते तथेति भाव. ॥

कायेनेति । कायादिभिरिति । कायेन स्नानादिमनसा ध्यानादिबुद्ध्या तत्त्वनिश्चयादित्यर्थः ॥११॥

युक्त इति । कर्मफलभूतमिति । पुण्यपापरूपमित्यर्थः । तस्यैव जन्मनिदानत्वादिति भावः ॥१२॥

सर्वेति । नवद्वार इति । नेत्रे नाशिके श्रोत्रे मुखं चेति सप्त शिरो-

स्वाभाविकमिति विवेकयुक्तेन मनसा नवद्वारपुरे देहे सन्न्यस्य देही स्वयं वशी देहेन्द्रियादिपारवश्यरहितो न कुर्वन् कर्तृत्वकारयितृत्वरहितस्सुखमास्ते निश्चलस्तिष्ठतीत्यर्थः ॥१३॥

अथात्मानस्स्वाभाविकं रूपमाह—

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥१४॥

न कर्तृत्वमिति । प्रभुरकर्मवश्य आत्मा लोकस्य देवमानवस्थावरादिरूपेण वर्तमानस्य कर्तृत्वं देवाद्यसाधारणं कर्माणि तत्तदसाधारणानि कर्मफलसंयोगं तत्तत्कर्मजन्यं फलयोगमपि न सृजति नोत्पादयति । कथं तर्हि संसारप्रवृत्तिरिति चेत्स्वभावस्तु प्रकृतिवासनैव प्रवर्तते । अनादिभूतपूर्वपूर्वकर्मजनितवासनाकृतमेव कर्तृत्वादिकं न स्वरूपसिद्धमित्यर्थः ॥१४॥

नादत्ते कस्यचित्पापं नचैवं सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥१५॥

नादत्त इति । कस्यचित्स्वसम्बन्धिनो दारपुत्रादेः पापं दुःखं नादत्ते नापनुदति; एवमन्यस्येति शेषः । परस्य सुकृतं शुभमपि नादत्ते न वारयति । ततोऽयं विभुर्न कस्यचित्कस्तस्मात्कस्यचिदपि नानुकूलः प्रतिकूलश्चेत्यर्थः । यद्येवं कथमियं विपरीतवासनोद्भूतेत्याशङ्क्याह—अज्ञानेनेति । ज्ञानमात्मनस्सहजमज्ञानेन ज्ञानविरोधिना अनाद्यपचारमूलेन पूर्वकर्मणा आवृतं तिरोहिमतस्तस्माज्जन्तवो मुह्यन्तीत्यर्थः । तेन ज्ञानावरणेन तत्तद्देहसंयोगस्तन्मूला तथाविधदेहवासना तदुचितकर्मवासना च । ततश्च विपरीतात्माभिमानः कर्मारम्भश्चेत्यर्थः ॥

---

गतानि, अधोगते द्वे पायूपस्थ इत्येवं नवद्वाराणि यस्मिंस्तस्मिन्पुरे नगरतुल्य इत्यर्थः ॥१३॥

न कर्तृत्वमिति । प्रकृतिवासनैवेति । 'दैवी ह्येषा गुणम'यीति स्मृतेः पारमेश्वरप्रकृतिरेव न त्वविद्या नाप्यचेतना साङ्ख्यप्रकृतिर्वेति भावः ॥१४॥

नादत्त इति । तिरोहितमिति । तथा च पारमर्षं सूत्रं 'पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ'विति, 'संसारमोक्षस्थितिबन्धहेतु'रिति श्रुतिश्च

ज्ञानेन तु तदज्ञानं येषां नशितमात्मनः ।
तेषामादित्यवद्ज्ञानं प्रकाशयति तत्परम् ॥१६॥

ज्ञानेनेति । ज्ञानेन परमेश्वरोपासनया येषां तत्स्वरूपतिरोधायकमज्ञानं नाशितं तद्ज्ञानं, तेषामज्ञानं नाशयित्वा तत्परं परमेश्वरतत्त्वं प्रकाशयति द्योतयति- यथाऽऽदित्यस्तमो निरस्य सर्वं प्रकाशयति तद्वदित्यर्थः ॥१६॥

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥१७॥

तदिति । एवं ज्ञानेन परमेश्वरतत्त्वप्रकाशे सति तस्मिन् ज्ञानप्रकाशिते पारमेश्वरे तत्त्वपर्यवसिता बुद्धिश्चित्तवृत्तिस्साक्षात्काररूपा येषां ते तद्बुद्धयः, तदात्मानः तदभेदभावनापराः, तन्निष्ठाः तस्मिन्परमेश्वर एव निष्ठा निरन्तरध्यानरूपा येषां ते, तत्परायणाः सर्वत्रिधैषणाराहित्येन परमेश्वरैकभावनायत्तचित्ताः, ज्ञाननिर्धूतकल्मषा ज्ञानेन निर्धूतं कल्मषं निश्शेषं येषां तथाविधास्सन्तोऽपुनरावृत्तिं परमेश्वरसायुज्यरूपां मुक्तिमधिगच्छन्ति प्राप्नुवन्तीत्यर्थः ॥

ज्ञानिनां लक्षणमाह—

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डितास्समदर्शिनः ॥१८॥

विद्येति । विद्याविनयाभ्यां युक्तेऽयुक्ते च ब्राह्मणे गोहस्तिश्वश्वपाकेषु च ज्ञानिनस्समदर्शिनो भवन्ति । यथा ब्राह्मणे सात्त्विके सर्वोत्तमे तथा गोहस्त्यादिषु राजसतामसेष्वप्येवमत्यन्तविषमेष्वपि ज्ञानिनस्तुल्यभावा भवन्तीत्यर्थः ॥१८॥

---

सङ्गच्छते । एतेन ये त्वविद्याया अचेतनप्रकृतेर्वा तिरोधायकत्वमभिमन्वते ते, श्रुतिसूत्राभ्यां पराहन्यन्त इति विदितम् ॥१५॥

तदिति । कल्मषमिति । पुनर्जन्महेतुभूतं शुभाशुभरूपं कर्मेत्यर्थः । शिवसायुज्यरूपामिति तस्या एव परममुक्तित्वेन पुनरावृत्तिरहितत्वादिति भावः ॥

विद्येति । तुल्यभावा इति । परमेश्वरस्य सर्वगतत्वात्सर्वत्रापि ज्ञानिनः परमेश्वरमनुसन्दधत इति भावः ।

सर्वत्र परमेश्वरमनुसन्दधतां सिद्धिमाह —

**इहैव तैर्जितस्सर्गो येषां साम्ये स्थितं मनः ।**
**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥१९॥**

**इहैवेति** । तैस्सर्वत्रापि परमेश्वरं भावयद्भिः; सृज्यत इति सर्गस्संसारो जितः ते जीवन्मुक्ता इत्यर्थः । निर्दोषं निर्धूतनिखिलदोषगन्धं ब्रह्म समं सर्वत्राप्यविशेषेण स्थितमेवंविधं परमेश्वरं ये भावयन्ति ते ब्रह्मणि स्थिताः ब्रह्मनिष्ठा इत्यर्थः ॥१९॥

सर्वत्रैवं परमेश्वरमनुसन्दधानः कथं वर्ततेत्येतदाह—

**न प्रहृष्येत्प्रियं प्राप्य नो द्विजेत्प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसम्मूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥२०॥**

**नेति** । प्रियं तत्तद्देहस्थितस्य प्राग्भवीयवासनया यत्प्रियं भवति, यदपि चाप्रियं सम्पद्यते तत्तद्विषमे हर्षोद्वेगौ न भजेदित्यर्थः । ब्रह्मवित्तत्त्वविदामुपदेशेन परमेश्वरतत्त्वं विज्ञाय ब्रह्मणि स्थितः पारमेश्वरभावमनुसन्दधानः स्थिरबुद्धिः पारमेश्वरभावानुसन्धानादनुपरतचित्तस्सन्नत एवासम्मूढो निर्धूतनिखिलाज्ञानः प्रियाप्रिये प्राप्य हर्षोद्वेगौ नाप्नुयादिति पूर्वेणान्वयः ॥२०॥

---

ननु विप्रतिषिद्धमिदमुच्यते- 'समासमाभ्यां विषमसमे पूजात' इति गौतमादिभिर्विषमेषु समत्वदर्शनस्य निषिद्धत्वादितिचेत्, **अत्रायमाशयः—** परमेश्वरस्य सर्वगतत्वात्सर्वत्रापि पारमेश्वरभावानुसन्धानमेवाविषमं प्रकृतौ विवक्षितं; नतु सर्वत्राविवेकेन कृत्याकृत्यव्यवस्था प्रतिषिध्यते । यथा गाङ्गजले तटाके सुरायामपि प्रतिबिम्बितस्यादित्यस्य न तत्तद्वस्तुगतगुणदोषलेपस्तथैव सर्वगतस्यापि परमेश्वरस्येति । यथा च तटाकजलसुरामूत्रादौ प्रतिबिम्बितस्य दिवाकरस्य समत्वेप्याचमनादियोग्यता तटाकजलस्यैव न सुरादीनामिति च । एतेन ये भगवद्वचनमिदमिदमेव प्रमाणीकृत्य वर्णविभागं दूरीकर्तुमिच्छन्ति ते निरस्ताः ॥१८॥

**इहैवेति** । **ब्रह्मनिष्ठा इति** । निरन्तरपरमेश्वरानुसन्धानस्यैव बन्धमोचकत्वेन त एव मुक्तिभाज इति भावः ॥१९॥

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥२१॥

बाह्येति । इन्द्रियैस्स्पृश्यन्त इति स्पर्शाश्शब्दादयो बाह्येन्द्रियविषयेषु असक्तात्मा अनासक्तचित्तो य आत्मनि परमात्मन्येव यत्सुखं विन्दति लभते स ब्रह्मयोगयुक्तात्मा पारमेश्वरभावानुसन्धानरूपयोगनिष्ठोऽक्षयं शाश्वतं सुखमानन्दमाप्नोतीत्यर्थः ॥२१॥

प्राकृतस्य हेयत्वमुपपादयति—

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय ! न तेषु रमते बुधः ॥२२॥

ये हीति । संस्पर्शजः विषयेन्द्रियसंसर्गसम्भवा ये भोगा विद्यन्ते ते सर्वेऽपि दुःखयोनयः शोकहेतव एव । आद्यन्तवन्तः अल्पकालवर्तिन इत्यर्थः । बुधः याथार्थ्यवित्तेषु भोगेषु न रमते सक्तो न भवतीत्यर्थः ॥२२॥

शक्नोतीहैव यस्सोढुं प्राक्छरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तस्स सुखी नरः ॥२३॥

शक्नोतीति । शरीरविमोक्षणात्पूर्वमिह साधनानुष्ठानकाल एव कामक्रोधजन्यं वेगं सोढुं निरोद्धुं यश्शक्नोति स युक्तः पारमेश्वरभावानुसन्धानशक्तः; अत एव सुखी नित्यनिर्वाणभाग्भवतीत्यर्थः ॥२३॥

योऽन्तस्सुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥२४॥

य इति । योऽन्तस्सुखो बाह्यविषयेभ्यो विरज्यान्तरात्मन्येव पारमेश्वरं ध्यानयोग एव यत्सुखं तेन युक्तोऽन्तरारामः परमात्मन्येव क्रीडमानमन्तर्ज्योतिः पारमेश्वरज्ञानैकनिष्ठो वर्तते । स निरन्तरपारमेश्वरानुसन्धानेन ब्रह्मभूतो ब्रह्मीभूतस्स योगी ब्रह्मनिर्वाणं परमेश्वरसायुज्यमधिगच्छति प्राप्नोतीत्यर्थः ॥२४॥

---

ये हीति । शोकहेतव एवेति । पुरस्तात्परस्तादपीति भावः ॥२२॥

शक्नोतीति । मरणात्पूर्वमिति तदुक्तं वसिष्ठेन 'प्राणिगतयथादेहस्सुखं दुःखं न विन्दति तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रयो भवे'दिति ॥२३॥

मुक्तिहेतोः पारमेश्वरज्ञानस्य साधनान्तराण्याह—

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानस्सर्वभूतहिते रताः ॥२५॥

लभन्त इति । छिन्नद्वैधाः निस्संशयाः, यतात्मानः नियमितचित्ताः, सर्वभूतहिते रताः आत्मवत्सर्वभूतानीतिन्यायेन दयालवः, क्षीणं विनष्टं कल्मषं ज्ञानविरोधि सकलं पातकं येषां तथाविधा ऋषयः पारमेश्वरतत्त्वविदः ब्रह्मनिर्वाणं परमेश्वरसायुज्यं लभन्त इत्यर्थः ॥२५॥

एवंविधानां परमेश्वरसायुज्यं सुलभमित्याह—

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥२६॥

कामेति । कामक्रोधवियुक्तानां निर्धूतकामादिदोषाणां यतीनामविरतप्रयत्नपराणां, यतचेतसां निगृहीतचित्तानां, विदितात्मनां पारमेश्वरभावानुष्ठानपराणां वानुसन्धानपराणां, ब्रह्मनिर्वाणं मोक्षसाम्राज्यं, अभितो वर्तते हस्तगतमेव भवतीत्याशयः ॥२६॥

स योगी ब्रह्मनिर्वाणमित्यादिषु योगी मुक्तिमधिगच्छतीत्युक्तमिदानीं योगं विवृणोति स्पर्शानित्यारभ्य द्वाभ्याम्—

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥२७॥
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यस्सदा मुक्त एव सः ॥२८॥

स्पर्शानिति । योगी शिवयोगी बाह्यान् बहिर्भवान् स्पर्शान् शब्दादि-

---

य इति । ध्यानयोग एवेति । न विषयेष्वित्यर्थः । परमात्मन्येवेति । न बहिरित्यर्थः ॥२४॥

लभन्त इति । उक्तविधाः परमेश्वरोपासका असंशयं मुक्तिभाजो भवन्तीत्यर्थः ॥२५॥

कामेति । हस्तगतमेवेति । सिद्धवदित्यर्थः ॥२६॥

विषयान् बहिः कृत्वा तदीयचिन्तात्यागेनान्तरङ्गादुत्सार्येत्यर्थः । चक्षुश्च दृष्टिं भ्रुवोरन्तरे नासाग्रे कृत्वा विन्यस्येत्यर्थः । नासाभ्यन्तरचारिणौ प्राणापानौ उच्छ्वासनिश्वासौ समौ कृत्वा कुम्भयित्वेत्यर्थः । यतेन्द्रियमनोबुद्धिः- नियमितबाह्याभ्यन्तरिन्द्रिय इत्यर्थः । विगतेच्छाभयक्रोधः- कामक्रोधादिरहितः, मोक्षपरायणो मोक्षेकबद्धाभिलाषः, मुनिः पारमेश्वरभावप्रकृष्टमननशीलः, यो भवति स सदा मुक्त एव परंज्योतिरुपसम्पत्तेः पुरस्तादपि मुक्तिं गत एवेत्यर्थः ॥

योगशिरस्ककर्मयोगनिष्ठः किं ज्ञात्वा मुच्यत इत्याशङ्क्याह—

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥२९॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगो नाम**
**पञ्चमोऽध्यायः ।**

**भोक्तारमिति ।** यज्ञतपसां भोक्तारं यज्ञानां तपसां च भक्तैस्समर्पितानां ग्रहीतारमित्यर्थः । सर्वलोकानां लोकेश्वराणामित्यर्थः । 'तमीश्वराणां परमं महेश्वर'मिति श्रुतेः । सर्वभूतानां सुहृदं निरपेक्षोपकारिणमित्यर्थः । एवंविधं मां परमेश्वरं ज्ञात्वा तत्प्रसादेन शान्तिं परमेश्वरसायुज्यरूपां मुक्तिमृच्छति प्राप्नोतीत्यर्थः ॥२९॥

इति श्रीमज्जगद्गुरुश्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्यनीलकण्ठभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
कर्मयोगोनाम पञ्चमोऽध्यायः ।

---

**स्पर्शानिति ।** **परंज्योतिरुपसम्पत्तेरिति ।** 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इत्युक्तस्वस्वरूपाभिनिष्पत्तेरित्यर्थः । **मुक्तिं गत एवेति ।** भाविन्या मुक्तेरसन्दिग्धत्वाचस्य मुक्तिस्सिद्धैवेति भावः ॥

**भोक्तारमिति ।** अत्र मामिति पारमेश्वरज्ञानस्यैव मोक्षनिदानत्वोक्त्या

स्वज्ञानस्यैव मुक्तिसाधकत्वं ब्रुवाणाः केवलाऽद्वैतिनो निरस्ताः । तथा सर्वलोक-महेश्वरमिति श्रीकृष्णेन स्वान्तर्यामिभूतमहेश्वरदृष्टचैव गीतेयमुपदिष्टेति द्योतनेन महेश्वरस्यैव मुमुक्षुज्ञेयत्वोपदेशेन च पाञ्चरात्रिणोपि व्युदस्ताः । अत्र यत्सर्व-लोकप्रतिसम्बन्धितया महेश्वरशब्दस्यात्र न रूढिविशेषे वृत्तिरिति परैर्यज्जल्पितं तन्निराकृतं श्रीशिवचिन्तामणिप्रभायां प्रमिताधिकरणे प्रतिसम्बन्धिपरोपा-दानेपि न रूढेः क्षतिरिति निरूपयद्भिरस्माभिरिति तत एवावगन्तव्यम् ॥२९॥

इति श्रीमल्लोकाराध्यशिवयोगिमहोपाध्यायनागलिङ्गशिवाराध्य-
कृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां
कर्मयोगो नाम पञ्चमोऽध्यायः ।



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## आत्मसंयमयोगोनाम षष्ठोऽध्यायः ।

पूर्वाध्यायान्ते संक्षेपेण निगदितं ध्यानयोगं विशदयितुं षष्ठाध्याय आरभ्यते—

श्रीभगवानुवाच—

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स सन्न्यासी च योगी च न निरग्निर्न चाक्रियः ॥१॥

अनाश्रित इति । कर्मफलमनाश्रितोऽनपेक्षमाणः, कार्यं विहितत्वादवश्यकर्तव्यं कर्म नित्यनैमित्तिकरूपं यः करोति स सन्न्यासी ज्ञानयोगनिष्ठः कर्मी च । कर्मयोगनिष्ठश्च भवति । नतु निरग्निरग्निसाध्यकर्मत्यागी । अक्रियो न केवलं सन्न्यासी चेत्यर्थः ॥१॥

---

अनाश्रित इति । ज्ञानयोगनिष्ठ इति । फलत्यागस्य ज्ञानमूलत्वात्फलाभिसन्धिराहित्येन कर्मानुष्ठाता ज्ञानयोगनिष्ठ इत्यर्थः । एवं च ज्ञानयोगी केवलज्ञाननिष्ठ एव । फलकामनारहितकर्मयोगी तूभयनिष्ठो भवतीत्यनेन कर्मयोगो विशिष्यत इति प्रागुपदिष्टं सम्यगुपपादितम् । अत्र केचित्—सर्वकर्मत्यागेन योगं विधास्यन्तस्त्याज्यत्वेन हीनत्वमाशङ्क्य कर्मयोगं स्तौतीत्यवतारयन्ति । ततः 'अलंकृत्य शिरश्छेद' इति न्यायं सारयन्तीत्यनो विरुद्धमेव ॥१॥

यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव !
न ह्यसन्न्यस्तसङ्कल्पो योगी भवति कश्चन ॥२॥

**यमिति ।** यं सन्न्यासं ज्ञानयोग इति प्राहुस्तं योगं कर्मयोगमेव विद्धि । तदुपपादयति—हि यतोऽसन्न्यस्तसङ्कल्प आत्मयाथात्म्यबोधेनानात्मनि प्रकृतौ न सन्न्यस्तः । स आत्मभावः फलसङ्कल्पो वा येन तथाविधः कश्चन कोऽपि योगी न भवति । अत एव- 'यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिता' इत्युक्तम् ॥२॥

कर्मयोग एव ध्यानयोगं साधयतीत्याह—

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥३॥

**आरुरुक्षोरिति ।** योगं ध्यानयोगमारुरुक्षोः सिषाधयिषोर्मुनेस्साधकस्य कर्म कर्मयोगः कारणं साधकमुच्यते भवतीति निगद्यत इत्यर्थः । योगारूढस्य ध्यानयोगे परिनिष्ठितस्य तस्यैव शमश्चित्तशान्तिः कर्मनिवृत्तिर्वा कारणं साधकमिति निगद्यत इत्यर्थः ॥३॥

कदा ध्यानयोगे परिनिष्ठत इत्याशङ्क्याह—

यदा हि चेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसङ्कल्पसन्न्यासी योगारूढस्तथोच्यते ॥४॥

**यदेति ।** अयं योगी यदेन्द्रियार्थेषु शब्दादिषु विषयेषु कर्मसु तत्साधकेषु कृत्येषु च नानुषज्जतेऽनुषक्तो न भवति, सर्वसङ्कल्पसन्न्यासी- सर्वान् भोगविषयांस्तत्साधककर्मविषयांश्च सङ्कल्पान् सन्न्यसितुं शीलं यस्य तथाविधस्तदा योगारूढ इत्युच्यते ॥४॥

---

**यमिति । फलसङ्कल्पो वेति ।** फलसङ्कल्पत्यागाद्ज्ञानयोगी कर्माचरणात्कर्मयोगी च भवतीति भावः । **भवतीति ।** भवितुमर्हतीत्यर्थः ॥२॥

**आरुरुक्षोरिति । कर्मनिवृत्तिर्वेति ।** चित्तविक्षोभस्य कर्माचरणस्य समाधिविघातकत्वादिति भावः ॥३॥

**यदेति । योगारूढ इति ।** ध्यानयोगे परिनिष्ठित इत्यर्थः ॥४॥

तस्मान्मोक्षकामो विषयासङ्गं विसृजेदित्याह—

**उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥५॥**

**उद्धरेदिति ।** आत्मना विषयासङ्गरहितेन मनसाऽऽत्मानं स्वमुद्धरेत्संसारदुःखसागरादुत्तारयेत् । न त्ववसादयेन्नाधो नयेदित्यर्थः । हि यत आत्मैव निस्सङ्गं मन एवात्मनो बन्धुः । आत्मैव विषयासक्तस्तदेव स्वस्य रिपुः शोकनिदानमित्यर्थः ॥५॥

उक्तयोर्बन्धुत्वरिपुत्वयोर्लक्षणमाह—

**बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।**
**अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥६॥**

**बन्धुरिति ।** येन साधकेनात्मना स्वेनैवात्मा मनो जितो विषयेभ्यो विमुखीकृतस्तस्य पुरुषस्यात्मा तन्मनो बन्धुः, अनात्मनोऽनिगृहीतमनसस्स्वस्यात्मा स्वीयमेव मनश्शत्रुवद्विरोधिवच्छत्रुत्वे निश्श्रेयसविघातकत्वे वर्तेतेत्यर्थः ॥

जितात्मनः स्वबन्धुत्वं विव्रियते—

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।**
**शीतोष्णसुखदुःखेषु तथा मानावमानयोः ॥७॥**

**जितात्मन इति ।** शीतोष्णसुखदुःखेषु चित्तविक्षोभकारिषु मानाव-

---

**उद्धरेदिति । नाधो नयेदिति ।** विषयासक्तेन चेतसेति शेषः । **बन्धुरिति ।** बन्धनाद्धितकारीत्यर्थः । **रिपुरिति ।** बन्धहेतुत्वादहितकारीत्यर्थः । एवं च विषयविरक्तस्य मनसस्संसारमोचकत्वेनोपकारकत्वात्तद्विपरीतस्य बन्धहेतुत्वेनापकारकत्वाच्च मनो विषयेष्वत्यन्तविरक्तं सम्पाद्य तन्मोक्षपरमकारणभूतपरमेश्वरसाक्षात्कारसाधके ध्यानयोगे निवेशयेदिति फलितम् ॥५॥

**बन्धुरिति ।** स्वहितकारित्वादिति भावः । अत एव 'मन एव मनुष्याणां कारणं बन्धमोक्षयो'रिति, 'बन्धाय विषयासङ्गि मुक्त्यै निर्विषयं मन' इति स्मर्यते ॥६॥

मानयोः हर्षशोकहेत्वोः, एवं चित्तस्थैर्यविघातुकेषु द्वन्द्वदोषेषु सत्स्वपि जितात्मनः निश्चलचित्तस्य प्रशान्तस्य रागादिरहितस्य परमात्मा परमेश्वरस्समाहितस्समाधिविषयो भवतीत्यर्थः ॥७॥

योगारूढस्य लक्षणमुपसंहरति—

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥८॥

ज्ञानेति । ज्ञानमौपदेशिकं परोक्षविषयं, विज्ञानं समाधिलब्धमपरोक्षविषयं च यत्पारमेश्वरतत्त्वं तेन सन्तृप्तचित्तः कूटस्थो निर्विकारः, अत एव विजितेन्द्रियः, एवं प्राकृतभोग्यविषयतृष्णाराहित्यात्समलोष्टाश्मकाञ्चनः- मृत्पिण्डशिलाकनकेषु हेयोपादेयभावरहितः, यस्स योगी साधकः युक्तो योगारूढ इत्युच्यत इत्यर्थः ॥८॥

तत्रापि श्रेष्ठ्यमाह—

सुहृन्मित्रार्युदासीनमध्यस्तद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥९॥

सुहृदिति । स्वभावेनैव हिताशंसी सुहृत्, स्नेहेनोपकारको मित्रं, अरिर्घातुकः, उदासीनः विवदमानयोरुभयोरप्युपेक्षकः, मध्यस्थः विवदमानयोरुभयोरपि हिताशंसी, द्वेष्यः स्वकृतापकारमपेक्ष्यापकर्ता, बन्धुस्सम्बन्धी, एतेषु समा रागद्वेषादिरहिता बुद्धिर्यस्य स तादृशो योगी विशिष्यत इत्यर्थः ॥९॥

योगारूढस्य लक्षणमुक्त्वा साङ्गं योगं विधत्ते—

योगी युंजीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥१०॥

योगीति । योगी साधक आत्मानं मनस्सततं निरन्तरं युञ्जीत एकाग्र-

---

जितात्मन इति । समाधिविषय इति । 'ततस्तु तं पश्यते निष्कलं ध्यायमान' इति श्रुत्या ध्यानयोगलक्ष्यत्वेन श्रुतेः परमेश्वरः सुस्थिरचेतस्समाधौ गोचरीभवतीति भावः ॥७॥

सुहृदिति । विशिष्यत इति । योगिष्वप्येवंविधश्श्रेष्ठ इत्यर्थः ॥९॥

निरोधभूमिभ्यां क्षिप्तमूढविक्षिप्तभूमिपरित्यागेन समाहितं कुर्यात् । कथम्भूतो रहसि निर्जनदेशे स्थितः, एकाकी सङ्गशून्यो यतं संयतं चित्तमात्मा देहश्च येन तथाभूतः, निराशीः परमेश्वरव्यतिरिक्ते सर्वस्मिन्नपि वस्तुनि निरपेक्षः, अपरिग्रहो योगप्रतिबन्धकपरिग्रहशून्यश्चेति पूर्वेणान्वयः ॥१०॥

तत्रासननियमं दर्शयति द्वाभ्याम्—

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥११॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युंज्याद्योगमात्मविशुद्धये ॥१२॥

शुचाविति । शुचौ पवित्रदेशे नदीतटे गृहे वानात्युच्छ्रितमत्युन्नतिरहितं, नातिनीचमनतिनिम्नं, चैलाजिनकुशोत्तरं कुशाजिनचैलोत्तरमित्यर्थः । स्थिरं निश्चलं, आसनं प्रतिष्ठाप्य तत्रोपविश्येत्यर्थः । मन एकाग्रमव्याकुलं कृत्वा यतचित्तेन्द्रियक्रियो नियमितचित्तादिः, आत्मविशुद्धये आत्मनोऽन्तःकरणस्य विशुद्धये परमेश्वरसाक्षात्कारयोग्यतापादकनैर्मल्यसिद्धयै योगं समाधिं युञ्जीत । अभ्यसेदित्यर्थः ॥११-१२॥

चित्तैकाग्र्योपयोगिनीं देहादिधारणां दर्शयति द्वाभ्याम्—

समं कायशिरोग्रीवं धारयन्नचलं स्थितः ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चाऽनवलोकयन् ॥१३॥
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनस्संयम्य मच्चित्तो युक्त आसीत मत्परः ॥१४॥

सममित्यादि । कायश्शरीरमध्यं शिरो ग्रीवा चेति द्वन्द्वैकवद्भावः ।

---

शुचाविति । कुशाजिनचैलोत्तरमिति । चैलाजिनेत्यादेः पदस्य चैलं वस्त्रमजिनं व्याघ्राजिनादिचैलाजिने, ते कुशेभ्य उत्तरे यस्मिन्तत्कुशानामुपरि चर्म, तदुपरि वस्त्रमास्तीर्येति सिद्धम् ॥११-१२॥

सममिति । दिशश्चानवलोकयन्निति । इतस्तत इत्यर्थः । प्रशान्त

कायादिकं सममवक्रमचलं निश्चलं धारयन् स्थिरो दृढयत्नो भूत्वेत्यर्थः। स्वं स्वीयं नासिकाग्रं सम्प्रेक्ष्य अर्धनिमीलितनयन इत्यर्थः। दिशश्चानवलोकयन्नासीतेत्यन्वयः। प्रशान्त आत्मा चित्तं यस्येति तथाविधः, विगतभीर्यस्य ब्रह्मचारिव्रते ब्रह्मचर्ये स्थितो मनस्संयम्य प्रत्याहृत्य, मच्चित्तः मयि परमेश्वरे चित्तं यस्य स तथोक्तः, मत्परः परमेश्वरैकासक्तः, एवं युक्तस्समाधिनिष्ठ असीतेत्यर्थः॥

योगाभ्यासफलमाह—

युंजन्नेवं सदात्मानं योगी नियतमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५॥

युंजन्नेवमिति। एवं रहोवस्थानादिनियमेनात्मानं मनो युञ्जन्नभ्यासवैराग्याभ्यां परमेश्वरनिष्ठां साधयन्, नियतमानसः नियता निरुद्धा मानसा मनोवृत्तिरूपा विकारा यस्य तथोक्तः, निर्वाणपरमां मोक्षपरकाष्ठारूपां मत्संस्थां परमेश्वरसायुज्यरूपां शान्तिं संसारोपरतिमधिगच्छति प्राप्नोतीत्यर्थः ॥१५॥

योगाभ्यासनिष्ठस्याहारादिनियममाह द्वाभ्याम्—

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन! ॥१६॥

---

इति। रागादिरहित इत्यर्थः। विगभीरिति। चिराभ्यस्तविविधवासनापरित्यागमूलभयरहित इत्यर्थः। शास्त्रीयनिश्चयदार्ढ्यादपि निर्भय इत्यर्थः। समाधिनिष्ठ इति। विषयाकारसर्ववृत्तिनिरोधेन परमेश्वराकारचित्तवृत्तिरित्यर्थः॥

युंजन्निति। परमेश्वरनिष्ठां साधयन्निति। सम्प्रज्ञातसमाधिरुक्तः-- निरुद्धा मनोवृत्तिरूपा विकारा इत्यनेनाऽसम्प्रज्ञातश्च। मोक्षपरकाष्ठारूपमित्यनेन धर्ममेघस्य समाधेर्यथाभूतपरमेश्वरस्वरूपसाक्षात्कारद्वारा कैवल्यनिदानत्वं, परमेश्वरसायुज्यरूपमित्यनेन- 'सोऽश्नुते सर्वान् कामान् सह ब्रह्म'णेत्यादिश्रुत्यन्ताभिमतं कैवल्यं च दर्शितम्।

एवं योगस्य मोक्षसाम्राज्यरूपमहाफलसाधकत्वात्स एव साधनीय इत्याकूतम् ॥१५॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥१७॥

नेति । अत्यश्नतोऽधिकाशनपरस्य योगस्समाधिर्नास्ति न सिध्यति, एकान्तमनश्नत उपवासरतस्यापि तथैवेत्यर्थः । अतिस्वप्नशीलस्यातिनिद्रापरस्य जाग्रतः केवलजागरूकस्य च न सिध्यतीत्यर्थः ।

अथ युक्ताहारविहारस्य मिताहारपरस्य कर्मसु श्रीपञ्चाक्षरजपपरमेश्वराराधनादिषु युक्तचेष्टस्य- युक्ता कालादिनियता चेष्टा यस्य तस्य, युक्तौ नियतकालौ स्वप्नावबोधौ निद्राजागरौ यस्य तस्य च योगस्समाधिर्दुःखहा दुरन्तबन्धनाशेन सिध्यतीत्यर्थः ॥१६-१७॥

कदा योगनिष्पत्तिर्भवतीत्याशङ्क्याह —

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निस्पृहस्सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥१८॥

यदेति । विनियतं विशेषेण निरुद्धं चित्तमात्मनि परमेश्वर एव यदाऽवतिष्ठति निश्चलं तिष्ठति; यदा च सर्वकामेभ्य ऐहिकामुष्मिकभोगेभ्यो निस्पृहस्तृष्णारहितो भवति तदा युक्तः प्राप्तयोग इत्युच्यत इत्यर्थः ॥१८॥

समाहितचित्तस्योपमानमुच्यते—

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युंजतो योगमात्मनः ॥१९॥

यथेति । निवातस्थो वातवर्जितकुम्भादिदेशस्थितो दीपो यथा नेङ्गते न चलति सा स्थितिः, यतचित्तस्य समाहितान्तःकरणस्य सत आत्मनः परमेश्वरसम्बन्धिनः, योगं समाधिं युञ्जतस्साधयतो योगिन उपमा उदाहरणमिति स्मृता निगदितेत्यर्थः ॥१९॥

---

नेति । अधिकाशनेति । यद्भुक्तमन्नं जीर्यति ततोऽधिकमन्नमश्नुत इत्यर्थः । तदुक्तं— 'पूरयेदशनेनार्धं तृतीयमुदकेन तु । वायोस्सञ्चरणार्थं तु चतुर्थमवशेषये'दित्यायुर्वेदीये ॥१६-१७॥

यथेति । उदाहरणमिति । निष्कम्पतया प्रकाशकतया च योगिनश्चित्तं निवातस्थदीपवत्तिष्ठतीति भावः ॥१९॥

'यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्ड'वेत्यादौ योगशब्देन कर्मयोग उक्तः। नात्यश्नतस्तु योगोऽस्तीत्यारभ्य तु योगशब्देन समाधिरुक्तः। तत्र मुख्यो योगः क इत्याशङ्क्य समाधिरेव मुख्यो योग इत्याह यत्रेत्यादिभिश्चतुर्भिः—

यत्रोपरमते चित्तं निरुद्धं योगसेवया।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥२०॥
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥२१॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥२२॥
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥२३॥

यत्रेति। यत्र यस्यामवस्थायां योगसेवया योगाभ्यासेन निरुद्धं सर्ववृत्तिभ्यो निवारितं चित्तमुपरमते शान्तिमाप्नोति। यत्र च यस्मिन्नवस्थाविशेष एवात्मना शुद्धान्तःकरणेनात्मानं परमेश्वरं, पश्यन् साक्षात्कुर्वन्, आत्मनि स्वस्मिन् तुष्यति परानन्दमवाप्नोति। यत्रैव स्थित आत्यन्तिकं केवलं बुद्धिग्राह्यमन्तःकरणैकवेद्यमतीन्द्रियमलौकिकं यत्सुखं तद्वेत्त्यनुभवति। यस्मिन्परशिवानन्दमये स्थित अयं योगी तत्त्वतः पारमेश्वरभावानुसन्धानान्न चलति न च्यवते। यं निरतिशयशिवानन्दमयमवस्थाविशेषं लब्ध्वा प्राप्य, अपरमन्यत्ततोधिकं लाभं न मन्यते। यस्मिन्नेव स्थितः गुरुणा गुणवत्पुत्रदारादिवियोगजेनापि दुःखेन न विचाल्यते नाऽभिभूयते। तमेवम्भूतमवस्थाविशेषं दुःखसंयोगवियोगं सर्वदुःखप्रतिपक्षभूतं योगसंज्ञितं योगशब्दाभिधेयं विद्याज्जानीयादित्यर्थः। स उक्तलक्षणो योगः- महाफलत्वान्निश्चयेन दुस्साधमपि कथमपि साधयेयमिति दृढनिश्चयेनानिर्विण्णचेतसा निर्वेदरहितचेतसा योक्तव्यः साधनीय इत्यर्थः॥

---

यत्रेति। निर्वेदरहितेनेति। एतावतापि कालेन योगो न सिद्धः, तस्मादयं दुर्लभ इत्यनुतापो निर्वेदः। तद्रहितेन चेतसा इहजन्मनि जन्मान्तरे

किं च कृत्वा योगोऽभ्यसनीय इत्याशङ्क्याह सङ्कल्पेत्यादिना द्वाभ्यां—

सङ्कल्पप्रभवान्कामांस्त्यक्त्वा सर्वाण्यशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समं ततः ॥२४॥
शनैश्शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥२५॥

सङ्कल्प इति । सङ्कल्पात्प्रभवो येषां तान्सर्वान्कामानशेषतो निश्शेषं त्यक्त्वा मनसैव विषयदोषविदेत्यर्थः । इन्द्रियग्रामं समंततस्सर्वं विनियम्य विशेषेण नियम्य, धृतिगृहीतया धैर्येण स्थिरीकृतया बुद्ध्या शनैश्शनैर्नतु सहसा उपरमेत , सर्वस्मात्परमेश्वरव्यतिरिक्ताद्वस्तुन उपरम्य मन आत्मसंस्थं परमेश्वर-निष्ठं कृत्वा किञ्चिदप्यन्यन्न चिन्तयेद्ध्यानयेदित्यर्थः ॥२५॥

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥२६॥

यत इति । चञ्चलं चलनशीलत्वात्परमेश्वरेऽस्थिरमप्रतिष्ठितं मनो यतो

---

वा लभिष्यते, किं त्वरयेति धैर्येणेत्यर्थः । 'तदुक्तमभियुक्तैः- 'उत्सेक उदधेर्यद्व-त्कुशाग्रेणैकबिन्दुना । मनसो निग्रहस्तद्वद्भवेदपरिखेदत' इति । अत्रार्थे काचना-ख्यायिकोदाहियते । पुरातनैः कस्यचित्किल पक्षिणोंडानि तरङ्गैस्समुद्रोपजहार । स हि पक्षी सागरं शोषयेयमेवेति प्रवृत्तः, स्वमुखाग्रेणैकैकं जलबिन्दुमुपरि प्रचिक्षेप । ततश्च बहुभिर्वार्यमाणोपि नैवोपरराम । यदृच्छया च तत्रागतेन नारदेन वारितोप्यस्मिन्जन्मनि जन्मान्तरे वा येन केनाप्युपायेन जलधिं शोष-येयमिति प्रतिजज्ञे । ततश्च दैवानुकूल्याद्दयालुर्नारदो गरुडं तत्साहाय्यकाय प्रेषयामास 'समुद्रस्त्वद्ज्ञातिद्रोहेण त्वामवमन्यत' इति वचनेन। ततो गरुडपक्ष-वातेन शुष्यन् समुद्रो भीतस्तान्यण्डानि तस्मै पक्षिणे प्रददाविति । एवमनि-र्वेदेन मनोनिरोधे परमधर्मे प्रवर्तमानमीश्वरोऽनुगृह्णाति । ततश्च पक्षिण इव तस्याभिमतं सिद्ध्यतीत्याकूतम् ॥२०-२३॥

सङ्कल्प इति । कामा इति। स्पर्शजास्सङ्कल्पजाश्चेति द्विविधाः कामाः । तत्र स्पर्शजाश्शीतोष्णादयः, सङ्कल्पजाः पुत्रक्षेत्रादय इति विवेकः ॥२४-२५॥

यतो यं यं विषयं प्रतीत्यर्थः। निश्चरति निर्गच्छति ततस्ततो नियम्य प्रत्याहृत्यात्मन्येव परमेश्वर एव वशं नयेत् स्थिरीकुर्यादित्यर्थः ॥२६॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥२७॥

प्रशान्तमिति। प्रशान्तमनसः परमेश्वरन्यस्तत्वात्प्रकर्षेण शान्तचित्तमत एवाकल्मषं निर्गतनिखिलपापकलङ्कमत एव विनष्टरजोगुणं च ब्रह्मभूतं निरन्तर परमेश्वरभावनया शिवत्वं प्राप्तं योगिनमुत्तमं सुखमुपैति स्वयमेव प्राप्नोतीत्यर्थः॥

ततश्च कृतकृत्यो भवतीत्याचष्टे—

युंजन्नेवं सदात्मानं योगी विगतकल्मषः।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥२८॥

युंजन्निति। एवमुक्तरीत्या सदा निरन्तरमात्मानं चित्तं युञ्जन् समाहितं कुर्वन् विगतकल्मषस्संसारमूलरागद्वेषादिदोषशून्यो योगी सुखेनानायासेन ब्रह्मसंस्पर्शं परमेश्वरसाक्षात्कारजन्यं परमेश्वरसायुज्यसम्भावितं चात्यन्तमपरिमितं सुखमानन्दमश्नुते प्राप्नोतीत्यर्थः ॥२८॥

अथ योगदशाविशेषानाह सर्वेत्यादिना—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥२९॥

सर्वेति। सर्वत्र प्रपञ्चेऽखिले समदर्शनः प्रकृतिविविक्तानां सर्वेषामपि भूतानां चेतनानां ज्ञानेनैकाकारतया तौल्यदर्शी, योगयुक्तात्मा योगनिष्ठ आत्मानं स्वं सर्वभूतस्थं सकलप्राणिषु स्थितं, सर्वभूतान्यखिलानपि प्राणिजातान्यात्मनि स्वस्मिन् परमेश्वरे वा स्थितानीति शेषः। ईक्षते

---

प्रशान्तमिति। निर्गतनिखिलपापेति। संसारहेतुधर्माधर्मरहितमित्यर्थः ॥२७॥

युंजन्निति। परमेश्वरसाक्षात्कारजन्यमिति। तदुक्तं महिम्नस्तवे 'यदालोक्याह्लादं ह्रद इव निमज्यामृतमय' इति ॥२८॥

पश्यति। अथवा योगनिष्ठस्य परमेश्वरसारूप्यस्य निरन्तरपारमेश्वरभावनासमधिगतत्वेन सर्वान्तरत्वादिधर्मं पारमेश्वरमात्मनि सम्पश्यतीत्यर्थः ॥२९॥

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।
तस्याऽहं न प्रणश्यामि स च मे न प्रणश्यति ॥३०॥

य इति। यो योगी मां परमेश्वरं सर्वत्र सर्वगतं पश्यति, सर्वमखिलमपि जगन्मयि परमेश्वरे स्थितं पश्यति तस्य योगिन अहं परमेश्वरः न प्रणश्यामि अप्रत्यक्षो न भवति। स च योगी मे मम न प्रणश्यति, तं नाहं परमेश्वरो विस्मरति अनुगृह्णातीत्यर्थः ॥३०॥

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्वथा वर्तमानोपि स योगी मयि वर्तते ॥३१॥

सर्वमिति। यो योगी समाधिसाक्षात्कृतपरमेश्वरस्वरूपो मां परमेश्वरं सर्वभूतस्थितं सर्वगतमेकत्वमास्थितः द्रढीभूतपरमेश्वरैक्यभावनः, भजते सेवते ध्यायतीत्यर्थः। स योगी सर्वथा व्युत्थानकाले यथेच्छं वर्तमानोपि मयि वर्तते परमेश्वरनिष्ठ एव भवतीत्यर्थः। योगिनस्सर्वत्रापि परमेश्वरभावस्य दृढीभूतत्वात्सर्वथा वर्तमानस्यापि सर्वात्मकपरमेश्वरनिष्ठत्वमक्षतमित्याशयः ॥३१॥

तत्राप्युत्कृष्टदशामाह—

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन!
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥३२॥

आत्मेति। यो योगी सर्वत्र निखिलप्राणिष्वात्मौपम्येन स्वतौल्येन सुखं दुःखं वा सममेकरूपं पश्यति स योगी परमस्सर्वोत्तम इति मत इष्यत इत्यर्थः ॥३२॥

---

आत्मेति। स्वतौल्येनेति। तथाच 'प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा। आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधव' इति। एवं च मम सुखं प्रियं, दुःखं चाप्रियं तथाऽन्येषामपीति सर्वत्र 'समं' पश्यन् सर्वेषां सुखमेव यो वाञ्छति, नतु कस्यापि दुःखं स योगी श्रेष्ठ इत्याशयः ॥३२॥

एवमुक्तस्य योगस्याऽसाध्यतां मन्वानोऽर्जुनः पप्रच्छ—

अर्जुन उवाच—

योऽयं योगस्त्वया प्रोक्तस्साम्येन मधुसूदन !
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥३३॥

य इति । मधुसूदन ! साम्येन सर्वप्राणिषु समत्वदर्शनेन चित्तस्य विक्षेपराहित्येन वा यो योगस्त्वया प्रोक्तः, एतस्य योगस्य स्थिरां निश्चलां स्थितिं न पश्यामि; चञ्चलत्वान्मनस इत्यर्थः ॥३३॥

मनसश्चञ्चलत्वमुपपादयति—

चञ्चलं हि मनः कृष्ण ! प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥३४॥

चञ्चलमिति । हे कृष्ण ! चञ्चलं मनस्स्वतश्चपलं हि यतो बलवद्बलात् प्रमाथि प्रमथनशीलं प्रमथ्य पुरुषं दृढमन्यत्र नयति, तस्य तथाविधस्य मनसो निग्रहं निरोधं वायोर्वातस्य वस्त्रेणेव सुदुष्करं सुतरामशक्यं मन्य इत्यर्थः ॥३४॥

मनोनिग्रहोपायं ब्रवीति भगवानसंशयमित्यारभ्य द्वाभ्याम्—

श्रीभगवानुवाच—

असंशयं महाबाहो ! मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय ! वैराग्येण च गृह्यते ॥३५॥
असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥३६॥

असंशयमिति । महाबाहो ! मनश्चपलस्वभावमिति यत्त्वयोक्तं तत्सत्यमेव । तथापि अभ्यासेन मनोहरपारमेश्वरदिव्यविग्रहनिरन्तरभावनाभ्यासेन, चिराभ्यस्तशब्दादिविषयदुष्टत्वविज्ञानपूर्वकतद्विषयवैराग्येण च मनो निरोद्धुं शक्यत एव । तस्मादसंयतचित्तस्य योगो दुर्लभ एवेति सत्यमेव, तथापि संयतचित्तस्योपायेन प्रयत्नं कुर्वतः योगस्सिद्ध्यत्येवेत्यर्थः ॥३६॥

---

चञ्चलमिति । सुतरामशक्यमिति । यथा नभसि प्रभञ्जनस्य निश्चलत्वमुपपाद्य निरोधनमशक्यं, तथा मनोनिर्वृत्तिकतयाऽवस्थापनमशक्यमित्यर्थः । मन्ये इति । एवं महाफलस्यापि योगस्य दुस्साधस्योपपादनं निरर्थकमिति भावः ॥

अर्जुन उवाच—

कश्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो ! विमूढो ब्रह्मणः पथि ॥३७॥
अयतिश्श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण ! गच्छति ॥३८॥
एतं मे संशयं कृष्ण ! छेत्तुमर्हस्यशेषतः ।
त्वदन्यस्संशयस्यास्य छेत्ता नह्युपपद्यते ॥३९॥

कश्चिदिति । हे कृष्ण ! यः कश्चित् श्रद्धयोपेतः श्रद्धाविशेषेणैव योगाभ्यासे प्रवृत्तोऽयतिः । ततः प्रयत्नशैथिल्येन योगात्तदभ्यासाच्चलितं भ्रष्टं मानसं यस्य तादृशो योगसंसिद्धिं योगफलभूतं परमेश्वरसाक्षात्कारमप्राप्याप्राप्तस्सन् कां गतिं गच्छति प्राप्नोति ? हे महाबाहो ! उभयविभ्रष्टः कर्ममार्गाद्योगमार्गाच्च विच्युतः छिन्नाभ्रमिव न नश्यति । कश्चिदेतमुक्तविधं संशयमशेषतो निश्शेषेण छेत्तुमपनेतुमर्हति ? अस्य संशयस्य छेत्ता त्वदन्यो नोपपद्यते न लभ्यते । तस्मात्त्वमेवैनं संशयं छिन्द्धीत्यर्थः ॥३७-३९॥

श्रीभगवानुवाच—

पार्थ ! नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥४०॥

पार्थेति । हे पार्थ ! तस्य योगमभ्यसितुमारभ्य तत्सिद्धिमप्राप्यैव निधनं गतस्येह लोकेऽमुत्र परलोके च विनाशो विनष्टिर्न विद्यते नास्त्येव । हि यतः कल्याणकृत्सुकृतकारी कश्चिदपि दुर्गतिं कुत्सितां गतिं न गच्छतीत्यर्थः ॥४०॥

---

कश्चिदिति । यत्नशैथिल्येनेति । अभ्यासवैराग्यलोपमूलेनेत्यर्थः । एतद्योगाभ्यासकाले मरणादिनाऽन्तरायापत्तेरप्युपलक्षणं। कर्ममार्गादिति । कर्मणामीश्वरार्पितत्वाद्योगस्यासिद्धेश्चेत्यर्थः । छिन्नाभ्रमिवेति । यथा छिन्नमभ्रं पूर्वस्मादभ्राद्विच्छिन्नमभ्रान्तरं चाप्राप्तं सन्मध्य एव विलीयते तथेत्यर्थः ॥३७-३९॥

पार्थेति । विनष्टिर्न विद्यत इति । इहलोके विनष्टिरुभयभ्रंशा-

तर्हि तस्य किं सिध्यतीत्याशङ्कयाह—

प्राप्य पुण्यकृतांल्लोकानुषित्वा शाश्वतीस्समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥४१॥

प्राप्येति । योगभ्रष्टः पुण्यकृतामश्वमेधादियाजिनां लोकान्प्राप्य शाश्वतीः समा बहून्वत्सरानुषित्वा तत्रत्यसुखमनुभूय शुचीनां सदाचारवतां श्रीमतां सम्पन्नानां गेहेऽभिजायते जन्मवान्भवतीत्यर्थः ॥४१॥

अल्पकालाभ्यस्तयोगानां गतिमुक्त्वा, चिराभ्यस्तयोगानां गतिमाह—

अथ वा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥४२॥

अथवेति । योगिनां योगनिष्ठानां महतां धीमतां ज्ञानिनामेव ब्राह्मणानां कुले जायते, नतु श्रीमतां राज्ञाम् । तज्जन्म प्रस्तौति—ईदृशं यज्जन्म एतद्धि लोके दुर्लभतरमिति । दुरवापं मोक्षहेतुत्वादिति भावः ॥४२॥

तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम् ।
यतते च ततो भूयस्संसिद्धौ कुरुनन्दन ! ॥४३॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥४४॥

तत्रेति । तत्र द्विविधेपि जन्मनि पौर्वदैहिकं पूर्वजन्माभ्यस्तं बुद्धिसंयोगं योगविषयया बुद्ध्या संयोगं पूर्ववासनावशाल्लभते । ततश्च भूयोऽधिकं संसिद्धौ योगसिद्धिद्वारा मोक्षप्राप्तये यतते प्रयत्नवान्भवति । तेन पूर्वाभ्यासेन पूर्वजन्मकृताभ्यासेनैव सोऽवशोऽप्यनिच्छन्नपि ह्रियते विषयेभ्यः प्रत्याहृत्य योगनिष्ठः क्रियत इत्यर्थः ।

---

त्यातित्वं, परलोके विनष्टिर्नरकप्राप्तिरिति भावः । कुत्सितां गतिमिति । इहाकीर्तिरूपां, परत्र कीटादिजन्मरूपां वेत्यर्थः ॥४०॥

तत्रेति । अनिच्छन्नपीति । यथा वा चोरेण बहुभी रक्षितमपि भूषणादिकं स्वशक्तिविशेषादपह्रियते, एवं बहूनां योगप्रतिबन्धानां विद्यमानानामपि

योगस्य योगस्वरूपस्य जिज्ञासुर्ज्ञातुमिच्छुरपि योगाभ्यासरहितोपीत्यर्थः । शब्दब्रह्म वेदमतिवर्तते वेदोक्तयावत्कर्मफलादिकं फलमवाप्नोतीत्यर्थः॥४३-४४॥

एवमल्पयत्नोऽप्युत्तमगतिं गच्छति चेदथ तदभ्यासपरो नियमेन मुक्तिमवाप्नोतीति किमु वक्तव्यमित्याह—

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥४५॥

प्रयत्नादिति । प्रयत्नादधिकयत्नेन यतमानोऽभ्यासपरो योगी तु संशुद्धकिल्बिषो निर्धूतनिखिलपातकस्सन्ननेकजन्मसंसिद्धो योगसिद्ध्यन्तराले दैवान्मरणादिनाऽन्तरायसम्भवे जन्मान्तरे पूर्ववासनावशाद्योगसंसिद्धिमधिगम्य परां परमां गतिं शिवसायुज्यरूपां मुक्तिं गच्छतीत्यर्थः ॥४५॥

तपस्विभ्योधिको योगी ज्ञानिभ्योपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवाऽर्जुन ! ॥४६॥

कृच्छ्रचान्द्रायणादितपःपरेभ्यो ज्ञानिभ्यः साङ्ख्यप्रसिद्धप्रकृतिविविक्तपुरुषयाथात्म्यविद्भ्यः कर्मिभ्योऽश्वमेधादिकर्मकर्तृभ्य इष्टापूर्ताधिकारिभ्यश्च योगी ध्यानयोगाभ्यासपरोऽधिकश्श्रेष्ठः । तस्माद्धेतोरर्जुन ! त्वं योगी भवेत्यर्थः ॥४६॥

योगाभ्यासपराणां मध्ये परमेश्वरभक्तश्श्रेष्ठ इत्याह—

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥४७॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे आत्मसंयमयोगो नाम षष्ठोऽध्यायः ।

योगिनामिति । सर्वेषामपि योगिनां यमनियमाद्यष्टाङ्गयोगाभ्यासपराणां

---

योगभ्रष्टस्स्वयमनिच्छन्नपि पुरातनयोगवासनया सर्वान्प्रतिबन्धकानभिभूय स्ववशीक्रियत इति भावः ।

अवाप्नोतीति । अथ योगाभ्यासपरस्सन्नन्तराले भ्रष्ट उत्तरस्मिन्जन्मनि योगसिद्धिमवाप्य मुच्यत इति किमु वक्तव्यमिति भावः ॥४३-४४॥

तेष्वपीत्यर्थः । मद्गतेन परमेश्वरलग्नेनान्तरात्मनाऽन्तःकरणेन श्रद्धावान् श्रद्धया युक्तो यो मां परमेश्वरं, भजते सेवते स युक्ततमस्सर्वविधयोगनिष्ठेभ्यश्श्रेष्ठ इति मे मम मत इष्यत इत्यर्थः ॥४८॥

इति श्रीमज्जगद्गुरुश्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्य-
नीलकण्ठभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
आत्मसंयमयोगो नाम षष्ठोऽध्यायः ।

---

योगिनामिति । परमेश्वरमिति । एवमादिष्वस्मच्छब्दः परमेश्वरपर एवेत्युत्तरत्र स्फुटीभविष्यति ॥४७॥

इति श्रीमल्लोकाराध्यशिवयोगिमहोपाध्यायनागलिङ्गशिवाराध्य-
कृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां
आत्मसंयमयोगो नाम षष्ठोऽध्यायः ।

---



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु



## ज्ञानयोगो नाम सप्तमोऽध्यायः ।

आद्येनाऽध्यायषट्केन मुक्तप्राप्यस्य परब्रह्मणस्साम्बशिवस्य प्राप्त्युपायभूत-मुपासनं वक्तुं तदङ्गभूतमात्मज्ञानपूर्वककर्मानुष्ठानसाध्यं प्राप्तुः प्रत्यगात्मनो याथात्म्यदर्शनमुक्तम् । अथ मध्यमषट्केन प्राप्यस्य परमेश्वरस्य स्वरूपं, पदुपा-सनं भक्तिपदविवक्षितमभिधीयते । पूर्वाध्यायान्ते 'श्रद्धावान्भजते यो मा'मित्यु-क्तस्य परमेश्वरभजनस्य व्याख्यानाय सप्तमोऽध्याय आरभ्यते—

श्रीभगवानुवाच—

मय्यासक्तमनाः पार्थ! योगं युंजन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु! ॥१॥

मयीति । मयि परमेश्वरे आसक्तमत्यन्तलग्नं मनो यस्य तथाविधः, मन्निष्ठो योगं युञ्जन्नभ्यस्यन् समग्रं विभूतिबलैश्वर्ययुक्तं मां परमेश्वरं यथा येन प्रकारेण ज्ञास्यसि तन्मयोच्यमानं शृण्वित्यर्थः ॥१॥

---

मयीति । भक्तिपदविवक्षितमिति । तदधिकृत्य वेदान्तार्थपरिष्कारे विस्तर इति नेह पुनः । अत्यन्तलग्नमिति । परमेश्वरभावनाविश्लेषे शीर्य-माणतया तदेकासक्तमिति भावः ॥१॥

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यद्ज्ञात्वा नेह भूयोऽन्यद्ज्ञातव्यमवशिष्यते ॥२॥

ज्ञानमिति । ज्ञानं परमेश्वरस्वरूपविषयं विज्ञानं तदतिरिक्तचिदचिद्वस्तुविषयं, तेनसह ते प्रवक्ष्यामि । तत्स्तौति—यद्ज्ञात्वा ततोऽन्यद्ज्ञातव्यं नावशिष्यत इत्यर्थः ॥२॥

वक्ष्यमाणस्य ज्ञानस्य दुष्प्रापतामाह—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥३॥

मनुष्याणामिति । मनुष्यव्यतिरिक्तानां जन्तूनां श्रेयसि प्रवृत्तिरेव नास्ति । मनुष्येष्वपि कश्चिदेव परमेश्वरज्ञानाय यतते । यतमानेष्वपि कश्चिदेव परमेश्वरप्रसादात्तत्स्वरूपं विजानाति । एवमत्यन्तदुर्लभमपि पारमेश्वरज्ञानं त उपदेक्ष्यामीति भावः ॥३॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥४॥

भूमिरिति । भोग्यभोगोपकरणभोगस्थानरूपतया पाशरूपेण स्थितस्यास्य जगतः पृथिव्यादिपञ्चभूतरूपेण, मनःप्रभृतीन्द्रियरूपेण, महदहङ्काररूपेण चाष्टविधा मे परमेश्वरसम्बन्धिनी प्रकृतिरचिच्छक्तिरिति विद्धीत्यर्थः ॥४॥

एवमचिच्छक्तिमुपसंहरन् पशुतत्त्वात्मिकां चिच्छक्तिं निरूपयति—

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ! ययेदं धार्यते जगत् ॥५॥

अपरेयमिति । इयमचेतनरूपाऽपरा प्रकृतिरितोऽस्या अन्यां भिन्नां जीवभूतां पशुतत्त्वात्मिकां चिच्छक्तिं परां विद्धि । यया मदीयया चिच्छक्त्येदं जगद्धार्यते निर्वाह्यत इत्यर्थः ॥५॥

---

ज्ञानमिति । चिदचिद्वस्त्वति । पशुपाशरूपचिदचिद्वस्तुविविक्तस्यैव पतिरूपपरमेश्वरज्ञानस्य पाशमोचकतया तदखिलं विविच्य वक्ष्यामीति भावः ॥२॥

अपरेति । जडत्वात्परार्थत्वाद्बन्धरूपत्वाच्चेत्यर्थः ॥५॥

एवं चिदचिद्रूपस्वशक्तिद्वारा चेतनाचेतनात्मकस्य सर्वस्यापि जगतः परमकारणभूतः परमेश्वर एवेत्याह—

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।**
**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥६॥**

**एतद्योनीनीति** । एतद्योनीन्युक्तचिदचिद्रूपपरमेश्वरशक्तिहेतुकान्येव चेतनाचेतनरूपाणि सर्वाणि भूतानीति निश्चिनु । तस्मात्कृत्स्नस्याशेषस्यापि जगतः प्रभवः प्रकर्षेण भवत्यस्मादिति प्रभव उत्पत्तिकारणं, प्रलयः प्रलीयतेऽस्मिन्ननेनैवेति संहर्ता चाहं चिदचिच्छक्तिविशिष्टः परमेश्वर एवेति चावधारयेत्यर्थः । यद्वाऽहमिति शक्तिशिवाद्वयं ब्रह्मोच्यते । तथाऽऽप्तवचनम्—'अनुत्तरविसर्गान्तशिवशक्त्यद्वयात्मनः । परामर्शो निर्गुणत्वादहमित्युच्यते विभोः ॥ ह्यकारे द्वादशान्ते हकारस्तदिदं विदुः । अहमात्मकमद्वैतं यत्प्रकाशात्मविश्रम' इति ॥६॥

---

**एतद्योनीनीति** । **परमेश्वर एवेति** । अत्रास्मच्छब्दोऽन्तर्यामिदृष्ट्या प्रयुक्ततया परमेश्वरपर एवेति भावः । विदितमेव हि तत्त्वोपदेशावसरे—'मामुपा'स्वेति महेन्द्रवाक्य इव, 'अहं मनुरभवं सूर्य'श्चेति वामदेवसार्वात्म्योपदेश इव च वेदान्तेषु शास्त्रदृष्ट्याऽस्मच्छब्दः प्रयुज्यत इति ।

नन्वत्रास्मच्छब्दः प्रयोक्तरि वासुदेव एव स्वरस इति चेन्न, तथा-सति—'वृष्णीनां वासुदेवोऽ'स्मीति वचनेऽनन्वयात् । तत्र विरोधेनास्मच्छब्दस्तन्मूलभूतनारायणपरतया परिगृह्यत इति चेदत्रापि 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति, सर्वभूतमहेश्वर'मित्यादिना महेश्वरेश्वरादिश्रुतिभिः परमेश्वरस्यैव जगत्कारणत्वाभ्यासेन तदविरोधाय सर्वकारणत्वसर्वसेव्यत्वप्रतिपादकवाक्येषु शास्त्रदृष्ट्याऽन्तर्यामिपरत्वग्रहणस्यैव युक्ततरत्वात् । किं च 'मायां तु प्रकृतिं विन्द्यान्मायिनं तु महेश्वरम्, शिव एव केवलः, तदक्षरं, तत्सवितुर्वरेण्यं, प्रज्ञा च तस्मात्प्रसृता पुरा'णीत्यादिश्रुतिभिः । जगन्मूलभूतमायाशक्तिवैशिष्ट्यस्य शिवैकान्तिकत्वाम्नानेन 'मे भिन्ना प्रकृतिरष्टधे'त्यादिना स्मर्यमाणस्यापि तस्य परमेश्वरविषयतयाऽनीश्वरपरत्वग्रहणस्य वेदविरुद्धत्वाच्चेत्यधिकं गीतातात्पर्यनिर्णय इति नेह पुनः ॥६॥

मत्तः परतरं नान्यत्किञ्चिदस्ति धनंजय !
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥७॥

मत्त इति । मत्तः परमेश्वरादन्यतः परतरं नास्ति- 'तस्मात्परं नापरमस्ति किंचि'दित्यादिश्रुत्यर्थोऽत्रानुसन्धेयः । सूत्रे मणय इव मयि परमेश्वरे, इदं सर्वं प्रोतम् । एतेन सर्वस्यापि जगतः परमेश्वर एव स्थितिकारणमिति सिद्धम् ॥७॥

रसोऽहमप्सु कौन्तेय ! प्रभाऽस्मि शशिसूर्ययोः ।
प्रणवस्सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥८॥
पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥९॥
बीजं मां सर्वभूतानां विद्धि पार्थ ! सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥१०॥
बलं बलवतां चाऽहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ! ॥११॥

रस इति । अप्सु पुण्यो रसः मधुरस्तन्मात्ररूपोऽहं परमेश्वर एव । श्रु- 'योऽप्सु तिष्ठ'न्निति । एवं शशिसूर्ययोः प्रभा प्रकाशः परमेश्वर एव । तथा सर्ववेदेषु प्रणव ओङ्कार ईश्वर एव । 'तद्यथा शंकुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वा'गिति श्रुतेः । सन्तृण्णानि ग्रथितानीत्यर्थः । एवं शब्दः पुण्यस्तन्मात्ररूप आकाशे स्थितः परमेश्वर एवेत्यर्थः । तथा पुण्यस्सुरभिर्गन्धस्तन्मात्ररूपो नृषु, पौरुषमुद्यमः, विभावसौ तेजो दीप्तिः, सर्वभूतेषु जीवनमायुः, तपस्विषु तपो द्वन्द्वसहनरूपं, सर्वभूतानां बीजं कारणं, बुद्धिमतां बुद्धिः प्रज्ञा,

---

मत्त इति । प्रोतमिति । स्यूतमित्यर्थः । सर्वशब्दवाच्यं चिदचिद्वस्तुसारं कार्यकारणावस्थयोः स्थूलसूक्ष्मरूपं सर्वस्याप्यात्मभूतपरमेश्वरे स्यूतं, तच्छरीरतया तदाश्रितं वर्तत इति भावः । अत्रार्थेऽन्तर्यामिब्राह्मणं यस्य पृथिवी शरीरमित्याद्यष्टमूर्त्यसाधारणमुदाहरन्तः परे परमेश्वर एवाऽवशतस्समाश्रयन्तीति दिक् ॥७॥

तेजस्विनां तेजः प्रागल्भ्यं, बलवतां बलं सामर्थ्यं, भूतेषु धर्माविरुद्धः स्वधर्मेणाविरुद्धः कामः परमेश्वर एव । सर्वत्रापि साररूपेणावतिष्ठत इति, गन्धादिरूपे परमेश्वरे भूम्यादयस्सर्वे प्रोता इति च भावः ॥८-११॥

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥१२॥

य इति । एवमन्येपि सात्त्विकाश्शमादयः, राजसा हर्षदर्पादयः, तामसाश्शोकमोहादयः, प्राणिनां ये पूर्वकर्मवशाज्जायन्ते भावास्तान्सर्वानपि मत्तः परमेश्वरादेव जातान्विद्धि । पारमेश्वरप्रकृतिगुणकार्यत्वादिति भावः । तथापि न त्वहं तेषु परमेश्वरो जीववत्तदधीनो न वर्तत इत्यर्थः । ते भावास्तु मयि; परमेश्वराधीना एवेत्यर्थः ॥१२॥

एवम्भूतं परमेश्वरं कुतोऽयं जनो न जानातीत्याशङ्क्याह—

त्रिभिर्गुणमयैर्भावैरेभिस्सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥१३॥

त्रिभिरिति । त्रिभिर्गुणमयैः सत्त्वादिगुणविकारैस्त्रिविधैर्भावैस्स्वभावैर्जगत्प्राणिजातमित्यर्थः । मोहितमत एव नाभिजानाति मां परमेश्वरं कथंभूतमेभ्यो गुणविकारेभ्यः परं तैरसंस्पृष्टमित्यर्थः । अव्ययं निर्विकारं चेति भावः ॥

के पुनः परमेश्वरं जानन्तीत्याशङ्क्याह—

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥१४॥

दैवीति । दैवी अलौकिकी, अत्यद्भुतेत्यर्थः । गुणमयी सत्त्वादिगुणात्मिका मम परमेश्वरस्य मायाशक्तिः, दुरत्यया दुस्तरा सा पाशरूपेण

---

दैवीति । परमेश्वरस्येति । 'मायां तु प्रकृतिं विन्द्यान्मायिनं तु महेश्वर'मिति श्रुतेर्मायाशक्त्या महेश्वरत्वाभ्यानेनात्रास्मच्छब्दोऽन्तर्यामिदृष्ट्या परमेश्वरपर एवेति भावः । तेन परैर्मायाशक्त्या देवतान्तरसम्बन्धित्वकथनपरं यद्विवरणं तद्वेदविरुद्धमिति सिद्धम् । शक्तिरिति । माया नाम पारमेश्वरशक्तिरेव, नतु मायावादिकामधेनुरनिर्वचनीयरूपा कल्पितेति भावः ।

जन्तुं बध्नाति; तया मोहितत्वाच्चेतनः परमेश्वरं नाभिजानातीति भावः। अथ यो मां परमेश्वरमेव प्रपद्यन्ते त एवैनां दुस्तरामपि तरन्ति। पारमेश्वरप्रसादेन मायाजलधिं तीर्त्वा परमेश्वरसायुज्यमाप्नुवन्तीत्यर्थः ॥१४॥

जनाः कुतः परमेश्वरं न प्रपद्यन्त इत्याशङ्क्याह—

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।**
**माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥१५॥**

**नेति।** दुष्कृतिनः पापशीलाः, तत्र हेतुगर्भं विशेषणं; मूढाः मौढ्यमेव पापशीलत्वहेतुरित्यर्थः। तत्रापि हेतुगर्भं विशेषणम्। **माययाऽपहृतज्ञाना इति।** अत एवासुरं भावं दम्भदर्पादिरूपमाश्रिता नराधमा मां परमेश्वरं न प्रपद्यन्त इत्यर्थः ॥१५॥

सुकृतिन एव परमेश्वरं भजन्ते, ते च सुकृततारतम्याच्चतुर्विधा इत्याह—

**चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन !**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ! ॥१६॥**

**चतुर्विधा इति।** आर्तो रुग्णः, जिज्ञासुः पारमेश्वरज्ञानेच्छावान्, अर्थार्थी इष्टार्थसिद्धिलोलुपः, ज्ञानी शास्त्राचार्योपदेशेन परमेश्वरस्वरूपं विदित्वा तत्सायुज्यप्राप्तिमात्रनिरूढभावश्चेत्येते पुराकृतसुकृतविशेषेणैव परमेश्वरं सेवन्त इत्यर्थः ॥१६॥

एतेषां मध्ये ज्ञानी श्रेष्ठ इत्याह—

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥१७॥**

**तेषामिति।** तेषां मध्ये ज्ञानी विशिष्यते श्रेष्ठ इत्यर्थः। कुतो नित्य-

---

विचित्रकार्यकरत्वादेवास्या मायाशब्दितत्वमवगन्तव्यम्। **परमेश्वरमेव प्रपद्यन्त इति।** एतेनास्मच्छब्दं प्रयोक्तृभूतवासुदेवपरत्वेन योजयन्तस्तस्य प्रपत्तव्यतां येऽभिमन्वते ते परास्ता उत्तरग्रन्थविरोधात्। तथाहि पञ्चदशाध्याये 'तमेव चाद्यं पुरुषं प्रपद्य' इति स्वस्य प्रपत्तव्यं परमेश्वरमावेदयिष्यन्वासुदेवः कथमत्र स्वमेव प्रपत्तव्यं पार्थायोपदिशेत्। पार्थोऽपि स्ववचनविरुद्धमिममुपदेशं कथमिव प्रमाणीकुर्यात्। तस्मात्परकीयानि व्याख्यानान्यपोपगतान्येवेति दिक् ॥

युक्तः- अर्थार्थिनस्तु अर्थसिद्धिपर्यन्तमेव परमेश्वरे भक्तियोगः, नतु पश्चात् । ज्ञानिनस्तु- निर्व्याजभक्तियोगनिष्ठतया सदापि परमेश्वरे भक्तियोगस्य स्थिरतया स एव नित्ययुक्तो भवति, तस्मादित्यर्थः । किंच एकभक्तिः- 'शिव एव केवल' इत्यादिश्रुत्यन्तराद्धान्तश्रवणमननसिद्धनिर्विचिकित्सज्ञानवान् परमेश्वर एकस्मिन्नेव सुस्थिरभक्तियोगवान् भवति, नतु पश्चायतनादिसेनायतनः । ततोपि ज्ञानी विशिष्ट इत्यर्थः । एवं यस्माद्ज्ञानिनः परमेश्वर एव निरतिशया प्रीतिस्तस्मादेव परमेश्वरस्यापि ज्ञानिशब्दिते भक्तवरेपि निरतिशयं वात्सल्यं विद्यत इति भावः ॥

उदारास्सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥१८॥

उदार इति । एते सर्वे त्रयोऽप्युदारा उत्कृष्टा एव । ज्ञानी तु परमेश्वरस्यात्मैव शरीरमिव प्रेमपात्रमित्यर्थः । तत्र हेतुमाह—हि यस्मात्स ज्ञानी परमेश्वरमेव परमप्राप्यं निश्चित्यास्थितस्समाश्रितवानित्यर्थः ॥१८॥

एतादृशो भक्तवरस्सुदुर्लभ इत्याह—

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ॥१९॥

बहूनामिति । अत एव 'कोटिजन्मार्जितैः पुण्यैश्शिवे भक्तिः प्रजायत' इति स्मर्यते । वामदेवस्सर्वमिति ज्ञानवान्महात्मा सुतरां दुर्लभ इत्यर्थः ॥१९॥

---

तेषामिति । सुस्थिरभक्तियोगवानिति । अत एव 'स स्थाणुस्स्थिरभक्तियोगसुलभ' इत्याह- कलिकुलमौलिवासः कालिदासः ॥१७॥

बहूनामिति । वामदेव इति । वामदेवस्सर्वमिति पाठ एव साधीयान् 'सर्वो ह्येष रुद्र' इति श्रुत्यनुरुद्धत्वात् । अथ वासुदेव इति पाठस्तु मसुवर्णयोस्स्वरूपसान्निध्याद्वर्णभ्रममूलो वा पाञ्चरात्रतन्त्रपरतन्त्रविश्वासमूलो वा कथमपि भवत्यसङ्गत एव । तथाहि प्रकृते वासुदेवपदेन किं वसुदेवापत्यमभिधीयते, उत तन्मूलभूतादिनारायणो वा ? आद्ये- तस्य सर्वगतत्वमसिद्धम् । द्वितीये-

एवं कामप्राप्तये परमेश्वरमेव सेवन्ते ते भुक्तिमवाप्य शनैर्मुक्तिमधिगच्छन्तीत्युक्तम्। अथ ये कामपरा देवतान्तराणि भजन्ते ते कथमपि मुक्तिभाजो न भवन्तीत्याह—

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः।
तं तं नियममास्थाय प्रकृत्या नियतास्स्वया ॥२०॥

कामैरिति। तैस्तैः कामैरभिलाषैः, हृतज्ञाना अपहृतविवेकास्सन्तः, स्वया पूर्वकर्मवासनया, नियता नियमिताः, तं तं नियममुपवासादिकमास्थाय, अन्यदेवताः प्रपद्यन्ते सेवन्ते जनाः प्रायश इति शेषः ॥२०॥

यो यो यां यां तनुं भक्तश्श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥२१॥

य इति। तेष्वपि यो यो भक्तो यां यामादित्यादिरूपां तनुं परमेश्वरस्य 'यस्यादित्यश्शरीर'मिति श्रुतेः श्रद्धयाऽऽसक्त्याऽर्चितुमिच्छत्यर्चयितुं प्रवर्तते तस्य तस्य भक्तस्याचलां स्थिरां श्रद्धां तां तद्विषयामेव भक्तिं परमेश्वर एव प्रयच्छन्ननुगृह्णातीत्यर्थः ॥२१॥

स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान्हितान् ॥२२॥

स इति। स भक्तस्तया तत्तद्देवताविषयया श्रद्धया भक्त्या युक्तस्तस्या देवताया आराधनमीहते करोतीत्यर्थः। ततस्तस्या देवतायाः कामान्मनोरथान् लभते प्राप्नोति। ते कामा मयैव सर्वान्तर्यामिणा सर्वकर्मफलप्रदेन परमेश्वरेणैव विहिता निर्मिता इत्यर्थः ॥२२॥

---

वासुदेवपदमादिनारायणे कंसारातिपरमेव वाऽवतारविशेषद्वारको भवति गौणमेव न मुख्यम्। तदा च गौण्यापि वृत्त्या प्रकृते कुत्राऽप्यश्रुतनामकसोमकारातिपरत्वग्रहणाभिनिवेशात्। 'ईश्वरस्सर्वभूताना'मित्यादिना विश्रुतनामकपरमेश्वरपरत्वग्रहणमेवास्य पदस्य समुचितमिति विदितं सुधियामित्यलमधिकेन ॥१९॥

यद्यपि सर्वदेवतानामपि परमेश्वरतनुत्वाविशेषात्तदाराधनं परमेश्वराराधनमेव । तत्र फलदातापि परमेश्वर एव । तथापि परमेश्वरभक्तानामितरेषां च फलवैषम्यं विद्येतेत्याह—

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥२३॥

अन्तवत्त्विति । अल्पमेधसां विवेकरहितानां तेषामन्यदेवभक्तानां फलमन्तवत्तु नश्वरमेव भवति । देवयजो देवतान्तरभक्ता देवान् जननमरणशालिनो यान्ति प्राप्नुवन्ति । परमेश्वरभक्तास्तु परमेश्वरमनाद्यन्तमाप्नुवन्ति । एवं सेव्यानुगुणमेव सेवकानां फलमिति भावः ॥२३॥

सर्वेऽपि कुतो देवतान्तराणि हित्वा परमेश्वरमेव न भजन्तीत्याशङ्कयाह--

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥२४॥

अव्यक्तमिति । अबुद्धयो विवेकशून्याः, अव्यक्तं 'तमादिमध्यान्त'-मित्यादिना निराकारमपि व्यक्तिमापन्नं उमासहायत्वाद्यप्राकृतदिव्यविग्रहं परमेश्वरं, न मन्यन्ते न विदन्ति । तत्र कारणमाह—मम परमेश्वरस्याव्ययं नित्यं, अनुत्तमं निरतिशयं, परं भावं परत्वमजानन्त इत्यर्थः ॥२४॥

तेषां परमेश्वरज्ञानाभावे हेतुमाह—

नाहं प्रकाशस्सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥२५॥

नाहमिति । सर्वस्य लोकस्याहं परमेश्वरः, न प्रकाशः प्रकटो न

---

अन्तवत्त्विति । सेव्यानुगुणमेवेति । जननमरणशालिदेवतान्तरभजनान्न जननमरणरहिता मुक्तिरिति भावः । 'यदा चर्मवदाकाश'मित्यादिश्रुतेः । अत एवोक्तं श्रीसुदर्शनाचार्यचरणैः—'जनित्वा मृत्वा वा जगति परिवर्ती सुरगणः कथं मे संसारभ्रमणभयभाजस्तु शरण'मिति ॥२३॥

अव्यक्तमिति । परत्वमिति । 'परात्परतरो ब्रह्मा तत्परात्परतो हरिः । तत्परात्परतो हीश' इत्यादिश्रुतिसिद्धपरमेश्वरपरतरत्वज्ञानशून्यतयाऽन्तवन्त्येव देवतान्तराणि भजन्तः पुनः पुनर्जन्ममरणशालिन एव भवन्तीति भावः ॥२४॥

भवति । कुतो योगमायासमावृतः योगस्सङ्कल्पस्सर्गादिविषयस्तेन तद्वशवर्तिन्या मायया अघटनघटनापटीयस्या शक्त्या, समावृतः सञ्छन्नस्सन्नत एव मूढो विवेकरहितोऽयं लोको जनोऽजमव्ययमनादिनिधनं मां परमेश्वरं, नाभिजानाति न वेत्तीत्यर्थः ॥२५॥

अनावृतज्ञानशक्तिकत्वेन परमेश्वरस्य पारम्यमावेदयन्नन्येषामज्ञानमाह—

**वेदाहं समतीतानि वर्तमानानि चार्जुन !**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥२६॥**

**वेदाहमिति ।** परमेश्वरस्त्रैकालिकानि सकलान्यपि भूतानि वेद; कालेनानवच्छेदात् । अथ कश्चन कोऽपि जन्तुः परमेश्वरं न जानीतेत्यर्थः ॥२६॥

तस्याज्ञानस्य दार्ढ्ये हेतुमाह—

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत !**
**सर्वभूतानि सम्मोहं सर्गे यान्ति परन्तप ! ॥२७॥**

**इच्छेति ।** सर्गे समुत्पन्ने इच्छाद्वेषौ रागद्वेषौ ताभ्यां समुत्थेन जातेन द्वन्द्वदोषेण शीतोष्णसुखदुःखादिद्वन्द्वविषयमोहेन सर्वभूतानि सकलान्यपि जन्तुजातानि सम्मोहं विवेकवैकल्यं यान्ति । तस्मात्परमेश्वरं न जानन्तीत्यर्थः ॥

यद्येवं तर्हि कथं कतिचित्परमेश्वरं भजन्तीत्याशङ्क्याह—

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥२८॥**

**येषामिति ।** पुण्यकर्मणां बहुजन्मार्जितसुकृतविशेषाणां येषां जनानां पापमन्तगतमत्यन्तक्षीणं, त एव द्वन्द्वदोषनिर्मुक्ता मोहरहितास्सन्तो दृढव्रताः चीर्णशिरोव्रता मां परमेश्वरं भजन्ते सेवन्त इत्यर्थः ॥२८॥

**जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।**
**ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥२९॥**

**जरेति ।** जरामरणमोक्षाय भवबन्धविमुक्त्यै, मां परमेश्वरमाश्रित्य प्रपद्य, ये सुकृतिनो यतन्ते निरन्तरध्याननिष्ठा वर्तन्ते, ते तद्ब्रह्म परमेश्वरं अध्यात्मं प्रत्यगात्मस्वरूपं कृत्स्नमशेषं कर्म प्रयाणकालसमनुष्ठेयं च विदुरित्यर्थः ॥२९॥

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥३०॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानयोगो नाम सप्तमोऽध्यायः ।

**साधिभूतेति** । साधिभूताधिदैवमधिभूतेनाधिदैवेन सह साधियज्ञमधियज्ञेन च सह मां परमेश्वरं ये विदुस्ते भक्ताः प्रयाणकालेऽपि च प्राणोत्क्रान्तिवेलायामपि युक्तचेतसस्समाहितचित्ता मां परमेश्वरं विदुर्न विस्मरन्तीत्यर्थः ॥३०॥

इति श्रीमज्जगद्गुरुरेवणाचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्यनीलकण्ठभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये ज्ञानयोगो नाम सप्तमोऽध्यायः ।

---

**साधिभूतेति** । अधिभूतेनेति । अधिभूतादीनां स्वरूपमनन्तराध्याये व्यक्तीभविष्यति ॥३०॥

इति श्रीमल्लोकाराध्यशिवयोगिमहोपाध्यायनागलिङ्गशिवाराध्यकृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां ज्ञानयोगो नाम सप्तमोऽध्यायः ।

---



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## अक्षरपरब्रह्मयोगो नामाऽष्टमोऽध्यायः ।

पूर्वाध्यायान्तकथितानां ब्रह्मादिपदार्थानां सप्तानां स्वरूपजिज्ञासुरर्जुनः पप्रच्छ किं तदित्यादिना द्वाभ्याम्—

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम !
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥१॥

**किमिति** । किमध्यात्मं ? किं कर्म ? किमधिभूतं ? किं तद्ब्रह्म ? अधिदैवं किम् ? ॥१॥

अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन !
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥२॥

**अधियज्ञ इति** । अधियज्ञः कः ? प्रयाणकाले परमेश्वरः कथं ज्ञेयः ॥२॥

श्रीभगवानुवाच—

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥३॥

**अक्षरमिति** । 'एतद्वैतदक्षर'मिति, 'शिव एव केवलः, तदक्षर'मित्यादिश्रुतिभिस्सकलजगत्कारणत्वेन निर्धारितं यच्छिवतत्त्वं, ततः परमं परात्परं ब्रह्म, स्वभावः प्रकृतिर्भूतसूक्ष्मतद्वासनादिकं, अध्यात्ममनात्मभूतमात्मनि सम्पद्यमानत्वात्तथोच्यत इत्यर्थः । प्राप्यतया परमेश्वरस्त्याज्यतया प्रकृतिश्च मुमुक्षुभि-

ज्ञातव्यमित्यर्थः । भूतानां प्राणिनां भाव उत्पत्तिः । तत्र कारणभूतो विसर्गः- 'पञ्चम्यामाहुतावापः पुरुषवचसो भव'न्तीति श्रुतिसिद्धः, योषित्सम्बन्धजः कर्म-शब्दितः । एतदपि वैराग्यनिदानतया ज्ञेयमित्यर्थः ॥३॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतांवर! ॥४॥

अधिभूतमिति । क्षरो नश्वरो भावो देहादिरधिभूतं भूतं प्राणिनमधिकृत्य भवत्यधिभूतमित्युच्यत इत्यर्थः । पुरुषो भोक्ताऽधिदैवतं यस्यात्मा शरीरमिति । परदैवतस्याधिकरणभूत इत्यर्थः । अयमपि प्राप्तृत्वाद्वेदनीयः । यद्वा पुरुषान्न परं किञ्चिदित्युक्तः परमेश्वर एव । स एव ह्यधिदैवतं सर्वेषामपि देवानामधिष्ठानत्वात् । 'येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च; स्वाद्व-स्वादू विजानातीति, जिह्वाङ्गं गुरुलिङ्गं स्या'दित्यादिना च सकलेन्द्रियप्रेरक-तयाऽधिदैवतत्वेनाम्नातत्वाच्च । अधियज्ञो यज्ञस्वरूपोऽहमेवादिविष्णुरित्यर्थः । 'यज्ञो वै विष्णु'रिति श्रुतेः परमेश्वरस्तु यज्ञाधिपतिः । 'आवो राजानमध्वर'-स्येति तस्याध्वराधिपतित्वेनाम्नानात् । अत्र देह इति यज्ञस्य देवनिर्वर्त्यत्वाद्देह-समवायितया तदधिकरण इत्यर्थः ॥४॥

अथ प्रयाणकाले च कथं ज्ञेयोऽसीत्यस्य प्रश्नस्योत्तरमाह—

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेबरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥५॥

अन्तकाल इति । यो भक्तोऽन्तकाले प्राणोत्क्रान्तिवेलायां, मां परमेश्वरमेव स्मरन्, कलेबरं शरीरं, मुक्त्वा प्रयाति । 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्प'द्येति श्रुतेः अर्चिरादिमार्गेण निर्गच्छति स मद्भावं परमेश्वर-परमसारूप्यं, याति प्राप्नोति । अत्रार्थे संशयो नास्तीत्यर्थः ॥५॥

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवैति कौन्तेय! सदा तद्भावभावितः ॥६॥

यमिति । यं यं देवतान्तरं तदितरं वा स्मरन् अन्तकाले शरीरं परि-

---

अन्तकाल इति । सारूप्यमिति । एतेन पारमेश्वरस्मरणं मोक्षोपायः, परमेश्वरपरमसारूप्यमेव मोक्ष इति च सिद्धम् ॥५॥

भवति । कुतो योगमायासमावृतः योगस्सङ्कल्पस्सर्गादिविषयस्तेन तद्वशवर्तिन्या मायया अघटनघटनापटीयस्या शक्त्या, समावृतः सञ्छन्नस्सन्नत एव मूढो विवेकरहितोऽयं लोको जनोऽजमव्ययमनादिनिधनं मां परमेश्वरं, नाभिजानाति न वेत्तीत्यर्थः ॥२५॥

अनावृतज्ञानशक्तिकत्वेन परमेश्वरस्य पारम्यमावेदयन्नन्येषामज्ञानमाह—

वेदाहं समतीतानि वर्तमानानि चार्जुन !
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥२६॥

वेदाहमिति । परमेश्वरस्त्रैकालिकानि सकलान्यपि भूतानि वेद; कालेनानवच्छेदात् । अथ कश्चन कोऽपि जन्तुः परमेश्वरं न जानीतेत्यर्थः ॥२६॥

तस्याज्ञानस्य दार्ढ्ये हेतुमाह—

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत !
सर्वभूतानि सम्मोहं सर्गे यान्ति परन्तप ! ॥२७॥

इच्छेति । सर्गे समुत्पन्ने इच्छाद्वेषौ रागद्वेषौ ताभ्यां समुत्थेन जातेन द्वन्द्वदोषेण शीतोष्णसुखदुःखादिद्वन्द्वविषयमोहेन सर्वभूतानि सकलान्यपि जन्तुजातानि सम्मोहं विवेकवैकल्यं यान्ति । तस्मात्परमेश्वरं न जानन्तीत्यर्थः ॥

यद्येवं तर्हि कथं कतिचित्परमेश्वरं भजन्तीत्याशङ्क्याह—

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥२८॥

येषामिति । पुण्यकर्मणां बहुजन्मार्जितसुकृतविशेषाणां येषां जनानां पापमन्तगतमत्यन्तक्षीणं, त एव द्वन्द्वदोषनिर्मुक्ता मोहरहितास्सन्तो दृढव्रताः चीर्णशिरोव्रता मां परमेश्वरं भजन्ते सेवन्त इत्यर्थः ॥२८॥

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥२९॥

जरेति । जरामरणमोक्षाय भवबन्धविमुक्त्यै, मां परमेश्वरमाश्रित्य प्रपद्य, ये सुकृतिनो यतन्ते निरन्तरध्याननिष्ठा वर्तन्ते, ते तद्ब्रह्म परमेश्वरं अध्यात्मं प्रत्यगात्मस्वरूपं कृत्स्नमशेषं कर्म प्रयाणकालसमनुष्ठेयं च विदुरित्यर्थः ॥२९॥

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेपि च मां ते विदुर्युक्तचेतसः ॥३०॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानयोगो नाम सप्तमोऽध्यायः ।

साधिभूतेति । साधिभूताधिदैवमधिभूतेनाधिदैवेन सह साधियज्ञमधियज्ञेन च सह मां परमेश्वरं ये विदुस्ते भक्ताः प्रयाणकालेऽपि च प्राणोत्क्रान्तिवेलायामपि युक्तचेतसस्समाहितचित्ता मां परमेश्वरं विदुर्न विस्मरन्तीत्यर्थः ॥३०॥

इति श्रीमज्जगद्गुरुरेनाचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्यनीलकण्ठभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये ज्ञानयोगो नाम सप्तमोऽध्यायः ।

---

साधिभूतेति । अधिभूतेनेति । अधिभूतादीनां स्वरूपमनन्तराध्याये व्यक्तीभविष्यति ॥३०॥

इति श्रीमल्लोकाराध्यशिवयोगिमहोपाध्यायनागलिङ्गशिवाराध्यकृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां ज्ञानयोगो नाम सप्तमोऽध्यायः ।

---



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## अक्षरपरब्रह्मयोगो नामाऽष्टमोऽध्यायः ।

पूर्वाध्यायान्तकथितानां ब्रह्मादिपदार्थानां सप्तानां स्वरूपजिज्ञासुरर्जुनः पप्रच्छ किं तदित्यादिना द्वाभ्याम्—

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम !
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥१॥

किमिति । किमध्यात्मं ? किं कर्म ? किमधिभूतं ? किं तद्ब्रह्म ? अधिदैवं किम् ? ॥१॥

अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन !
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥२॥

अधियज्ञ इति । अधियज्ञः कः ? प्रयाणकाले परमेश्वरः कथं ज्ञेयः ॥२॥

श्रीभगवानुवाच—

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥३॥

अक्षरमिति । 'एतद्वैतदक्षर'मिति, 'शिव एव केवलः, तदक्षर'मित्यादिश्रुतिभिस्सकलजगत्कारणत्वेन निर्धारितं यच्छिवतत्त्वं, ततः परमं परात्परं ब्रह्म, स्वभावः प्रकृतिर्भूतसूक्ष्मतद्वासनादिकं, अध्यात्ममनात्मभूतमात्मनि सम्पद्यमानत्वात्तथोच्यत इत्यर्थः । प्राप्यतया परमेश्वरस्त्याज्यतया प्रकृतिश्च मुमुक्षुभि-

ज्ञातव्यमित्यर्थः । भूतानां प्राणिनां भाव उत्पत्तिः । तत्र कारणभूतो विसर्गः- 'पञ्चम्यामाहुतावापः पुरुषवचसो भव'न्तीति श्रुतिसिद्धः, योषित्सम्बन्धजः कर्म- शब्दितः । एतदपि वैराग्यनिदानतया ज्ञेयमित्यर्थः ॥३॥

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।**
**अधियज्ञोऽहमेवात्र देहे देहभृतांवर! ॥४॥**

अधिभूतमिति । क्षरो नश्वरो भावो देहादिरधिभूतं भूतं प्राणिन- मधिकृत्य भवत्यधिभूतमित्युच्यत इत्यर्थः । पुरुषो भोक्ताऽधिदैवतं यस्यात्मा शरीरमिति । परदैवतस्याधिकरणभूत इत्यर्थः । अयमपि प्राप्तृत्वाद्वेदनीयः । यद्वा पुरुषान्न परं किञ्चिदित्युक्तः परमेश्वर एव । स एव ह्यधिदैवतं सर्वेषामपि देवानामधिष्ठानत्वात् । 'येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च; स्वाद्व- स्वादू विजानातीति, जिह्वाङ्गे गुरुलिङ्गं स्या'दित्यादिना च सकलेन्द्रियप्रेरक- तयाऽधिदैवतत्वेनाम्नातत्वाच्च । अधियज्ञो यज्ञस्वरूपोऽहमेवादिविष्णुरित्यर्थः । 'यज्ञो वै विष्णु'रिति श्रुतेः परमेश्वरस्तु यज्ञाधिपतिः । 'आवो राजानमध्वर'- स्येति तस्याध्वराधिपतित्वेनाम्नानात् । अत्र देह इति यज्ञस्य देवनिर्वर्त्यत्वाद्देह- समवायितया तदधिकरण इत्यर्थः ॥४॥

अथ प्रयाणकाले च कथं ज्ञेयोऽसीत्यस्य प्रश्नस्योत्तरमाह—

**अन्तकाले च मामेव स्मरन्मुक्त्वा कलेबरम् ।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥५॥**

अन्तकाल इति । यो भक्तोऽन्तकाले प्राणोत्क्रान्तिवेलायां, मां पर- मेश्वरमेव स्मरन्, कलेबरं शरीरं, मुक्त्वा प्रयाति । 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्प'द्येति श्रुतेः अर्चिरादिमार्गेण निर्गच्छति स मद्भावं परमेश्वर- परमसारूप्यं, याति प्राप्नोति । अत्रार्थे संशयो नास्तीत्यर्थः ॥५॥

**यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।**
**तं तमेवैति कौन्तेय! सदा तद्भावभावितः ॥६॥**

यमिति । यं यं देवतान्तरं तदितरं वा स्मरन् अन्तकाले शरीरं परि-

---

अन्तकाल इति । सारूप्यमिति । एतेन पारमेश्वरस्मरणं मोक्षो- पायः, परमेश्वरपरमसारूप्यमेव मोक्ष इति च सिद्धम् ॥५॥

त्यजति, तद्भावभावितः सार्वधिकभावनाविषयरूपयुक्तस्तादृशमेव जन्म समवाप्नोतीत्यर्थः ॥६॥

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥७॥

तस्मादिति । तस्माच्चरमसमयपारमेश्वरस्मरणस्यैव मुक्तिनिदानत्वेपि सार्वदिकपूर्वकालाभ्यस्तस्यैव चरमस्मृतेमूलत्वादित्यर्थः । सर्वेषु कालेषु मामनुस्मर ! परमेश्वरमनुचिन्तयन् , युध्य च परमेश्वराराधनबुद्ध्या स्वधर्मस्यावश्याचरणीयत्वेन युध्यस्व चेत्यर्थः । मयि परमेश्वरे अर्पिते मनो बुद्धिर्यस्य तथाभूतस्सन् मां परमेश्वरमेव, एष्यसि प्राप्स्यसि । अत्रार्थे संशयो नास्तीत्यर्थः ॥७॥

परमेश्वरप्राप्तेर्निरन्तरस्मरणमेव साधनमित्याह—

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थाऽनुचिन्तयन् ॥८॥

अभ्यासेति । अभ्यासयोगयुक्तेनाभ्यासस्सजातीयप्रत्ययप्रवाहस्स एव योगस्समाधिनिष्ठा, तत्सहितेन नान्यगामिना तदितरवस्तुविषयस्मृतिरहितेन चेतसा दिव्यं द्योतनस्वरूपं परमं पुरुषं परमेश्वरमनुचिन्तयन् भावयन् तत्परमेश्वरं याति प्राप्नोतीत्यर्थः ॥८॥

कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥९॥

कविमिति । कविमादिकविं 'ईशानस्सर्वविद्याना'मिति श्रुतेः, 'अष्टादशानां विद्यानामेतासां भिन्नवर्त्मनाम् । स एवादिकविस्साक्षाच्छूलणि'रिति श्रुतिरिति स्मरणाच्च । पुराणमनादिनिधनं, यद्वा पुरातनमपि नवमनुशासितारं प्रशासकमणोरणीयांसं 'तस्मात्परं नान्यदणीयसं'हीति श्रुतेः, सर्वस्य धातारं विधातारमित्यर्थः । अचिन्त्यरूपं चिन्तयितुमशक्यं सकलवस्तुविलक्षणं रूपं यस्य तथाविधं, आदित्यवर्णमादित्यस्येव सकलजगदवभासनसमर्थः प्रकाशो यस्य तं, तमसः प्रकृतेः परस्तात्स्थितं तं परमेश्वरं योऽनुस्मरेदित्युत्तरेणान्वयः ॥९॥

प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्स तं परं पुरुषमुपैति दिव्यम् ॥१०॥

प्रयाणकाल इति । प्रयाणकालेऽन्तकालेऽचलेन निश्चितेन मनसा भक्तियुक्तो योगबलेन योगशक्त्या भ्रुवोर्मध्ये सम्यक्सुषुम्नाद्वारेण प्राणवायुमावेश्य यः पूर्वश्लोकोक्तलक्षणं परमेश्वरमनुस्मरेत्स तं परं पुरुषं परमेश्वरमुपैति प्राप्नोतीत्यर्थः ॥१०॥

अथ ब्रह्माभ्यासो विधीयते—

यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥११॥

यदिति । 'सर्वे वेदा यत्पदमामनन्ती'त्यादिकठश्रुतिमनुवदति— यदक्षरमिति । यत्- 'एतस्य वाऽक्षरस्य प्रशासन' इत्यादिना वेदज्ञा अक्षरमिति वदन्ति, वीतरागा रागादिदोषविनिर्मुक्ता नियमितचित्ता योगिनो यद्विशन्ति यद्वेदितुमिच्छन्तः ब्रह्मचर्यं गुरुकुलवासमाचरन्ति, तत्पदं पद्यते प्राप्यते मुक्तैरिति ब्रह्म ते तव संग्रहेण संक्षेपेण वक्ष्यामीत्यर्थः ॥११॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥१२॥
ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥१३॥

सर्वद्वाराणीति । सर्वद्वाराणीन्द्रियाण्यखिलान्यपि संयम्य निरुध्य मनश्चित्तं हृदि निरुध्य संस्थाप्येत्यर्थः । प्राणं मूर्ध्नि भ्रुवोर्मध्ये वाऽऽधाय प्रवेश्य योगधारणामास्थितश्चित्तं निर्वृत्तिकं कृत्वा ओमित्येकाक्षरं प्रणवं ब्रह्मनामार्थयोरभेदात् । अत एव 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरस्तस्य वाचकः प्रणव' इति भगवान्पतञ्जलिः । उच्चैर्व्याहरन्नुच्चरन् यो देहं त्यजति स परमां निरतिशयां गतिं परमेश्वरसायुज्यरूपां प्रयाति प्राप्नोतीत्यर्थः ॥१३॥

अन्तकाल एवंविधा धारणा नित्याभ्यासवत एवेत्याह—

अनन्यचेतास्सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ ! नित्ययुक्तस्य योगिनः ॥१४॥

अनन्यचेता इति । न विद्यतेऽन्यत्र चेतो यस्य तथाविधः, यो मां परमेश्वरं नित्यशः प्रतिदिनं सततं दिवारात्रमपि स्मरति, नित्ययुक्तस्य परमेश्वरैकलग्नचित्तस्य तस्य योगिनो ध्यानयोगपरस्याहं परमेश्वरस्सुलभस्सुखेन लभ्यो नान्यस्येत्यर्थः ॥१४॥

परमेश्वरसायुज्यशालिनः पुनरावृत्तिर्नास्तीत्याह—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानस्संसिद्धिं परमां गताः ॥१५॥

मामिति । मां परमेश्वरं, उपेत्य प्राप्य, परमां संसिद्धिं सायुज्यं गताः प्राप्ताः, महात्मानो मुक्ताः, दुःखानामालयं स्थानभूतं पुनर्जन्म नाप्नुवन्ति 'न स पुनरावर्तत' इति श्रुतेरित्यर्थः ॥१५॥

तदन्येषां पुनरावृत्तिर्दुर्वारेत्याह—

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन !
मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते ॥१६॥

आब्रह्मेति । आब्रह्मभुवनात् ब्रह्मलोकपर्यन्तं लोकास्सर्वेऽपि पुनरावर्तिनः, तत्र तत्र गतानां पुनर्जन्म सिद्धमेव । मां परमेश्वरमुपेत्य प्राप्तानां तु पुनर्जन्म न विद्यत इत्यर्थः ॥१६॥

ब्रह्मलोकादीनां कालपरिच्छिन्नत्वेऽनित्यत्वमावेदयति—

सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥१७॥

सहस्रेति । अत्र सहस्रपदं चतुर्युगपरं 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यत' इति स्मरणात् । एवं च चतुर्युगसहस्रं ब्रह्मणो दिनं तावत्परिमाणैव रात्रिस्तादृशैरहोरात्रैः पक्षमासादिक्रमेण वर्षशतं ब्रह्मण परमायुरित्यर्थः ॥१७॥

अव्यक्ताद्व्यक्तयस्सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥१८॥

अव्यक्ता इति । घटस्य मृदिव कार्यस्य कारणात्कमं सूक्ष्मरूपमव्यक्तमित्युच्यते । तस्मादहरागमे ब्रह्मणो दिनारम्भे सर्वा व्यक्तयश्चराचराणि प्रभवन्ति प्रादुर्भवन्ति । तस्य रात्र्यागमे तु रजनीमुखेऽव्यक्तसंज्ञके; तत्रैव प्रलीयन्ते प्रलयं यान्तीत्यर्थः ॥१८॥

वैराग्यसिद्ध्यर्थं सृष्टिप्रलयप्रकारं दर्शयति—

भूतग्रामस्स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ ! प्रभवत्यहरागमे ॥१९॥

भूतग्राम इति । स यः प्रागासीत्स एव भूतग्रामः प्राणिजातमहरागमे उत्पद्य रात्र्यागमे विनश्यति । एवमवशः कर्मपराधीनः प्राणिगणः पुनःपुनरुत्पद्य विनश्यतीत्यर्थः ॥१९॥

परस्तस्मात्तु भावोऽन्यो व्यक्तोऽव्यक्तात्सनातनः ।
यस्स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥२०॥

पर इति । तस्मादव्यक्तात्परोऽतीतोऽन्यस्तद्विलक्षणोऽव्यक्तश्चक्षुराद्यगोचरः, भावः भव एव भावस्स्वार्थिकोऽण् । सनातनोऽनादिः, विद्यते सर्वेषु भूतेषु नश्यत्स्वपि न विनश्यति स इत्युत्तरत्रान्वयः ॥२०॥

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥२१॥

अव्यक्त इति । सोऽव्यक्त अतीन्द्रिय अक्षर इत्युच्यते- नाशरहितत्वात् । 'अथाक्षरात्सम्भवतीह विश्व'मित्यादिश्रुतिभिरिति भावः । तं परमेश्वरं परमप्राप्यमाहुः- 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गति'रित्यादिश्रुतय इति भावः । यं प्राप्य न निवर्तन्ते तत्परं धाम मम परमेश्वरस्यैवेत्यर्थः ॥

परमेश्वरस्य प्राप्तौ भक्तिरेव परमं साधनमित्याह—

पुरुषस्स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तस्स्थानि भूतानि येन सर्वमिदं ततम् ॥२२॥

पुरुष इति । स परः पुरुषः परमेश्वरोऽनन्यया 'अन्यथा शरणं नास्ति

त्वमेव शरणं म'मेत्येवंविधया भक्त्या तयैवेत्यर्थः । तं परमेश्वरं विशिनष्टि—यस्येति । भूतानि चराचराणि यस्यान्तस्स्थानि, सर्वमपीदं जगद्येन ततं व्याप्तं, सर्वजगदाधारभूतः सर्वव्यापकश्चेत्यर्थः ॥२२॥

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ! ॥२३॥

यत्रेति । यत्र यस्मिन्कालेऽत्र कालशब्दः कालाभिमान्यातिवाहिकदेवताप्राप्यमार्गपरः, तस्माद्यस्मिन्मार्गे प्रयाता योगिनो ध्यानयोगनिष्ठाः कर्मयोगनिष्ठाश्चानावृत्तिं पुनरावृत्तिं च यान्ति तं कालं मार्गं वक्ष्यामीत्यर्थः ॥२३॥

तत्रानावृत्तिमार्गमाह—

अग्निर्ज्योतिरहश्शुक्लष्षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥२४॥

अग्निरिति । अग्निर्ज्योति पदाभ्यामर्चिरभिमानिनी देवता लक्ष्यते अहरिति तदभिमानिनी च; शुक्ल इति शुक्लपक्षाभिमानिनी देवता उत्तरायणभूताष्षण्मासा इति उत्तरायणाभिमानिनी । इदमन्यासामर्चिरादिश्रुत्युक्तानां संवत्सरदेवलोकाद्यभिमानिदेवतानामुपलक्षकम् । एवमर्चिराद्यातिवाहिकदेवतोपलक्षितमार्गे प्रयाता ब्रह्मविदः परमेश्वरोपासकाः ब्रह्म परमेश्वरं गच्छन्ति, परमेश्वरसायुज्यमाप्नुवन्तीत्यर्थः ॥२४॥

पुनरावृत्तिमार्गमाह—

धूमो रात्रिस्तथा कृष्णष्षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥२५॥

धूम इति । धूमाभिमानिनी देवता । एवं रात्र्यादिशब्दैः रात्रि कृष्णपक्षदक्षिणायनाद्यभिमानिन्यो देवताश्च लक्ष्यन्ते । एतेन नत्रानुक्ताः पितुर्लोकाकाशादयश्च भवन्ति ग्राह्याः । एवं धूमाद्युपलक्षिते मार्गे प्रयाताः कर्मयोगिन

---

अग्निरिति । परमेश्वरसायुज्यमाप्नुवन्तीति । एते न पुनरावर्तन्त इति भावः । 'तेर्चिषमभिसम्भव'न्तीति श्रुत्यर्थोऽत्र स्मारितः ॥२४॥

इष्टापूर्तादिकारिणश्च चान्द्रमसं ज्योतिस्स्वर्गलोकं प्राप्य, तत्र यावत्सम्पातमुषित्वा पुनरावर्तन्त इत्यर्थः ॥२५॥

**शुक्लकृष्णे गती ह्येते जगतश्शाश्वती मते ।**
**एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥२६॥**

शुक्ल इति । शुक्लकृष्णे शुक्ला अर्चिरादिगतिः प्रकाशमयत्वात्, कृष्णा धूमादिगतिः तमोमयत्वादित्यर्थः । एते गती मार्गौ हि श्रुतिप्रसिद्धौ । जगतस्सर्वस्यापि शाश्वते अनादिभूताबित्यर्थः । तत्र एकया अर्चिरादिकया, अनावृत्तिं मुक्तिं याति । अनया धूमादिकया गतः पुनरावर्तते पुनर्जन्मवान्भवति । एताभ्यामन्या गतिर्नास्तीत्यर्थः ॥२६॥

**नैते सृती पार्थ! जानन् योगी मुह्यति कश्चन ।**
**तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन! ॥२७॥**

नेति । पार्थ! एते उक्ते सृती मार्गौ जानन् योगी ध्यानयोगनिष्ठो न मुह्यत्यनित्यं स्वर्गादिसुखं नाभिलषति; किं तु परमेश्वरनिष्ठ एव भवति । तस्मात्त्वं योगी सर्वेषु कालेषु योगयुक्तः परमेश्वरध्यानयोगनिष्ठो भवेत्यर्थः ॥

अध्यायार्थं ध्यानयोगं च स्तौति—

**वेदेषु यज्ञेषु तपस्सु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ।**
**अत्येति तत्सर्वमिदं विदित्वा योगी परं सर्वमुपैति चाद्यम् ॥२८॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेऽक्षरपरब्रह्मयोगो नामाष्टमोऽध्यायः ।**

वेदेष्विति । वेदेषु सम्यगधीतेषु यज्ञेषु तपस्सु च सम्यगनुष्ठितेषु

---

धूम इति । स्वर्गलोकमिति । 'ये धूममभिसम्भव'न्तीत्यादिश्रुत्यर्थोऽत्र स्मारितः ॥२५॥

शुक्ल इति । अन्या गतिर्नास्तीति । 'जायस्व म्रियस्वेत्येतत्तृतीयग्ँ स्थान'मित्यन्येषां जुगुप्सिता कीटादिजन्मरूपा अधोगतिरेवेति भावः ॥२६॥

दानेषु सर्वेष्वप्याचरितेष्वपि तत्पुण्यफलं प्रदिष्टं शास्त्रेषूपदिष्टं तदखिलमपीदं सर्वमध्यायोक्तार्थं विदित्वाऽत्येयत्यतिक्रामति । ततोऽप्यतिशयफलमाप्नोति; योगी ध्याननिष्ठ आद्यं पदं सर्वोत्तरं स्थानं पारमेश्वरमुपैतीत्यर्थः ॥२८॥

इति श्रीमज्जगद्गुरुश्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्य-
नीलकण्ठभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
अक्षरपरब्रह्मयोगो नामाष्टमोऽध्यायः ।

---

वेदेष्विति । सर्वोत्तरमिदं पारमेश्वरपदं सर्वोत्तरमिति भावः । अत एव- 'तद्विष्णोः परमं पद'मिति । अथोभयनिर्देशे पञ्चम्या बलीयस्त्वाद्विष्णोरपि परममित्याम्नातं सङ्गच्छते ॥२८॥

इति श्रीमल्लोकाराध्यशिवयोगिमहोपाध्यायनागलिङ्गशिवाराध्य-
कृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां
अक्षरपरब्रह्मयोगो नामाष्टमोऽध्यायः ।

---



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ।

एवमुपासने विशेषभूतौ कर्मयोगध्यानयोगौ प्रतिपादितौ । अथ उपास्यस्य परमेश्वरस्य माहात्म्यमुपासनस्य भक्तिरूपत्वं चोपदिश्यते—

श्रीभगवानुवाच—

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१॥

इदं त्विति । गुह्यतमं परमरहस्यं, ज्ञानमुपासनं, विज्ञानसहितं तदीयविशेषसहितमनसूयवे ते प्रवक्ष्यामीत्यर्थः ॥१॥

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥२॥

राजविद्येति । राजविद्या विद्यानां राजा सर्वविद्योत्तममित्यर्थः । राजगुह्यं गुह्यानां राजा अतिरहस्यमित्यर्थः । प्रत्यक्षावगमं परमेश्वरप्रत्यक्षनिदानमित्यर्थः । धर्म्यं धर्मादनपेतं, कर्तुं सुसुखमत्यन्तसुकरमित्यर्थः । अव्ययमक्षयं, ज्ञानमुपासनं वक्ष्यामीत्यर्थः ॥२॥

ननूपासनस्य सुकरत्वे के संसारान्धकूपे निपतेयुरित्याशङ्क्याह—

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप !
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥३॥

अश्रद्दधाना इति । अस्य भक्तियुक्तस्य धर्मस्योपासनस्याऽश्रद्दधानाः

तत्र श्रद्धारहिताः पुरुषा मां परमेश्वरमप्राप्य मृत्युसंसारवर्त्मनि मृत्युनिलये संसारवर्त्मनि संसारमहापथे निवर्तन्ते नितरां परिभ्रमन्तीत्यर्थः ॥३॥

परमेश्वरस्वरूपमुपदिशति मया ततमित्यादिना—

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥४॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥५॥

मयेति । नेति । अव्यक्तमूर्तिना अतीन्द्रियस्वरूपेण मया परमेश्वरेणेदं जगत्सर्वं ततं व्याप्तम् । 'तत्सृष्ट्वा तदेवानुप्राविश'दितिश्रुतेः । सर्वभूतानि सर्वाण्यपि प्राणिजातानि मत्स्थानि । 'अक्षरमम्बरान्तधृते'रिति परमेश्वरस्य सर्वाधारत्वात्तत्र तिष्ठन्तीत्यर्थः । अहं परमेश्वरः, तेषु भूतेषु नावस्थितश्च सर्वत्रान्तर्यामितया वर्तमानोपि न तदायत्तस्थितिरित्यर्थः । भूतानि मत्स्थान्यपि न भवन्ति । कुतः ? नहि घटादीनां जलाद्याधारत्वसदृशं परमेश्वरस्य सर्वाधारत्वं; किंतु स्वमहिमप्रतिष्ठितत्वमेवेत्यर्थः । मम परमेश्वरस्यैश्वर्यं कुत्राप्यसम्भावितमसाधारणं योगं युक्तिमघटितघटनापाटवमित्यर्थः । तदेवोपपादयति—भूतभृदपि भूतस्थो न भवतीत्यादिना । भूतानां भर्तापि देहे देहिवत्परमेश्वरो न भूतेषु वर्तत इत्यर्थः । तानि भावयति पालयतीत्यर्थः । 'एष भूतपतिरेष पालय'तीति श्रुतेरित्यर्थः ॥५॥

असंश्लिष्टयोरप्याधाराधेयभावं दृष्टान्तेनोपपादयति—

यथाकाशस्थितो नित्यं वायुस्सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥६॥

यथेति । नित्यमाकाशे स्थितो वायुस्सर्वगतोऽपि यथा चाकाशेन न संश्लिष्यते तथा सर्वाणि भूतानि परमेश्वरे स्थितानीति निश्चिन्वित्यर्थः ॥६॥

सर्वभूतानि कौन्तेय ! प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥७॥

सर्वभूतानीति । सर्वाणि भूतानि कल्पक्षये प्रलयकाले मामिकां पारमेश्वरीं प्रकृतिं यान्ति पारमेश्वरप्रकृतौ सूक्ष्मरूपेण लीयन्ते । अहं परमेश्वरः पुनः कल्पादौ सर्गारम्भे सृजतीत्यर्थः ॥७॥

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनःपुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥८॥

प्रकृतिमिति । अहं परमेश्वरः कृत्स्नमिमं भूतग्रामं प्राणिजालं स्वां प्रकृतिं मायामवलम्ब्य कर्मपरवशं तं पुनःपुनः सृजतीत्यर्थः ॥८॥

न च मां तानि कर्माणि निबध्नन्ति धनंजय !
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥९॥

नेति । तानि विषमसृष्टिरूपाणि कर्माणि मां परमेश्वरं न लिम्पन्ति, तन्मूलं वैषम्यनैर्घृण्यदोषमापादयन्ति । तत्र कारणमाह—उदासीनवदिति ॥

मयाध्यक्षेण प्रकृतिस्सूयते सचराचरम् ।
हेतुनानेन कौन्तेय ! जगद्विपरिवर्तते ॥१०॥

मयेति । अध्यक्षेण नियन्त्रा मया परमेश्वरेण सत्यसङ्कल्पेनेक्षतेति शेषः । प्रकृतिश्चराचरं जगत्सूयते सृजत्यनेन क्षेत्रज्ञकर्मानुगुणेन हेतुना ईक्षणेनैव जगद्विपरिवर्तते पुनःपुनर्जायत इत्यर्थः ॥१०॥

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥११॥

अवजानन्तीति । मम परमेश्वरस्य भूतमहेश्वरं सर्वेश्वरत्वरूपं परं भावमजानन्तो मूढा मानुषीं मनुष्यतुल्यकरचरणादियुतां तनुं त्रिलोचनं 'नीलकण्ठं प्रशान्त'मित्यादिश्रुतिसमधिगतं भक्तानुग्रहप्रावीण्यपरिगृहीतं तद्विग्रहमजानन्ति ।

---

नेति । उदासीनत्वे कर्तृत्वायोगात्कर्तृत्वोदासीनत्वायोगाच्च । उदासीनवदिति । एवं च सृष्टेः प्राणिपूर्वकर्ममूलत्वात्तन्निबन्धनं वैषम्यादिकमीश्वरं न स्पृशतीति भावः ॥९॥

मयेति । कर्मानुगुणेनेति । एतेन कर्तृत्वमुदासीनत्वं चाविरुद्धमित्याशयः ॥१०॥

अवजानन्तीति । यद्वेति । त्रिलोचनत्वादिविशिष्टपरमेश्वरविग्रहस्याप्राकृतत्वान्मानुषीं तनुमित्यसङ्गतमित्याशयेनार्थान्तरमाह—ममेत्यादि । ननु

साकारे तत्त्वनिरादरा वर्तन्त इत्यर्थः । यद्वा मम श्रीकृष्णावतारमूलरूपस्यादि-विष्णोः परमेश्वरशक्त्यंशत्वेनांशांशिनोरभेदात् , शक्तिशक्तिमतोरभेदाच्च तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायेन परमेश्वरगतं भूतमहेश्वरसर्वैश्वर्यस्वरूपं परं भावं पारम्यमजानन्तोऽत एव मूढा मानुषीं तनुं वसुदेवापत्यरूपामित्यर्थः ॥

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥१२॥

मोघाशा इति । राक्षसीं तामसीं हिंसाबहुलामासुरीं राजसीं काम-दर्पादिप्रचुरां मोहिनीं मोहशीलां प्रकृतिं स्वभावमाश्रिताः; ततो मोघाशा देव-तान्तरमाशु प्रसीदतेति निरर्थाशाः, मोघकर्माणो व्यर्थारम्भाः, मोघज्ञाना विप-रीतज्ञानशीलिनः, विचेतसः कुबुद्धयो मामवजानन्तीति पूर्वेणान्वयः ॥१२॥

---

यद्येवं पारमेश्वरं सर्वैश्वर्यमभेददृष्ट्या वासुदेव इष्यतेचेत्तर्ह्यहं सर्वस्य प्रभव इत्यादावस्मच्छब्दस्य शास्त्रदृष्टन्यायमवलम्ब्यान्तर्यामिपरत्वग्रहणेन पृथग्ग्रन्था-रम्भोऽनावश्यक इतिचेत्, उच्यते—अभेददृष्टिर्द्विविधा- अविवेकमूला, न्याय-मूलाचेति । तत्र या परैर्लोकवेदशास्त्रसिद्धं वस्तुभेदमपरिगृह्य केवलाद्वैताभिमान-वशादूरीक्रियते सा प्रथमा । अथ या शास्त्रसिद्धांशांशिनिबन्धनन्यायमूला सा भवति द्वितीया । तत्राद्याया लोकवेदशास्त्रविरुद्धत्वेनावद्यत्वान्न तयाऽर्थग्रहणं प्रामाणिकसम्मतम् । अथ द्वितीयामेवावलम्ब्यास्मच्छब्दस्य सर्वत्रापि वासुदेव-परत्वाभ्युपगमस्समुचितो न तस्यान्तर्यामिदृष्ट्या परमेश्वरपर्यन्तमर्थग्रहणं समुचित-मितिचेन्न, अविरुद्धत्वात् । तथाहि- अत्र मानुषीं तनुमिति वाक्यानुरोधा-न्न्यायसिद्धयाऽभेददृष्ट्याऽस्मच्छब्दस्य वासुदेवपरत्वग्रहणं समुचितम् ।

अथ अहं सर्वस्य प्रभव इत्यादौ तु- 'मायां तु प्रकृतिं विन्द्यान्मायिनं तु महेश्वर'मित्यादिबहुश्रुतिविरोधादस्मच्छब्दस्य शास्त्रदृष्ट्याऽन्तर्यामिभूतपरमेश्वरपरत्व-मेव समुचितम् । किंच परमेश्वरशक्त्यंशो नारायणे तदभिन्नाभिन्नतया पारमेश्वरं सर्वैश्वर्यं गौणमेव भवति, न मुख्यम् । एवं च- 'मुख्ये सम्भवति, गौणे न कार्यं सम्प्रत्यय' इति, तस्मा'न्मत्तः परतरं नान्य'दित्यादावस्मच्छब्दस्यान्तर्यामिपरत्व-मनिवार्यमित्यलमधिकेन ॥११॥

महात्मानस्तु मां पार्थ! दैवीं प्रकृतिमाश्रिताः ।
भजन्तेऽनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥१३॥

महात्मान इति । दैवीमभयमित्यादिवक्ष्यमाणलक्षणां प्रकृतिं स्वभावमाश्रिताः, महात्मानस्तु कामदर्पादिरहितास्सन्तो भूतादिमव्ययमनादिनिधनं मां परमेश्वरं ज्ञात्वाऽनन्यमनसः 'शिव एको ध्येयशिवङ्करस्सर्वमन्यत्परित्य'ज्येति श्रुतिमवलम्ब्य तदेकशरणा भजन्तीत्यर्थः ॥१३॥

भजनप्रकारमाह—

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥

सततमिति । सततं सर्वदा स्तोत्रादिभिः कीर्तयन्तो दृढव्रताः सोमवासरादिव्रतासक्ताः, नमस्यन्तः नमस्त इत्यादि श्रीरुद्राध्यायं जपन्तो नित्ययुक्ताः ध्यायन्तश्च भक्त्या इति सर्वत्रान्वयः । तद्रहितस्य सर्वस्यापि निष्फलत्वात् । मां परमेश्वरमुपासत इत्यर्थः ॥१४॥

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥१५॥

ज्ञानयज्ञेनेति । अन्ये महात्मानः विश्वतोमुखं ब्रह्मविष्ण्वादिरूपेण स्थितं सद्योजातादिभिस्सर्वतोमुखं च मां परमेश्वरमेकत्वेन शिवोऽहमित्यभेदभावनया, पृथक्त्वेन दासोऽहमिति भावनया च, ज्ञानयज्ञेन इष्टप्राणभावलिङ्गोपासनाज्ञानरूपेणार्चनेनोपासत इत्यर्थः ॥१५॥

परमेश्वरस्य सर्वात्मतां प्रपञ्चयेत्यहमित्यादिना—

अहं क्रतुरहं यज्ञस्स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥१६॥

अहमिति । क्रतुरग्निष्टोमादिः, यज्ञो ब्रह्मयज्ञादिः, स्वधा पितृभ्यो

---

ज्ञानयज्ञेनेति । शिवोऽहमितिभावनयेति । सर्वाङ्गलिङ्गसाहित्येन षट्स्थलोपासनयेति च भावः । एतत्सर्वं महालिङ्गजाबालादिषु शिवचिन्तामणिप्रभायां चाधिकं द्रष्टव्यम् ॥१५॥

दीयमानमन्नं, औषधं भेषजं, मन्त्रो याज्यादिः, आज्यं हविः, अग्निराहवनीयादिः, हुतं होमः, एवमुक्तं सर्वमहं परमेश्वर एवेत्यर्थः ॥१६॥

पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोङ्कार ऋक्साम यजुरेव च ॥१७॥

पितेति । अस्य जगतः पिता जनकः, माता जननी, धाता पोषयिता, पितामहः पितुः पिता, वेद्यं ज्ञेयं, पवित्रं शुद्धिहेतुः, ओङ्कारः प्रणवः, ऋग्वेदादयश्चाहं परमेश्वर एवेत्यर्थः ॥१७॥

गतिर्भर्ता प्रभुस्साक्षी निवासश्शरणं सुहृत् ।
प्रभवः प्रलयस्थानं निदानं बीजमव्ययम् ॥१८॥

गतिरिति । गतिर्गम्यस्थानं, भर्ता पोषकः, प्रभुर्नियन्ता, साक्षी शुभाशुभद्रष्टा, निवासो भोगस्थानं, शरणं रक्षकः, सुहृद्धितकारी, प्रभवस्स्रष्टा, प्रलयस्संहर्ता, स्थानमाधारः, निदानं शङ्खादिनिधिः, बीजं कारणं, अव्ययमनश्वरमेतदुक्तमखिलमहं परमेश्वर एवेत्यर्थः ॥१८॥

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ! ॥१९॥

तपामीति । अहं परमेश्वर एव; आदित्यात्मना तपति, मेघरूपेण वर्षं विसृजति च । अमृतं जीवनं, मृत्युर्नाशः, सत् सत्यं, असदसत्यमेतत्सर्वं परमेश्वर एवेत्यर्थः ॥१९॥

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान् ॥

त्रैविद्येति । त्रैविद्याः वेदत्रयविदः, यज्ञैरग्निष्टोमादिभिः, मां परमेश्वरमेव इन्द्रादिबुद्ध्या, इष्ट्वा सम्पूज्य, सोमपाः यज्ञशेषभूतसोमपायिनस्सन्तः, पूतपापाः निर्धूतपातकाः, स्वर्गतिं स्वर्गप्राप्तिं, ये प्रार्थयन्ते ते पुण्यं तत्फलभूतं, सुरेन्द्रलोकं स्वर्गमासाद्य, दिवि तत्र, दिव्यान् देवयोग्यान् देवानां भोगानश्नन्तीत्यर्थः ॥२०॥

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥२१॥

त इति । ते स्वर्गकामाः, तमीप्सितं, विशालं विततम् । स्वर्गलोकं तत्रत्यसुखं भुक्त्वा, तन्मूलभूते पुण्ये क्षीणेसति पुनर्जन्मने मर्त्यलोकं विशन्ति प्रविशन्ति । एवं त्रयीधर्मवेदविहितकाम्यकर्मजातमनुप्रपन्नाः प्रतिपन्नाः, कामकामाः स्वर्गभोगासक्ताः, गतं चागतं च गतागतं यातायातं लभन्त इत्यर्थः ॥

परमेश्वरभक्तास्तु तत्प्रसादेन कृतार्था भवन्तीत्याह—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥२२॥

अनन्या इति । नास्ति परमेश्वरव्यतिरेकेण प्रार्थ्यमन्यत् येषां तथाभूता ये भक्ता मां परमेश्वरं चिन्तयन्तः पर्युपासते सेवन्ते, नित्याभियुक्तानां सदा परमेश्वरनिष्ठानां तेषां भक्तानां योगक्षेमं योगमप्राप्तस्य प्रापणं क्षेमं तत्पालनं चाहं परमेश्वरः करोतीत्यर्थः ॥२२॥

ननु परमेश्वरस्यैव सर्वकर्माराध्यतया सर्वकर्मफलप्रदतया च सर्वेषामप्यविशेषे सिद्धे, देवतान्तरभक्तानां कुतो गतागतमित्याशङ्क्याह—

येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वकम् ॥२३॥

येपीति । श्रद्धयोपेता ये भक्ता अन्यदेवता यजन्ते तेपि मां परमेश्वरमेवाऽविधिपूर्वकमज्ञानेन यजन्त इत्यर्थः ॥२३॥

---

त इति । यातायातमिति । कर्म कृत्वा स्वर्गं यान्ति; तत आगत्य पुनः कर्म कुर्वन्तीत्येवं जनित्वा मृत्वा च सततं परिवर्तन्त इत्याशयः ॥२१॥

अनन्या इति । परमेश्वरः करोतीति । ननु परमेश्वरस्सर्वेषामपि योगक्षेमं वहति; अथ भक्तानां वहतीत्यत्र को विशेष इतिचेत्, यद्यपि तत्सत्यमेव, तथापीश्वरोऽन्येषां तद्विषये प्रयत्नमुत्पाद्य निर्वहति । भक्तानां तु तमनपेक्ष्यैवेति विशेषो द्रष्टव्यः ॥२२॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
नतु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥२४॥

अहमिति । सर्वेषामपि यज्ञानां भोक्ता तत्तद्देवतान्तर्यामितया अहं परमेश्वर एव- 'अयं सोमः कपर्दिन' इत्यादिश्रुतेरित्यर्थः । प्रभुरेव च- 'आवो राजानमध्वरस्य रुद्र'मित्यादिश्रुतेश्चेत्यर्थः । महेन्द्रादियाजिनो मां परमेश्वरं तत्त्वेन सर्वयज्ञाराध्य इति, सर्वकर्मफलप्रद इति च नाऽभिजानन्ति न विन्दन्ति, अतस्तस्मात्ते च्यवन्ति मोक्षपदाद्भ्रष्टा भवन्तीत्यर्थः ॥२४॥

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोपि माम् ॥२५॥

यान्तीति । देवेष्विन्द्रादिषु व्रतं नियमो येषां ते देवानिन्द्रादीन्यान्ति प्राप्नुवन्ति; पितृष्वग्निष्वात्तादिषु व्रतं श्राद्धादिनियमो येषां ते पितॄन्यान्ति; भूतेज्या वेतालाद्युपासकास्तदुपास्यानेव यान्ति; मद्याजिनः परमेश्वरोपासकास्तु मां परमेश्वरमेव यान्तीत्यर्थः ॥२५॥

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥२६॥

पत्रमिति । पत्रं बिल्वादि, द्रोणादि पुष्पं वा यो भक्तो मे परमेश्वराय भक्त्या प्रयच्छति भक्त्या दत्तं प्रयतात्मनश्शुद्धचित्तस्य तदल्पमप्यहं परमेश्वरो वात्सल्येन परिगृह्णातीत्यर्थः ॥२६॥

---

येपीति । अज्ञानेनेति । परमेश्वरे परिपूजिते मोक्षं ददातीत्यविज्ञाय, यतस्स्वर्गकामनया महेन्द्रादीन्यजन्ते; ततो गतागतं लभन्त इति भावः ॥२३॥

यान्तीति । परमेश्वरमेव यान्तीति । यथा देवादियाजिनो देवादीन्यान्ति; तथैव परमेश्वरयाजिनः परमेश्वरं; कोऽत्र विशेष इति चेदिदमत्र तत्त्वम्—परमेश्वरप्राप्तेः 'सह ब्रह्मणा विपश्चि'तेति श्रुतेस्तत्सायुज्यरूपतयाऽनावृत्तिफलत्वाद्देवतान्तरप्राप्तेर्यातायातफलत्वेन च महद्वैषम्यमिति ॥२५॥

पत्रमिति । भक्त्येति । अत्र भक्त्या प्रयच्छति भक्त्युपहृतमिति च

एवं परमेश्वरप्राप्तेः भक्तियोग एव परमोपायभूत इत्युक्त्वा, तस्य परमावधिभूतमर्पणसद्भावं विदधाति—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥२७॥

यत्करोषीति । स्वतश्शास्त्रतो वा यत्कर्म करोषि, यद्भोज्यमश्नासि, यतो ह्व्यं जुहोषि, यतो हिरण्यमन्नं वा ददासि, यत्तपस्यसि कृच्छ्रादिकमाचरसि तत्सर्वमपि मदर्पणं परमेश्वरार्पितं कुरुष्व विधेहि । अत्र यद्भोज्यमश्नासीत्यनेन तत्तत्कर्मद्वारा अनुभूयमानाश्शब्दादयो विषयास्सर्वेऽपि गृह्यन्ते । एवं नित्यमनुष्ठीयमानानां सर्वेषां कर्मणामपि परमेश्वरार्पणेनैषां सुकृतदुष्कृतरूपं पुनर्जन्मांकुरत्वं भस्मीभूय परमेश्वराज्ञानुलेपनद्वारा परमेश्वरपरमप्रसादहेतुतया परमेश्वरसायुज्यरूपपरममुक्तिनिदानत्वमेव सम्पद्यत इत्याशयः ॥२७॥

---

भक्तिपदमभ्यस्तं, तेन प्रदातुः प्रदत्तस्य वा गौरवमनिमित्तं; किंतु निरतिशया भक्तिरेव निमित्तं परमेश्वरप्रसादस्येति सिद्धम् । एतेन 'नान्यः पन्थाऽयनाय विद्यत' इति, 'प्राचीनयोग्योपा'स्वेति च विहितं ज्ञानमुपासनमपि भक्तावेव पर्यवस्यतीति निष्पन्नम् ॥२६॥

यत्करोषीति । शब्दादयो विषया अपीति । एतेन शब्दादीनामशेषाणां विषयाणां बुद्धिपूर्वकमनुभूयमानानामपि परमेश्वरार्पणद्वारा सार्वदिकपारमेश्वरभावानुसन्धानसाधकं सर्वाङ्गलिङ्गसाहित्यमपि द्योतितम् । तद्यथा— 'हृदयाङ्गे महालिङ्गं श्रोत्राङ्गे तु प्रसादकम् । त्वगङ्गे चरलिङ्गं तु दृगङ्गे शिवलिङ्गकम् ॥ जिह्वाङ्गे गुरुलिङ्गं तु नासिकाङ्गे तथैव हि । आचारलिङ्गमश्रान्तं सुप्रतिष्ठितमेव हि ॥ यथा ज्ञानेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठितम् । तथा कर्मेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठित'मित्यादिना शिवागमे । एतेन भक्तियोगमपहाय न किमपि मुक्तिसाधनमिति व्यक्तम् ॥२७॥

अर्पणसद्भावस्य फलमाह—

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥२८॥

शुभेति । एवमाचरसिचेच्छुभाशुभफलैस्सुखदुःखप्रदैः कर्मबन्धनैः कर्मरूपैः पाशैर्मोक्ष्यसे विमुक्तो भविष्यसि । सन्न्यासयोगयुक्तात्मा- सन्न्यासः परमेश्वराय सर्वकर्मार्पणरूपस्स एव योगस्तेन शुद्धचित्तस्सन् मुक्तो बन्धविमुक्तो मां परमेश्वरमुपैष्यसि प्राप्स्यसीत्यर्थः ॥२८॥

परमेश्वरो यदि मुक्तिं भक्तेभ्य एव ददाति, ननु तदितरेभ्यस्तर्हि तस्य वैषम्यदोष आपद्येतेत्याशङ्क्याह—

समोऽहं सर्वभूतेषु न मे द्वेष्योस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥२९॥

समोऽहमिति । अहं परमेश्वरस्सर्वभूतेषु समः, मे तस्य प्रियो द्वेष्यश्च न विद्यते । ये जना मां परमेश्वरं भक्त्या भजन्ति सेवन्ते ते भक्ताः परमेश्वरे वर्तन्ते, परमेश्वरस्तेषु स्वभावत एव वर्तत इत्यर्थः ॥२९॥

भक्तेर्महिमानमेवाह—

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यस्सम्यग्व्यवसितो हि सः ॥३०॥

अपीति । सुतरां दुष्टचरितोपि यो नरोऽनन्यभाक् परमेश्वरैकनिरतस्सन् परमेश्वरं सेवते चेत् स श्रेष्ठ इत्येव भावनीयः । हि यस्मात्स सम्यग्व्यवसितः प्रशंसनीयसदुद्यमवानित्यर्थः ॥३०॥

---

सम इति । स्वभावत इति । ननु रागत इत्यर्थः । अत्रेदमाकूतम्—यथाऽग्निस्स्वसेवकानामेव तमश्शीतभवं दुःखमपनुदति; यथा च कल्पतरुरर्थिनामेवेप्सितं पूरयति, तथैव परमेश्वरोऽपि । तस्मादग्न्यादेरिव भक्तपक्षपातिनोऽपि न परमेश्वरस्य वैषम्यमथायं भक्तेरेव महिमेति ॥२९॥

भक्तस्य श्रैष्ठ्ये कारणमाह—

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय! प्रतिजानीहि न मे भक्तः प्रणश्यति ॥३१॥

क्षिप्रमिति । दुराचारोपि भक्तिमहिम्ना क्षिप्रं शीघ्रमेव धर्मात्मा भवति, स्थिरां परमेश्वरनिष्ठामधिगच्छति । कौन्तेय! मे परमेश्वरस्य भक्तः न प्रणश्यति नष्टो न भवति । किंतु कृतार्थ एव भवतीति प्रतिजानीहि प्रतिज्ञां कुरु ॥३१॥

मां हि पार्थ! व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेपि यान्ति परां गतिम् ॥३२॥

मामिति । मां परमेश्वरं व्यपाश्रित्य शरणमागत्य, स्त्रियो वैश्याश्शूद्रा वेदेऽनधिकृताः पापयोनयोऽन्त्यजातयश्च परां गतिं मुक्तिमाप्नुवन्ति ॥३२॥

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥३३॥

किमिति । एवंसति पुण्यास्सदाचारपरा ब्राह्मणा राजर्षयश्च भक्ता मुक्तिमाप्नुवन्तीति किंपुनर्वक्तव्यम् । तस्मात्त्वमनित्यमस्थिरमसुखं दुःखबहुलमिमं परमपुरुषार्थसाधनयोग्यमतिदुर्लभं च लोकं मानवशरीरं प्राप्य प्राप्तोऽसि, तत्साफल्याय मां परमेश्वरं भजस्व शरणीकुर्वित्यर्थः ॥३३॥

भजनप्रकारमेवाह—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥३४॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ।

---

क्षिप्रमिति । प्रतिज्ञां कुर्विति । एतेनास्याः प्रतिज्ञायास्त्रैलोक्ये कुत्रापि नापजय इति भावः ॥३१॥

किमिति । तस्मादिति । परमेश्वरभक्तेरवन्ध्यफलत्वादित्यर्थः ॥३३॥

मन्मना इति । मन्मनाः परमेश्वरसमर्पितचित्तो भव; परमेश्वरैकभक्तो भव; मद्याजी शिवैकपूजानिरतो भव । आत्मानं मनो युक्त्वा समाधाय मत्परायणः परमेश्वरध्यानपरो मां परमेश्वरमेव नमस्कुरु। एवमाचरसि चेत् मां परमेश्वरं एष्यसि प्राप्स्यसि । शिवसायुज्यरूपपरममुक्तिमाप्स्यसीत्यर्थः ॥३४॥

इति श्रीमज्जगद्गुरुश्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्य-
नीलकण्ठभगवत्पादाराध्यकृतौ श्रीमद्भगवद्गीताभाष्ये
राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ।

---

मन्मना इति । शिवपूजानिरतो भवेति । अथ येऽत्रास्मच्छब्दस्य वासुदेवपरत्वमभिमन्वते ते तदनन्तरग्रन्थेन पराहन्यन्ते । द्रोणादिपर्वसु पार्थस्य शिवपूजापरत्वेन वक्तव्यत्वात् । अथ तदुपदिष्टार्थेऽनादरो वा पार्थस्य तैरेष्टव्यः। अपि च मामेवैष्यसीति वाक्येन वासुदेवप्राप्तिं प्रति तैः पार्थस्य पैशाचीतनुरभ्यर्थनीया, तदानीं तेन सहैव वर्तमानतया परत्रान्यथा तदनुपपत्तेश्चेति । तस्मात्परकीयाणि विवरणान्यापातरमणीयान्येवेति दिक् ॥३४॥

इति श्रीमल्लोकाराध्यशिवयोगिमहोपाध्यायनागलिङ्गशिवाराध्य-
कृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां राज-
विद्याराजगुह्ययोगो नाम नवमोऽध्यायः ।

---



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## विभूतियोगो नाम दशमोऽध्यायः ।

सप्तमादौ परमेश्वरस्य विभूतयस्संक्षेपेणोक्ताः, भक्तियोगश्च निरूपितः, सर्वत्र पारमेश्वरभावानुसन्धानाय दशमे ता विभूतयो विस्तरेण निगद्यन्ते—

श्रीभगवानुवाच—

भूय एव महाबाहो ! शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥१॥

भूय एवेति । हे महाबाहो ! ते हितप्राप्त्यै इतोपि वक्ष्यामि मम वचश्शृणिवत्यर्थः ॥१॥

न मे विदुस्सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥२॥

नेति । सुरगणा महर्षयश्च मे परमेश्वरस्य प्रभवं न विदुः । अहं परमेश्वरो देवानां महर्षीणां च सर्वशो जनकत्वेन सर्वेन्द्रियप्रेरकत्वेन चादिकारणभूत इत्यर्थः ॥२॥

---

नेति, सर्वेन्द्रियप्रेरकत्वेनेति। 'धियो यो नः प्रचोदयात्', 'केनेषित'-मित्यादिश्रुतिभिः परमेश्वरस्य बुद्ध्यादिप्रेरकत्वश्रवणात्तत्प्रसादं विना न कोपि परमेश्वरं जानातीति भावः । अत एव 'नह्यलब्धप्रसादस्य भक्तिर्भवति शङ्कर' इति स्मरन्ति ॥२॥

योो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असम्मूढस्स मर्त्येषु सर्वपापैः प्रमुच्यते ॥३॥

य इति । यो मां परमेश्वरमजं जनिमृतिरहितमत एवानादिमनादिनिधनं लोकानामखिलानामपि महेश्वरमीश्वरेश्वरं 'तमीश्वराणां परमं महेश्वर'मिति श्रुतेस्सर्वेश्वरमित्यर्थः । एवम्भूतं वेत्ति मर्त्येष्वसम्मूढस्सम्मोहरहितस्स सर्वैः पापैः प्रमुच्यत इत्यर्थः ॥३॥

बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमश्शमः ।
सुखं दुःखं भवो भावो भयं चाभयमेव च ॥४॥

बुद्धिरिति । बुद्धिर्युक्तायुक्तविवेकः । ज्ञानं पतिपशुपाशरूपतत्त्वत्रयविषयम् । असम्मोहोऽव्याकुलता । क्षमा सहिष्णुता । सत्यं यथार्थभाषणम् । दमो बाह्येन्द्रियनिग्रहः । शमोऽन्तरिन्द्रियनिरोधः । सुखमाह्लादः । दुःखं सन्तापः । भव उत्पत्तिः । अभावोऽसत्ता । भयं त्रासः । अभयं तदभावः । एते मत्तः परमेश्वरादेव भवन्तीत्युत्तरेणान्वयः ॥४॥

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥५॥

अहिंसेति । अहिंसा परपीडानिवृत्तिः, समता रागादिराहित्यं, तुष्टिर्भोग्येष्वलंबुद्धिः, तपो वक्ष्यमाणं, दानं सत्पात्रेऽर्थानामर्पणं, यशस्सत्कीर्तिः । एते पूर्वश्लोकोक्ता बुद्ध्यादयश्च नानाविधा प्राणिनां भावाः कार्यविशेषा मत्तः परमेश्वरादेव भवन्तीत्यर्थः ॥५॥

---

य इति । सर्वैरिति । ज्ञानाज्ञानकृतैरित्यर्थः ॥३॥

अहिंसेति । परमेश्वरादेवेति । 'एष ह्येव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषते एष ह्येवाऽसाधु कर्म कारयति यमधो निनीष'तीति श्रुतेस्तत्तत्प्राणिपुराकृतकर्मसापेक्षात्परमेश्वरादेव प्राणिनां सदसद्भावा भवन्तीत्याशयः ॥५॥

महर्षयस्सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥६॥

महर्षय इति । पूर्वे महर्षयस्सप्त भृग्वादयः, चत्वारस्सनकादयश्च, मनवस्स्वायम्भुवादयः; मद्भावाः पारमेश्वरमहिमान्विता मानसाः परमेश्वरस्य सङ्कल्पमात्राज्जाता लोके स्थिता इमाः प्रजा एषां मनूनां महर्षीणां च सन्ततिरित्यर्थः ॥

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नाऽत्र संशयः ॥७॥

एतामिति । मम परमेश्वरस्य एतामुक्तलक्षणां विभूतिमैश्वर्यं योगमनन्तशक्तिं च तत्त्वतो यथावद्वेत्ति सोऽविकम्पेन निश्चलया भक्त्या युज्यते युक्तो भवति । अत्रार्थे संशयो नास्तीत्यर्थः ॥७॥

अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥८॥

अहमिति । अहं परमेश्वरस्सर्वस्य जगतः प्रभव उत्पत्तिकारणम् । सर्वं सकलमपि मत्तः परमेश्वरात्प्रवर्तते सर्वशक्तिना तेन प्रेर्यमाणं चेष्टत इत्येवं मत्वा भावसमन्विता भक्तियुक्ता बुधा विवेकिनो मां परमेश्वरं भजन्ते सेवन्त इत्यर्थः ॥

भजनप्रकारमेवाह—

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥९॥

मच्चित्ता इति । मयि परमेश्वरे स्थितं चित्तं येषां ते तथोक्ताः, भावलिङ्गोपासनापरा इत्यर्थः । मद्गतप्राणाः परमेश्वरलग्नप्राणाः; प्राणलिङ्गोपासका इत्यर्थः । एवंविधास्सन्तश्शिवभक्ता भक्तिवैभवं मां परमेश्वरतत्त्वं चान्योन्यं बोधयन्तः कथयन्तः कीर्तयन्तश्च क्रीडन्त इत्यर्थः ॥९॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०॥

तेषामिति । एवं सततं प्रीतिपूर्वकं निर्व्याजभक्त्या सेवमानानां तेषामहं परमेश्वरो बुद्धियोगं तत्स्वरूपसाक्षात्कारमनुगृह्णाति । येनैव भक्ता मां परमेश्वरमुपयान्ति सायुज्यमुक्तिमाप्नुयुरित्यर्थः ॥१०॥

परमेश्वरो भक्तानामेव स्वसाक्षात्कारं ददातीत्याह—

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥११॥

तेषामिति । अहं परमेश्वर आत्मभावस्थस्स्वचित्तवर्त्येव सन् तेषां भक्तानामेवानुकम्पार्थमनुग्रहार्थं तान् संसारसागरादुद्धर्तुमित्यर्थः । भास्वता विद्योतमानेन दीपेन प्रदीपसन्निभेन स्वसाक्षात्काररूपेणापरोक्षज्ञानेन तमः स्वसन्दर्शनप्रतिबन्धभूतं मायावरणं नाशयामि निवर्तयतीत्यर्थः ॥११॥

संग्रहेणोक्ताः परमेश्वरस्य विभूतीर्विस्तरेण जिज्ञासुरर्जुनस्तुवन् पप्रच्छ परं ब्रह्मेत्यादिभिस्सप्तभिः—

अर्जुन उवाच—

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१२॥

परमिति । भवान् परमेश्वरः परं ब्रह्म परं धामेत्यादिना पुरुषमित्यादेरुत्तरेणान्वयः ॥१२॥

---

तेषामिति । प्रदीपसन्निभेनेति । अत एव मोक्षधर्मपर्वणि एकविंशत्यधिकत्रिशततमेऽध्याये एवं हि परिसङ्ख्याय 'ततो ध्यायन्ति केवल'मिति ध्यानयोगं प्रस्तुत्य 'स्वयुक्तः पश्यते ब्रह्म यत्तत्परममव्ययं । महतस्तमसो मध्ये स्थितं ज्वलनसन्निभ'मिति, 'ततस्तु तं पश्यते निष्कलं ध्यायमान' इति, 'निदिध्यासितव्य' इति च विहितपरमेश्वरसाक्षात्कारपरमसाधनभूतध्यानयोगसाक्षात्कृतस्य परमेश्वरस्य प्रदीपप्रतिमत्वं स्मृतम् । स्वसन्दर्शनप्रतिबन्धभूतमिति । एतेन साधकस्य मायावरणापगमेन सत्यसङ्कल्पत्वादिविशिष्टस्वस्वरूपाविर्भावाद्यपि तदैव मुक्तता सम्भावनीया, तथापि स्वस्वरूपाभिनिष्पत्तेः- 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यत' इति श्रुतिप्रामाण्यात्परं ज्योतिरुपसम्पत्तेः परस्तादेवेत्यवगम्यमानतया पुरस्तात् हार्दब्रह्मसाक्षात्कारेण निवर्त्यमानं मायावरणं परमेश्वरसाक्षात्कारप्रतिबन्धकभूतमेवेति फलितम् ॥११॥

परं ब्रह्मेति । अत्राहं सर्वस्य प्रभव इत्यादिना वक्तुरस्मच्छब्दस्या-

आहुस्त्वामृषयस्सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासस्स्वयं चैव ब्रवीषि मे ॥१३॥

आहुरिति । सर्वे ऋषयो देवर्षिर्नारदो व्यासादयः परमेश्वरं पुरुषं 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति'रित्यादिश्रुतिभिर्निगदितं परमपुरुषं शाश्वतं नित्यमादिदेवमजमनादिं विभुम् । 'तस्मात्सर्वगतश्शिव' इत्यादिश्रुत्या सर्वगतं सर्वे ऋषय आहुः । त्वमप्यमुमेवार्थमाहेत्यर्थः ॥१३॥

सर्वमेतदृतं मन्ये यन्मां वदसि केशव !
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥१४॥

सर्वमिति । हेकेव ! त्वमपि तदेव ब्रवीषि । तस्मादेतत्सर्वं यथार्थमेव विश्वसिमि, देवा दानवाश्च ते परमेश्वरस्य व्यक्तिं प्रभवं न विदुरित्यर्थः ॥

स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम !
भूतभावन ! भूतेश ! देवदेव ! जगत्पते ! ॥१५॥

स्वयमिति । हे पुरुषोत्तम ! स्वयं त्वमेवात्मानं परमात्मभूतं परमेश्वरं वेद श्रु- 'वेदाहमेतं पुरुषं महान्त'मिति भवदृष्टे नारायणे भवदुक्तेः, 'एक एव महाविष्णुश्शिवज्ञानमहोदधि'रिति स्मृतेश्चेत्यर्थः ॥१५॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१६॥

वक्तुमिति । तस्माद्दिव्या अत्यद्भुता आत्मनः परमेश्वरस्य तास्सर्वा विभूतयो वक्तुमर्हसीत्यर्थः ॥१६॥

कथं विद्यामहं योगिन् त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥१७॥

कथमिति । योगिन् हे शिवयोगीश्वर ! अहं कथं परिचिन्तयन्भावयन् त्वां परमेश्वरं विजानीयाम् । परमेश्वरः केषुकेषु भावेषु तद्विभूतिभूतेषु वस्तुषु भावनीयो भवति, तद्विस्तरेण कथयेत्युत्तरेणान्वयः ॥१७॥

---

न्वर्यामिहष्टया प्रयुज्यमानत्वेन तदनुरोधेन भवच्छब्दस्य परमेश्वरपरत्वात् । यद्वा 'गुरुस्साक्षात्परं ब्र'ह्मेति न्यायेन परब्रह्मत्वाद्देवर्षेः स्तुतिरिति भावः ॥१२॥

विस्तरेणात्मनो योगो विभूतिं च जनार्दन !
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१८॥

विस्तरेणेति । हे जनार्दन ! आत्मनस्सर्वान्तर्यामितया परमात्मभूतस्य परमेश्वरस्य योगमनन्तशक्तिं विभूतिमैश्वर्यं च विस्तरेण सविस्तरं वक्तुमर्हसि । यतोऽमृतं परमेश्वरतत्त्वं शृण्वतो मम तृप्तिर्नास्ति; तस्मात्सविस्तरं ब्रूहीत्यर्थः ॥

श्रीभगवानुवाच—

हन्त ! ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ ! नास्त्यन्तो विस्तरस्य मे ॥१९॥

हन्त इति । दिव्या आत्मनः परमेश्वरस्य विभूतेः प्राधान्येन प्रधानभूता इत्यर्थः । कथयिष्यामि विस्तरस्य तु अन्तो नास्ति । तस्माद्विस्तरेण वक्तुमशक्यमिति भावः ॥१९॥

---

विस्तरेणेति । परमेश्वरतत्त्वमिति । श्रु- 'अमृतस्य ह वा नामधेया'-नीत्यादौ परमेश्वरस्यामृतपदाभिधेयत्वाम्नानादिति भावः ।

ननु पार्थस्य प्रश्नवाक्ये युष्मच्छब्दस्य वासुदेवपरत्वमुचितं, न तु परमेश्वरपरत्वमिति चेन्न, ततः पुरस्ताद्वासुदेवप्रयुक्तस्यास्मच्छब्दस्यान्तर्यामिपरतया प्रयुक्तत्वेन तदनुरोधेन पार्थप्रयुक्तयुष्मच्छब्दस्य परमेश्वरपरत्वस्यैव समुचितत्वादन्यथा पुरस्ताद्भगवदुक्तार्थेन परमेश्वरविषयसर्वकारणत्वादिना विरोधस्य दुरुद्धरत्वात् ।

अत एव सू- 'न वक्तुरात्मोपदेशादिति चेन्नाध्यात्मसम्बन्धभूमा ह्यस्मि'-न्नितीन्द्रप्रतर्दनाधिकरणे मामुपास्वेत्यादीन्द्रवाक्यानां परमेश्वरपरत्वं राद्धान्तितमिति विदितमेव ।

किंच- अत्रोक्तानां परब्रह्मत्वादीनां वासुदेवातिरिक्तपरमेश्वरविषयत्वस्य शिवविषयध्यानारूढत्वबोधकेन योगिन्निति विशेषणेन पार्थप्रयुक्तेनैव संसूचितमिति दिक् ॥१८॥

आदौ सर्वैश्वर्यमाह —

अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥२०॥

अहमिति । गुडाकेश गुडाकारकेशशालिन्! सर्वभूताशयस्थितः सकलप्राणिनां हृदयेषु प्रेरकतया स्थित आत्माऽहं परमेश्वरः । 'भर्गो देवस्य धीमहि धियो यो नः प्रचोदया'दिति श्रुतेरित्यर्थः । भूतानां चेतनानां आदिरुत्पत्तिकारणं, मध्यं स्थितिकारणं, अन्तः लयकारणं चाहं परमेश्वर एव ॥२०॥

परमेश्वरस्य विभूतीराह—

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥२१॥

आदित्यानामिति । आदित्यानां द्वादशानां मध्ये विष्णुर्विष्णुनामाऽहं परमेश्वरः, ज्योतिषां प्रकाशकानां मध्ये रविस्सूर्यः, मरुतां पवनानां मरीचिर्मरीचिनामा, नक्षत्राणां मध्ये शशी चन्द्रोऽहं परमेश्वर इत्यर्थः ॥२१॥

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतनः ॥२२॥

वेदानामिति । वेदानामपि चतुर्णां मध्ये सामवेदो गानमधुरिम्णा श्रव्यसारत्वादित्यर्थः । देवानां मध्ये वासव इन्द्रस्तदधीशत्वात् । इन्द्रियाणां मध्ये मनस्तत्प्रवर्तकत्वात । भूतानां चेतनावतां या चेतना साऽप्यहं परमेश्वर एवेत्यर्थः ॥२२॥

रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुश्शिखरिणामहम् ॥२३॥

रुद्राणामिति । रुद्राणामेकादशानां मध्ये शङ्करोऽस्मि । परमेश्वरोऽत्र

---

अहमिति । परमेश्वर एवेति, सर्वान्तर्यामीति, सर्वकारणमिति च; परमेश्वरो ध्येय इति भावः । अत्र येऽस्मच्छब्दं वासुदेवपरमभिमन्वते ते- 'यस्य पृथिवी शरीर'मित्यादिना सर्वान्तर्यामित्वप्रतिपादकेनाष्टमूर्त्यसाधारणेनान्तर्यामिब्राह्मणेन 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठ'तीत्युत्तरग्रन्थेन च पराहन्यन्ते ॥

परमेश्वरस्य मूर्तित्रयादप्यतीतत्वेन तद्विभूतित्वं शङ्करस्याविरुद्धम् । यक्षरक्षसां यक्षाणां रक्षसां च मध्ये वित्तेशः कुबेरस्तदधिपतित्वात् । वसूनामष्टानां मध्ये पावकस्तदाख्यः । शिखरिणां पर्वतानां मध्ये मेरुः सुमेरू रत्नसानुत्वादहं परमेश्वर एवेत्यर्थः ॥२३॥

पुरोधसां च मुख्यं मां विद्धि पार्थ! बृहस्पतिम् ।
सेनानीनामहं स्कन्दस्सरसामस्मि सागरः ॥२४॥

पुरोधसामिति । पुरोधसां पुरोहितानां मध्ये बृहस्पतिः- देवपुरोहितत्वादित्यर्थः । सेनानीनां मध्ये स्कन्दः- देवसेनापतित्वात् । सरसां देवखातानां मध्ये सागरस्समुद्रः ॥२४॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५॥

महर्षीणामिति । महर्षीणां सप्तानां मध्ये भृगुः, गिरां पदानां मध्ये एकमक्षरं प्रणवः ॥२५॥

अश्वत्थस्सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥२६॥

अश्वत्थ इति । वृक्षाणां सर्वेषां मध्येऽश्वत्थः, देवर्षीणां मध्ये नारदः, गन्धर्वाणां मध्ये चित्ररथः, सिद्धानां मध्ये कपिलः ॥२६॥

उच्चैश्श्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥२७॥

उच्चैश्श्रवसमिति । अश्वानां मध्ये उच्चैश्श्रवाः, गजेन्द्राणां मध्ये ऐरावतः, नराणां मध्ये राजा चाहं परमेश्वर इत्यर्थः ॥२७॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पस्सर्पाणामस्मि वासुकिः ॥२८॥

आयुधानामिति । आयुधानां मध्ये वज्रं, धेनूनां मध्ये कामधेनुः, प्रजनस्सन्तानोत्पत्तिहेतुः कन्दर्पः, सर्पाणां मध्ये वासुकिरप्यस्मि परमेश्वर इत्यर्थः ॥

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमस्संयमतामहम् ॥२९॥

अनन्त इति । नागानां मध्येऽनन्तः, यादसां मध्ये वरुणः, पितॄणां मध्येऽर्यमा, संयमतां नियमनमाचरतां मध्ये यमः, उक्तास्सर्वेऽप्यहं परमेश्वर एवेत्यर्थः ॥२९॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥३०॥

प्रह्लाद इति । दैत्यानां मध्ये प्रह्लादः, कलयतां वशीकुर्वतां कालः, मृगाणां मध्ये मृगेन्द्रस्सिंहः, पक्षिणां मध्ये वैनतेयो गरुत्मान्परमेश्वर एवेत्यर्थः ॥

पवनः पवतामस्मि रामश्शस्त्रभृतामहम् ।
झुषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥३१॥

पवन इति । पवतां पावयितॄणां वेगवतां वा पवनो वायुः, शस्त्रभृतां धनुर्धराणां मध्ये रामो रघुरामः, झुषाणां मध्ये मकरः, स्रोतसां नदीनां मध्ये जाह्नवी भागीरथी ॥३१॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन !
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥३२॥

सर्गाणामिति । सर्गाणां सृष्टीनामादिर्मध्यमन्तश्चोत्पत्तिस्थितिलयाः, विद्यानां मध्येऽध्यात्मविद्या ब्रह्मविद्या- मोक्षसाधनत्वात् । प्रवदतां वादोऽर्थनिर्धारकत्वात् । प्रधानतया एतेऽहं परमेश्वर इत्यर्थः ॥३२॥

अक्षराणामकारोऽस्मि द्वन्द्वस्सामासिकस्य च ।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥३३॥

अक्षराणामिति । अक्षराणां वर्णानां मध्येऽकारः श्रु- 'अकारो वै सर्वा वा'गित्यकारस्य प्राधान्याम्नानात् । सामासिकस्य समाससमुदायस्य द्वन्द्व उभयपदार्थप्रधानत्वात् । अक्षयोऽक्षीणः प्रवाहरूपः कालः पूर्वमुक्तस्त्वायुरूपो क्षय इत्यर्थः । धाता कर्मफलदातॄणां मध्ये विश्वतोमुखस्सर्वकर्मफलदाताऽहं परमेश्वर इत्यर्थः ॥३३॥

मृत्युस्सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिश्श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥३४॥

मृत्युरिति । संहारकारिणां मध्ये मृत्युस्सर्वसंहर्तृत्वात् । भविष्यतां भाविकल्याणानां मध्ये उद्भवोऽभ्युदयः, नारीणां मध्ये कीर्तिः, श्रीः, वाक्, स्मृतिः, मेधा, धृतिः, क्षमा एता अहं परमेश्वर इत्यर्थः । कीर्त्यादीनां सकलजनप्रार्थ्यमानत्वादिति भावः । कीर्त्यादीनां स्त्रीत्वमौपचारिकम् । यद्वा कीर्त्यादीनां परमेश्वरधर्मपत्नित्वात्तासां स्त्रीत्वमक्षतम् ॥३४॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहं ऋतूनां कुसुमाकरः ॥३५॥

बृहत्सामेति । साम्नां मध्ये बृहत्साम, छन्दसां मध्ये गायत्री, गायत्री छन्दसां मातेति मातृत्वेनाम्नातत्वात् । मासानां मध्ये मार्गशीर्षः, ऋतूनां मध्ये कुसुमाकरो वसन्तश्चाहं परमेश्वर इत्यर्थः ॥३५॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥३६॥

द्यूतमिति । छलयतामन्योन्यवञ्चनापराणां सम्बन्धि द्यूतं, तेजस्विनां प्रभावशालिनां प्रभावः, जेतॄणां जयः, उद्यमशालिनामुद्यमः, सात्त्विकानां सत्त्वं चाऽस्मि परमेश्वर एवेत्यर्थः ॥३६॥

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः ।
मुनीनामप्यहं व्यासः कवीनामुशना: कविः ॥३७॥

वृष्णीनामिति । यादवानां मध्ये वासुदेवो वसुदेवापत्यं, अत्र सर्वेश्व-

---

मृत्युरिति । कीर्त्यादीनां परमेश्वरधर्मपत्नित्वादिति । अत एवाह महाकविर्बिल्हणः—'वाणी पङ्करुहासनस्य गृहिणी त्यास्थायि मौनव्रतं लक्ष्मीस्सागरशायिनः प्रियतमेत्यग्राहि भिक्षाटनम् । इत्थं स्वामिनिषिद्धसेवकवधू सम्भोगभीभत्सया, पश्चाऽसेविषत त्वया धृतिदयादान्तिक्षमामुक्तयः ॥' इति ।

अत्र यद्यपि श्रीवाचोर्विष्णुविधिधर्मपत्नीत्वमेव प्रमितम् । तथापि तस्य परमेश्वरप्रसादलब्धत्वात्तयोस्ततः प्राक्परमेश्वराधीनत्वमक्षतम् ॥३४॥

रत्वसर्वोपास्यत्वप्रतिपादकवाक्येष्वस्मच्छब्दोऽन्तर्यामिपर एवेति निर्धारितुमेवेयमुक्तिः । अन्यथा तस्यैव तद्विभूतित्वानुपपत्तेः । यदत्र परैस्तेन रूपेण चिन्तनार्थमिति, तदनर्थकम्—विभूतीनामखिलानामपि तत्तद्रूपेण चिन्तनार्थत्वेनात्र विशेषाऽसंप्रतिपत्तेः । पाण्डवानां मध्ये धनञ्जयस्त्वं, मुनीनां मननशीलानां मध्ये व्यासः, कवीनां मध्ये उशनाश्शुक्रः, अहं परमेश्वर एवेत्यर्थः ॥३७॥

**दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।**
**मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८॥**

**दण्ड इति ।** दमयितॄणां सम्बन्धी दण्डो निग्रहः, जिगीषतां जेतुमिच्छतां नीतिरुपायः, गुह्यानां गोप्यानां मौनमवचनं- गोपनसाधनत्वात् । ज्ञानवतां ज्ञानं चास्मि । परमेश्वर एवेत्यर्थः ॥३८॥

**यच्चापि सर्वभूतानां बीजं तदहमर्जुन !**
**न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥३९॥**

**यदिति ।** अपि च यत्सर्वभूतानां बीजं कारणं तदहं परमेश्वरः । मया परमेश्वरेण विनाभूतं रहितं चरमचरं वा वस्तु नास्त्येव ॥३९॥

**नान्तोस्ति मम दिव्यानां विभूतीनां परन्तप !**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥**

**नान्त इति ।** मम परमेश्वरस्य सम्बन्धिनीनां दिव्यानां विभूतीनामन्त इयत्ता नास्ति । एष विभूतेर्विस्तरस्तु संक्षेपादेवोक्तः ॥४०॥

अनुक्ता अपि विभूतेरभिज्ञातुमाह—

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ॥४१॥**

**यद्यदिति ।** यदपि सत्त्वं प्राणिविभूत्या ऐश्वर्येण युक्तं, श्रिया सम्पदा युक्तं, ऊर्जितं बलादियुक्तं वा तत्तद्वस्तु मम परमेश्वरस्य तेजसश्शक्तेरंशेन सम्भूतमिति जानीहीत्यर्थः ॥४१॥

कात्स्न्र्येन विभूतिविवेकेनालं, सार्वत्रिकं पारमेश्वरं महिमानं शृण्वित्याह—

अथ वा बहुनैतेन किं ज्ञानेन तवार्जुन !
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥४२॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ।

अथ वेति । बहुना तत्र स्थितेन परमेश्वरांशेन ज्ञातेन किं प्रयोजनमिदमुच्यमानं शृणु—अहं परमेश्वर इदं चेतनाचेतनात्मकं कृत्स्नं जगदेकांशेन विष्टभ्य यथा तत्सङ्कल्पं नातिवर्तेत, तथा विशेषेण स्तम्भनं कृत्वा स्थितः । तथा च- 'पादोस्य विश्वा भूता'नीतिश्रुतिः ॥४२॥

इति श्रीमज्जगद्गुरुश्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्यनीलकण्ठभगवत्पादाराध्यकृतौ श्रीमद्भगवद्गीताभाष्ये विभूतियोगो नाम दशोमोऽध्यायः ।

---

एकांशेनेति । तथा चागमज्ञाः- 'यस्यांशशक्तिशकले सकलस्समास' इति वदन्ति स्थित इति । अतो दुर्विज्ञेयमहिमा परमेश्वर इति भावः ॥४२॥

इति श्रीमल्लोकाराध्यशिवयोगिमहोपाध्यायनागलिङ्गशिवाराध्यकृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां विभूतियोगो नाम दशमोऽध्यायः ।



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## विश्वरूपसन्दर्शनयोगो नामैकादशोऽध्यायः ।

पूर्वाध्यायान्ते न विष्टभ्याहमिदमेति विश्वव्यापकं परमेश्वरस्वरूपमुक्तं तद्दिदृक्षुः पूर्वोपदिष्टं प्रशंसन्नर्जुनः पप्रच्छ—

अर्जुन उवाच—

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥१॥

मदनुग्रहायेति । मदनुग्रहाय मम शोकनिवृत्तये परमं गुह्यमतिरहस्यमप्यध्यात्मसंज्ञितं परमेश्वरतत्त्वज्ञानं यत्त्वयोक्तं तेन मम मोहः परमेश्वरतत्त्वज्ञानरूपो विगतो निवृत्त इत्यर्थः ॥१॥

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष ! माहात्म्यमपि चाव्ययम् ॥२॥

भवाप्ययाविति । भूतानां भवाप्ययौ सृष्टिप्रलयौ माहात्म्यं पारमेश्वरं सर्वैश्वर्यमपि श्रुतमित्यर्थः ॥२॥

एवमेतद्यथाऽऽत्थत्वमात्मानं परमेश्वर !
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ! ॥३॥

एवमिति । आत्मानं परमेश्वरमुद्दिश्य यथात्थ एतदेवमेव; तत्र दृढ-

---

भवाप्ययाविति । सर्वैश्वर्यमिति । जगदाकारेण परिणामेप्यविकारित्वं, साध्वसाधुकर्मकारयितृत्वेऽप्यवैषम्यं, बन्धमोक्षादिफलप्रदत्वेऽप्यसङ्गौदासीन्यमित्यर्थः ॥२॥

विश्वस एवेत्यर्थः । ते परमेश्वरस्यैश्वरं विश्वव्यापकं यद्वा ते तत्सम्बन्धि निरन्तरशिवाऽहंभावनाविषयमैश्वरं परमेश्वरासाधारणं रूपं विश्वरूपं द्रष्टुमिच्छामीत्यर्थः ॥३॥

परमेश्वरस्य रूपं मया कथं दर्शयितुं शक्यमित्याशङ्क्याह—

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो !
योगेश्वर ! ततो मे त्वं दर्शयात्मानमव्ययम् ॥४॥

मन्यस इति । योगेश्वर ! निरन्तरशिवाहंभावनारूपयोगारूढत्वात्त्वं परमेश्वरस्वरूपं दर्शयितुं शक्नोषीति भावः । तथापि मम तद्दर्शनयोग्यता विद्यत इति यदि मन्यसे तर्हि दर्शयेत्यर्थः ॥४॥

पारमेश्वररूपविशेषान् प्रदिदर्शयिषुर्भगवानवहितः पश्येति बोधयति पश्येत्यादिभिः—

श्रीभगवानुवाच—

पश्य मे पार्थ ! रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥५॥

पश्येति । पार्थ ! मे परमेश्वरस्य शतशोऽपरिमितानि नानाविधानि रूपाणि पश्येत्यर्थः ॥५॥

पश्यादित्यान्वसून् रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ! ॥६॥

पश्येति । आदित्यान्वसूनाश्चर्याण्यत्यद्भुतानि त्वयाऽन्येन वा पूर्वमदृष्टानि परमेश्वरस्य रूपाणि पश्येत्यर्थः ॥६॥

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश ! यच्चान्यद्द्रष्टुमिच्छसि ॥७॥

इहैकस्थमिति । कृत्स्नमशेषमपि चराचररूपं जगदिहास्मिन्मम परमेश्वरस्य देहे एकस्थमेकदेशे स्थितं पश्य । अन्यज्जयपराजयादिकमपि यद्यद्द्रष्टुमिच्छसि तत्सर्वं पश्येत्यर्थः ॥७॥

मन्यसे यदि तच्छक्यमिति पार्थोक्तविषय आह—

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥८॥

नेति। अनेन स्वचक्षुषा चर्मचक्षुषा मां परमेश्वरं द्रष्टुं न शक्नोष्येव। तस्मात्ते दिव्यमप्राकृतं लोचनं ददामि; तया दिव्यदृष्ट्या मम योगं ध्यानयोगविषयमैश्वरं परमेश्वररूपं पश्येत्यर्थः ॥८॥

वासुदेवः परमेश्वरस्वरूपं कथं दर्शयिष्यतीति धृतराष्ट्रस्य सञ्जातं संशयमपनयन् सञ्जय उवाच—

संजय उवाच—

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥९॥

एवमुक्त्वेत्यादिना। एवमुक्त्वा महायोगेश्वरः निरन्तरशिवाहम्भावभावनारूपध्यानयोगसिद्धशिवतादात्म्यभावो हरिर्वासुदेवः पार्थाय परमं सर्वोत्कृष्टमैश्वरं परमेश्वरासाधारणं रूपं दर्शयामासेत्यर्थः ॥९॥

तदेव रूपं विशिनष्टि अनेकेत्यादिभिः—

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम्।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥१०॥

अनेकेति। अनेकवक्त्राणि नयनानि च यस्मिन् तत्- 'सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः। सर्वव्यापी च भगवान् तस्मात्सर्वगतश्शिव' इति श्रुतेरित्यर्थः। अनेकानामद्भुतानां दर्शनं यत्र तदेवमनेकदिव्याभरणभूषितमनेकविधोद्यतायुधकरकमलं चेत्यर्थः ॥१०॥

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम्।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥११॥

दिव्यमिति। दिव्यानि माल्यानि प्रसूनमयानि मणिमयानि चाम्बराणि च ध्रियन्ते येन तथाविधं, दिव्यो गन्धो यस्य तथाविधमनुलेपनं यस्य तत्

सर्वाश्चर्यमयं सर्वविधाद्भुतप्रचुरमनन्तमादिमध्यान्तरहितं- 'तमादिमध्यान्तविहीन-मेक'मित्यादिश्रुतेर्विश्वतोमुखं सर्वतोमुखं प्रागादिसर्वदिगभिमुखतत्पुरुषादिवक्त्र-युतमित्यर्थः ॥११॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भास्सदृशी सा स्याद्भासस्तस्य महात्मनः ॥१२॥

दिवीति । दिवि नभसि सूर्यसहस्रस्यासङ्ख्याकसूर्यसमुदायस्य भाः प्रभा यदि युगपदेककाले उत्थिता उद्गता स्यात्तस्य महात्मनो महेश्वरस्य भासः प्रभायास्सदृशी स्यादित्यर्थः ॥१२॥

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकथा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तथा ॥१३॥

तत्रेति । अनेकथा प्रविभक्तं निखिलमपि जगत्तत्र तस्मिन्देवदेवस्य परमेश्वरस्य शरीरे पाण्डवोऽर्जुनोऽपश्यदित्यर्थः ॥१३॥

ततस्स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृतांजलिरभाषत ॥१४॥

तत इति । ततो दर्शनानन्तरं धनञ्जयो विस्मयेनाक्रान्तो हृष्टरोमा रोमांचोपलक्षितसर्वगात्रश्च सन् देवं महादेवं शिरसा प्रणम्य कृताञ्जलिर्वक्ष्य-माणप्रकारेणोक्तवानित्यर्थः ॥१४॥

अर्जुन उवाच—

पश्यामि देवांस्तव देव ! देहे सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥१५॥

पश्यामीति । देव परमेश्वर ! तव देहे सर्वान्देवान्, सर्वान्भूतसङ्घान्, कमलासनस्थमीशमैश्वर्ययुक्तं लोकानां वा, ब्रह्माणं चतुर्मुखं, सर्वानृषींश्च पश्या-मीत्यर्थः ॥१५॥

अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर ! विश्वरूप! ॥१६॥

अनेकेति । अनेकानि बाह्वादीनि यस्य तथाविधं, सर्वतस्सर्वगतं,

अनन्तानि रूपाणि यस्य तं त्वां परमेश्वरं पश्यामि । विश्वरूप! विश्वेश्वर ! तवादिमन्तं मध्यं च न पश्यामीत्यर्थः ॥१६॥

किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥१७॥

किरीटिनमिति । किरीटिनं किरीटादिसर्वाभरणभूषितं, गदिनं गदायुधादिसर्वायुधधरं च, सर्वतस्सर्वत्र दीप्तिमन्तं, तेजोराशिं तेजःपुञ्जमयं दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिर्यस्य तथाविधं, दुर्निरीक्ष्यं द्रष्टुमशक्यं च त्वां पश्यामीत्यर्थः ॥१७॥

परमेश्वरं प्रस्तौति त्वमक्षरमित्यादिना—

त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययश्शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥१८॥

त्वमिति । अक्षरतत्त्वं ज्ञातव्यं च यत्परमं ब्रह्म तत्त्वमेवास्य विश्वस्य जगतः परं निधानमाश्रयस्त्वमेव । अव्ययः नित्यस्सन् शाश्वतधर्मगोप्ता शाश्वतस्य नित्यस्य स्वधर्मस्य वेदप्रतिपाद्यस्य गोप्ता पालकस्त्वमेव । अतस्तस्मात्सनातनोऽनादिः पुरुषः श्रु- 'पुरुषान्न परं किञ्चि'दिति वेदान्तेषूपदिष्टस्त्वमेवेति निश्चिनोमीत्यर्थः ॥१८॥

अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥

अनादीति । आदिमध्यान्तरहितमपरिमितवीर्यमसङ्ख्याकबाहुं, सोमार्कनेत्रं- ज्वालामालाभयङ्करवदनं स्वीयेन तेजासा विश्वस्य तापं जनयन्तं त्वां पश्यामीत्यर्थः ॥१९॥

द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥२०॥

द्यावापृथिव्योरिति । सर्वा दिशश्चैकेन त्वया व्याप्तमद्भुतमत्याश्चर्यकरमुग्रं भयङ्करं च तव रूपं दृष्ट्वा लोकत्रयं प्रव्यथितं भयेन कम्पत इत्यर्थः ॥

अमी हि त्वा सुरसङ्घा विशन्ति केचिद्भीताः प्रांजलयो गृणन्ति।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः॥

अमीति। सुरसङ्घाः वस्वादयः त्वां विशन्ति प्रविशन्ति, भीताश्च केचित्प्राञ्जलयस्सन्तः गृणन्ति स्तुवन्ति, महर्षीणां सिद्धानां च सङ्घाः जगतः स्वस्त्यस्त्विति ब्रुवाणाः पुष्कालाभिः अर्थपूर्णाभिः स्तुतिभिः त्वां स्तुवन्तीत्यर्थः॥

रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च।
गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे॥२२॥

रुद्रेति। रुद्राश्चादित्याश्च वसवश्च ये साध्यनामानो देवा विश्वेदेवा अश्विनौ देवौ मरुतो एकोनपञ्चाशद्वायुगणा ऊष्मपाः पितरः 'ऊष्मपा हि पितर' इत्यादिश्रुतेः, 'यावदुष्णं भवेदन्नं यावदश्नन्ति वाग्यताः। पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणा' इति स्मृतेश्च। गन्धर्वा यक्षा असुराश्च सिद्धाश्च तेषां सङ्घाः विस्मृताः त्वां वीक्षन्त इत्यर्थः॥२२॥

रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो! बहुबाहूरुपादम्।
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम्॥२३॥

रूपमिति। महाबाहो! ते परमेश्वरस्य बहूनि वक्त्राणि नेत्राणि च यस्मिन् तत्, बहवो बाहव ऊरवः पादाश्च यस्मिन् तत्, बहुभिर्दंष्ट्राभिः करालमतिभयङ्करं वक्त्रं दृष्ट्वा लोकास्सर्वेपि प्रव्यथिता अतिभीताः, तथाऽहमपि भीत इत्यर्थः॥२३॥

नभस्स्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम्।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो॥

नभस्स्पृशमिति। नभः स्पृशतीति नभस्स्पृशं व्योमकेशमित्यर्थः। दीप्तं प्रज्वलितं, अनेकवर्णा यस्य तं, व्यात्तानि विवृतान्याननानि यस्य तं, दीप्तानि ज्वलितानि विशालानि नेत्राणि यस्य तं- त्वामीश्वरं दृष्ट्वा हे विष्णो! परमेश्वर! 'सर्वे देवास्संविशन्तीति विष्णु'रिति श्रुत्यैव शिवाभिधानतया

निर्वचनात् । प्रव्यथितान्तरात्मा प्रव्यथितोऽत्यन्तबाधितोऽन्तरात्मा मनो यस्य तथाविधस्सन् धृतिं धैर्यं न लभे । शममुपशान्तिं च न विन्दामीत्यन्वयः ॥२४॥

तत्र कारणमाह—

दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानिलसन्निभानि ।
दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥२५॥

दंष्ट्राकरालानीति । दंष्ट्राभिः करालानि भयंकराणि कालानलसन्निभानि कालाग्निसदृशानि ते मुखानि दृष्ट्वा दिशो न जाने, शर्म सुखं च न लभे । हे जगन्निवास ! देवेश ! प्रसीदेत्यन्वयः ॥२५॥

ममाऽपजयशङ्कापि व्यपगतेत्याह—

अमी च त्वां धृतराष्ट्रस्य पुत्रास्सर्वे सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणस्सूतपुत्रस्तथाऽसौ सहाऽस्मदीयैरपि योधमुख्यैः ॥२६॥

अमीति । अमी धृतराष्ट्रस्य पुत्रा दुर्योधनादयोऽवनिपालानां सङ्घैस्सह भीष्मद्रोणकर्णादयश्चास्मत्सम्बन्धियोधवर्यैः धृष्टद्युम्नादिभिस्सह ते वक्त्राणि प्रविशन्तीत्युत्तरेणान्वयः ॥२६॥

वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥२७॥

वक्त्राणीति । उक्तास्सर्वेऽपि त्वरमाणा दंष्ट्राभिर्निम्नोन्नतानि, अत एव भयानकानि ते वक्त्राणि प्रविशन्ति; तेषु केचिच्चूर्णितैरुत्तमाङ्गैश्शिरोभिरुपलक्षितास्ते दशनान्तरेषु सन्दृश्यन्त इत्यर्थः ॥२७॥

प्रवेशे दृष्टान्तमाह—

यथा नदीनां बहवोऽम्बुवेगास्समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥२८॥

यथेति । बहवोऽनेकनदीनामम्बुवेगाः प्रवाहा अभिमुखास्सन्तस्समुद्रमेव यथा प्रविशन्ति, तथैवैते नरलोकवीरा भीष्मादयो ज्वलन्ति तव वक्त्राण्यभितोऽभिमुखास्सन्तः प्रविशन्तीत्यर्थः ॥२८॥

बुद्धिपूर्वकप्रवेशे दृष्टान्तमाह—

**यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।**
**तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥**

यथेति । यथा पतङ्गाश्शलभा अतिवेगतः प्रदीप्तं प्रज्वलन्तमग्निं नाशाय प्रविशन्ति; तथैव लोका दुर्योधनादयोपि वेगेन तव वक्त्राणि प्रविशन्तीत्यर्थः ॥

**लेलिह्यसे ग्रसमानस्समन्ताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।**
**तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥३०॥**

लेलिह्यस इति । त्वं तु समग्रान् समस्तान् लोकान् दुर्योधनादीन् ग्रसमानोऽन्तःप्रवेशयन् ज्वलद्भिर्वदनैः लेलिह्यसे आस्वादयसि । हे विष्णो ! उग्राः भयङ्करास्तव भासः तेजोभिः द्युतिभिः समस्तमपि जगदापूर्य व्याप्य प्रतपन्ति सन्तापयन्ति ॥३०॥

**आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर ! प्रसीद ।**
**विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ॥३१॥**

आख्याहीति । भवानुग्राकारः को वा मे मह्यं ब्रूहि, देववर ! तुभ्यं नमोऽस्तु; प्रसन्नो भव ! आद्यं भवन्तं विज्ञातुं विशिष्य ज्ञातुमिच्छामि; तव प्रवृत्तिं चेष्टां न जानामीति ॥३१॥

श्रीभगवानुवाच—

**कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः ।**
**ऋतेपि त्वा न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥**

काल इति । अस्मि- अहं लोकानां संहारकर्ता कालाग्निरुद्रः, लोकान्दुर्योधनादीन् समाहर्तुं संहर्तुमिहेदानीं प्रवृद्धस्सन् प्रवृत्तः प्रावर्तिषि, तस्मात्प्रत्यनीकेषु सेनासु येऽवस्थिता योधा भीष्मादयस्ते त्वामृते त्वदुद्यमं विनापि सर्वे न भविष्यन्ति न स्थास्यन्ति; लयमेष्यन्त्येवेत्यर्थः ॥३२॥

**तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुंक्ष्व राज्यं समृद्धम् ।**
**मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥३३॥**

तस्मादिति । तस्मात्त्वमुत्तिष्ठ उद्युक्तो भव, दुर्जया भीष्मादयोऽर्जुनेन जिता इत्येवंविधं यशो लभस्व । दैवहतान् शत्रून् जित्वा समृद्धं सम्पन्नं राज्यं भुंक्ष्व । एते दुर्योधनादयः पुरस्तादेव मया ईश्वरेणैव निहताः । सव्यसाचिन् ! त्वं निमित्तमात्रं भवेत्यन्वयः ॥३३॥

दुर्जयानेतान्कथं जेष्यामीति माशङ्कस्वेत्याह—

**द्रोणं च भीष्मं च जयद्रथं च कर्णं तथाऽन्यानपि योधवीरान् ।**
**मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान् ॥**

द्रोणमिति । द्रोणादीन्सर्वानपि मया परमेश्वरेण हतान् जहि घातय युध्यस्व, रणे सपत्नान् ध्रुवं जेतासीत्यन्वयः ॥३४॥

संजय उवाच—

**एतच्छ्रुत्वा वचनं केशवस्य कृतांजलिर्वेपमानः किरीटी ।**
**नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥३५॥**

एतदिति । एतद्येवंविधं केशवस्य वचनं श्रुत्वा वेपमानः कम्पमानोऽर्जुनः कृताञ्जलिः कृष्णं नमस्कृत्वा भीतभीतोऽत्यन्तभीत्या प्रणम्यावनतस्सन् सगद्गदं भयहर्षवशात्सगद्गदं भूय आहेत्यर्थः ॥३५॥

अर्जुन उवाच—

**स्थाने हृषीकेश ! तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ।**
**रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥**

स्थान इति । हृषीकेश ! तव प्रकीर्त्या माहात्म्येन जगदशेषमपि प्रहृष्यति प्रहर्षविवशमनुरज्यते चानुरक्तं च भवति; रक्षांसि भीत्या दिशो द्रवन्ति पलायन्ते; सिद्धसङ्घास्सर्वेऽपि नमस्यन्ति च; स्थाने एतत्सर्वमपि युक्तमेवेत्यर्थः ॥३६॥

---

तस्मादिति । ईश्वरेणैवेति । एतदधिकृत्य तात्पर्यनिर्णये विस्तरः ॥

कस्माच्च ते न नमेरन् महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त! देवेश! जगन्निवास! त्वमक्षरं सदसत्तत्परं यत् ॥३७॥

कस्मादिति । महात्मन्! ब्रह्मणश्चतुर्मुखस्याप्यादिकर्त्रे पित्रे ते परमेश्वराय कस्मात् कुतस्सर्वेपि नमस्कारं न कुर्युः । अनन्त! जगन्निवास! अक्षरं सदसत्सर्वमपि ईश्वर एवेत्यर्थः ॥३७॥

गुरुरेव महेश्वर इति न्यायेनप रमेश्वरधर्मैस्स्तौति—

त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ।
वेत्ताऽसि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप! ॥३८॥

त्वमिति । अनन्तरूप! त्वमादिदेवः पुराणपुरुषः, त्वं विश्वस्य परं निधानं चासि; वेत्ता वेद्यं परं धाम चासि; त्वया विश्वमपि ततम् ॥३८॥

वायुर्यमोऽग्निर्वरुणश्शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोपि नमो नमस्ते ॥३९॥

वायुरिति । वायुः, यमः, अग्निः, वरुणः, शशाङ्कः, प्रजापतिः, हिरण्यगर्भः, प्रपितामहः- पितामहस्यापि जनकत्वात्, सर्वरूपस्त्वमेव । ते सहस्रकृत्वो नमोऽस्तु; पुनःपुनस्तु प्रणमामीत्यर्थः ॥३९॥

नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व !
अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥४०॥

नम इति । सर्वरूप! ते तुभ्यं पुरस्तात्पृष्ठतः सर्वास्वपि दिक्षु नमोस्तु; अनन्तवीर्य अमितविक्रम! त्वं सर्वं समाप्नोषि व्याप्तोसि; ततस्सर्वशब्दवाच्य इत्यर्थः ॥४०॥

सखेति मत्वा प्रसभं यदुक्तं हेकृष्ण! हेयादव! हेसखेति ।
अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वापि ॥४१॥

सखेति । समानवया इति भावेन प्रसभं प्रसह्य हे कृष्ण! हे यादव! इत्यादिना तवेमं महिमानमजानता, मया प्रमादात्प्रणयेन वा यद्यदुक्तं तत्क्षामयेत्युत्तरेणान्वयः । अत्र सखेति सन्धिरिदमिति लिङ्गव्यत्ययश्चार्षः ॥४१॥

**यच्चापहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ।**
**एकोऽथ वाऽप्यच्युत! तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥४२॥**

**यच्चेति ।** अपहासार्थं परिहासाय, विहारः क्रीडा, शय्या शयनं, आसनं सिंहासनादि, भोजनं पंक्तिभोजनं, तेषु विषये मयाऽसत्कृतः परिभूतोऽसि; यत्‌ कदा कदैको रहसि स्थितो वा तत्समक्षं सखीनां पुरतो वाऽहमप्रमेयमचिन्त्यं त्वां ततो सर्वमपराधजातं क्षामये क्षमस्वेति प्रार्थय इत्यर्थः ॥४२॥

**पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥४३॥**

**पितेति ।** चरात्मकस्य लोकस्य जगतस्त्वं पिताऽसि; गरीयान् गुरुः पूज्यश्चासि; लोकत्रये त्रैलोक्येऽपि त्वत्समोऽन्यो नास्ति, अधिकः कथं स्यात् ? हे अप्रतिमप्रभाव ! त्वां प्रसादय इत्युत्तरेणान्वयः ॥४३॥

**तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायाऽर्हसि देव! सोढुम् ॥४४॥**

**तस्मादिति ।** तस्मात्प्रणम्य नमस्कृत्य कायं प्रणिधाय दण्डवद्भूमौ पतित्वा ईड्यं स्तुत्यमीशं त्वामहं प्रसादये प्रसीदेति प्रार्थये । हेदेव! ममापराधं सोढुं क्षन्तुमर्हसि; कस्य क इव- पुत्रस्य पितेव, सख्युस्सखेव, प्रियायाः पतिरिव चेत्यर्थः ॥४४॥

**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।**
**तदेव मे दर्शय देव! रूपं प्रसीद देवेश ! जगन्निवास! ॥४५॥**

**अदृष्टपूर्वमिति ।** हेदेव! पूर्वमदृष्टं रूपं दृष्ट्वा हृषितो हृष्टोस्मि; मे मनश्च भयेन प्रव्यथितं प्रकर्षेण व्याकुलितं चासीत् । हे देवेश! हेजगन्निवास! तत्त्वदीयमेवं रूपं मे दर्शय प्रसीद ॥४५॥

**किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ।**
**तेनैव रूपेण चतुर्भुजेन सहस्रबाहो! भव विश्वमूर्ते! ॥४६॥**

**किरीटिनमिति ।** सहस्रबाहो! विश्वमूर्ते! त्वां किरीटिनं किरीटयुक्तं

गदिनं गदाधारिणं चक्रहस्तं द्रष्टुमिच्छामि; तेन तादृशेन त्वदीयेनैव चतुर्भुजेन चतुर्बाहुयुतेन रूपेण भव तिष्ठेत्यर्थः ॥४६॥

एवं प्रार्थितस्सन्नाश्वासयन् भगवानुवाच—

श्रीभगवानुवाच—

**मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।**
**तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥४७॥**

मयेति । अर्जुन ! प्रसन्नेन त्वयि सानुग्रहेण मयाऽऽत्मयोगाच्छित्रयोगप्रभावात्त्वत्तोऽन्येन पूर्वमदृष्टमनन्तं तेजोमयं मे परमेश्वरस्य विश्वरूपं प्रदर्शितमासीदित्यर्थः ॥४७॥

**न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ।**
**एवंरूपश्शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ! ॥४८॥**

नेति । हेकुरुप्रवीर ! वेदयज्ञाध्ययनैश्चतुर्णां वेदानामध्ययनैरशेषयज्ञानुष्ठानैः षोडशभिर्महादानैरग्निहोत्रादिकर्मभिरुग्रैस्तपोभिर्वा मनुष्यलोके भवतोऽन्येनैवंविधरूपविशिष्टः परमेश्वरो द्रष्टुं कथमपि शक्यो न भवतीत्यर्थः ॥४८॥

**मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।**
**व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥४९॥**

मेति । घोरं भयंकरमीदृग्बहुमुखादियुतं पारमेश्वरं रूपं दृष्ट्वा स्थितस्य ते व्यथा बाधा विमूढभावो व्याकुलचित्तता वा मास्तु । व्यपेतभीर्निर्भयः प्रीतमनाश्च सन् त्वमिदानीं मदीयमेव रूपं प्रकर्षेणावलोकयेत्यर्थः ॥४९॥

संजय उवाच—

**इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ।**
**आश्वासयामास च भीतमेनं भूत्वा पुनस्सौम्यवपुर्महात्मा ॥५०॥**

इतीति । वासुदेवोऽर्जुनं प्रतीत्येवमुक्त्वा भूयः पुनस्स्वकमात्मीयं रूपं

दर्शयामास । पुनस्तदा सौम्यवपुश्शान्तमूर्तिस्सन् विश्वरूपदर्शनेन भीतमेनमर्जुनमाश्वासयामास चेत्यर्थः ॥५०॥

अर्जुन उवाच—

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन !
इदानीमस्मि संवृत्तस्सचेताः प्रकृतिं गतः ॥५१॥

दृष्ट्वेति । हेजनार्दन ! इदानीं तवेदं सौम्यं रूपं दृष्ट्वा प्रकृतिं स्वास्थ्यं गतः सचेता अव्याकुलचित्तस्संवृत्तोऽस्मि ॥५१॥

श्रीभगवानुवाच—

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ॥५२॥

सुदुर्दर्शमिति । सुदुर्दर्शं कथमपि द्रष्टुमशक्यं मम परमेश्वरस्य तद्रूपं त्वं दृष्टवानसि; तस्य रूपस्य दर्शनं देवा अपि सदा कांक्षन्त इत्यर्थः ॥५२॥

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥५३॥

नेति । अर्जुन ! त्वं मां परमेश्वरं यथा दृष्टवानसि । एवंविधो विश्वरूपशाल्यहं परमेश्वरो वेदैर्वेदाध्ययनैस्तपसा दानेन यज्ञैश्च द्रष्टुं कथमपि शक्यो न भवतीति न वेदयज्ञाध्ययनैरित्युक्तश्लोकस्यैवाभ्यासो विश्वरूपदर्शनस्य दुर्लभत्वख्यापनार्थः ॥५३॥

परमेश्वरसाक्षात्कारे परमोपायमाह—

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन !
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ! ॥५४॥

भक्त्येति । हे परन्तप ! अहं परमेश्वरः तत्त्वेन परमार्थतो ज्ञातुं द्रष्टुं साक्षात्कर्तुं सायुज्यमुक्त्या प्राप्तुं चानन्यया 'अन्यथा शरणं नास्ति त्वमेव शरणं म'मेति तदेकनिष्ठारूपया भक्त्या स्नेहपूर्वकानुध्यानेनैव लभ्य इत्यर्थः ॥५४॥

---

इतीति । आत्मीयमिति । एतेन वासुदेवेन योगशक्त्या प्रदर्शितं विश्वरूपं पारमेश्वरमेव न स्वीयमिति सञ्जयोक्त्यैव निर्धारितमिति भावः ॥५०॥

परमेश्वरप्राप्तगीताशास्त्रतात्पर्यभूतमर्थसारं विवृणोति—

मत्कर्मकृन्मत्परमो मद्भक्तस्सङ्गवर्जितः ।
निर्वैरस्सर्वभूतेषु यस्स मामेति पाण्डव ! ॥५५॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपसन्दर्शनयोगो नामैकादशोऽध्यायः ।

मत्कर्मकृदिति । मत्कर्मकृत्परमेश्वराराधनबुद्ध्या वेदविहितकर्माण्याचरन् ; मत्परमः- परमेश्वर एव सर्वाधिक इति भाववान्; मद्भक्तः- निरन्तरपरमेश्वरानुध्यानपरायणः; सङ्गवर्जितः- बन्धुस्नेहरहितः; सर्वभूतेषु निर्वैरः शत्रुष्वपि विरोधभावरहितो य एवंविधः पुरुषवर्यस्स मां परमेश्वरमेति प्राप्नोतीत्यर्थः ॥

इति श्रीमज्जगद्गुरुश्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्यनीलकण्ठभगवत्पादाराध्यकृतौ श्रीमद्भगवद्गीताभाष्ये विश्वरूपसन्दर्शनयोगो नामैकादशोऽध्यायः ।

---

मत्कर्मकृदिति । शत्रुष्वपि विरोधभावरहित इति । 'सर्वोपकारकरणं सर्वानुग्रहणं तथा । सर्वाभयप्रदानं च शिवस्याराधनं विदु'रित्युक्तरीत्या सर्वभूतहितरतमतिरिति भावः ॥५५॥

इति श्रीमल्लोकाराध्यशिवयोगिमहोपाध्यायनागलिङ्गशिवाराध्यकृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां विश्वरूपसन्दर्शनयोगो नामैकादशोऽध्यायः ।



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## भक्तियोगो नाम द्वादशोऽध्यायः ।

पूर्वाध्यायान्ते मत्कर्मकृदित्यादिना परमेश्वरोपासनमुक्तम् । परमेश्वरस्य 'तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुत'मिति निराकारत्वेन, श्रु- 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्त'मिति साकारत्वेन च श्रुतत्वात्साकारस्य वा उत निराकारस्य वा परमेश्वरस्योपासनं श्रेय इति बुभुत्सयाऽर्जुन उवाच—

अर्जुन उवाच—

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥१॥

एवमिति । एवं सर्वकर्मार्पणादिना ये भक्तास्त्वां परमेश्वरं साकारं सततयुक्ताः सततं परमेश्वरनिष्ठास्सन्तः पर्युपासते ध्यायन्ति; येऽपि च भक्ता अनिर्देश्यनिराकारमक्षरं महालिङ्गरूपं पर्युपासते ध्यायन्ति; तेषु के योगवित्तमाः श्रेष्ठा इत्यर्थः ॥१॥

---

एवमिति । महालिङ्गरूपमिति । एतेनात्राक्षरपदं ये निर्गुणपरतया विवृण्वन्ति; ये च प्रत्यगात्मपरतयाऽङ्गीकुर्वन्ति; येऽपि लक्ष्मीपरतया विमुह्यन्ति; ते सर्वेऽपि वैदिकादध्वनः प्रच्यवन्तीति सिद्धम् ।

तथाहि- निर्गुणस्य तत्त्वस्य श्रुतिसूत्रासम्मतत्वस्य वेदान्तार्थपरिष्कारे ब्रह्मपथे च निर्धारितत्वात् । अपेक्षितोपाधिसम्पन्नं निरस्तोपाधिसम्पन्नं च ब्रह्मोपा-

श्रीभगवानुवाच—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परमोपेतास्ते मे युक्ततमा मताः ॥२॥

मयीति । ये भक्ता मयि साकारे परमेश्वरे मन आवेश्य संस्थाप्य परया श्रद्धया उपेता अत्यन्तश्रद्धान्विता नित्ययुक्ता अनारतध्याननिरता मां परमेश्वरमुपासते आराधयन्ति, ते युक्ततमाश्श्रेष्ठा इति मे मम मताः सम्मता इत्यर्थः ॥२॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥३॥

ये त्विति । अथ ये त्वनिर्देश्यं निराकारमक्षरं शाश्वतं, सर्वत्रगं सर्वव्यापकं, अचिन्त्यमविज्ञेयं, कूटस्थं निर्विकारं, अचलं स्थिरं, ध्रुवं सत्यं, अव्यक्तं महालिङ्गमुपासते ते परमेश्वरं प्राप्नुवन्तीत्युत्तरेणान्वयः ॥३॥

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥४॥

संनियम्येति । इन्द्रियग्रामं करणजातं संनियम्य स्वविषयेभ्यः प्रत्याहृत्य सर्वत्र शत्रुमित्रादौ समबुद्धयो बुद्धिवैषम्यरहिताः सर्वभूतहिते रताः तेऽपि मां परमेश्वरमेव प्राप्नुवन्तीत्यर्थः ॥४॥

---

स्यत्वेन ज्ञेयत्वेन च वेदान्तेषूपदिश्यत इत्युक्त्वा परैरेव निर्गुणतत्त्वस्यानुपास्यत्वाभ्युपगमेन प्रकृते पर्युपासत इति तस्योपासिकर्मत्वाभिनयस्य स्वमतविरुद्धत्वाच्च । तथा 'कारणं तु ध्येयः, शिव एको ध्येयश्शिवंकरस्सर्वमन्यत्परित्य'ज्येत्यादिश्रुतिभिः शिवेतरस्यैवानुपास्यत्वाम्नानेन तत्रापि जीवस्योपास्यत्वानुमोदस्यात्यन्तविरुद्धत्वात् । एवं लक्ष्मीकटाक्षस्य बन्धकत्वेन लक्ष्मीभजनस्यापि मुमुक्षूणां हेयत्वात् । किं च वासुदेवं प्रति तव त्वत्सम्मत्यावा समाश्रयणं श्रेय इति प्रश्नस्य वासुदेवस्यासामर्थ्यद्योतकत्वेन जुगुप्सावहत्वाच्च । एतत्सर्वमवैदिकमताभिनिवेशमूलमप्रामाण्यकश्मलमित्यलम् ॥१॥

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥५॥

क्लेश इति । अव्यक्तासक्तचेतसां महालिङ्गोपासकानां तेषां भक्तानां क्लेश आयासोऽधिकतरोऽत्यधिकः । तत्र हेतुमाह—अव्यक्ता हीति । देहवद्भिः करचरणादियुक्तशरीरधारिभिरव्यक्ता तादृशाकाररहितविषया गतिरुपासना-दुःखं यथा तथाऽवाप्यते हि सिध्यति किलेत्यर्थः ॥५॥

ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥६॥

ये त्विति । ये भक्तास्तु सर्वाणि कर्माणि कायिकवाचिकमानसिक-भेदेन त्रिविधान्यपि कृत्यानि मयीष्टप्राणभावरूपे परमेश्वरे सन्न्यस्य समर्प्य मत्पराः- अहं परमेश्वर एव परो येषां ते तथाविधास्सन्तः, अनन्येन देवतान्तर-मन्त्रान्तरक्रियान्तरपरित्यागपूर्वकेण, यद्वा शिवोऽहमिति भावनारूपेण योगेन ध्यानयोगेन मां परमेश्वरं ध्यायन्तो भावयन्त उपासते उपासनां कुर्वते ॥६॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ ! मय्यावेशितचेतसाम् ॥७॥

तेषामिति । तेषामुक्तरीत्या ध्यानयोगेनोपासनपरान् भक्तवर्यानहं परमेश्वरो मृत्युमयात्संसारसागरात्क्षिप्रमेव समुद्धरिष्यतीत्यर्थः ॥७॥

---

ये त्विति । देवतान्तरेति । 'शिव एको ध्येयश्शिवंकरस्सर्वमन्यत्परित्य'ज्येति श्रुतेरित्यर्थः । शिवोऽहमिति । 'योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति, न स वेद यथापशु'रितिश्रुतेरित्यर्थः ।

ननु उपासितुरर्थान्तरत्वेन परमेश्वरस्य तदभेदभावेनोपासनमफलमिति माशङ्किष्ठाः । उपासितुर्भिन्नएव परमेश्वरः, मान्त्रिकाद्भिन्नो गरुड इव चिर-निरन्तरासेविताभेदभावनादृढबन्धेन स्वस्वरूपत्वेनानुगृह्णाति । यथा गरुडो विषसंहरणसामर्थ्यप्रदानेन मन्त्रिणोऽनुगृह्णाति, तथा परमेश्वरः पशुपतित्वनिवृत्ति-रूपफलप्रदानेनोपासकाननुगृह्णातीति भगवता भाष्यकारेण शारीरकब्रह्ममीमांसा-भाष्ये सम्यगुपपादितत्वात् ॥६॥

तेषामिति । परमेश्वर इति । 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥८॥

**मयीति ।** तस्मान्मनस्सङ्कल्पविकल्पात्मकं मयि परमेश्वर एवाऽऽधत्स्व स्थापय; बुद्धिमध्यवसायात्मिकामपि तत्रैव प्रवेशय । एवमाचरसिचेत्त्वमत ऊर्ध्वमेतद्देहावसाने मयि पमेश्वर एव निवसिष्यसि सायुज्यमुक्तिं गमिष्यसि । अत्र संशयो नास्तीत्यर्थः ॥८॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाऽऽप्तुं धनंजय ! ॥९॥

**अथेति ।** अथ पक्षान्तरे चित्तं स्थिरं निश्चलं यथा तथा परमेश्वरे स्थापयितुं न शक्नोषिचेत्तर्ह्यभ्यासयोगेन सर्वतस्समाकृष्य चित्तस्य पुनःपुनरेकत्र स्थापनमभ्यासस्तेनोपायेन मां परमेश्वरमाप्तुमिच्छ प्रयत्नमाचरेत्यर्थः ॥९॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥१०॥

**अभ्यास इति ।** हेपार्थ ! त्वं तत्राप्यशक्तो भवसि यदि तर्हि मत्कर्मपरमः परमेश्वरप्रीत्यर्थमेव तदाराधनबुद्ध्या सत्कर्माचरणपरो भव । एवं कुर्वन्नपि सिद्धिं मत्प्रसादेन मुक्तिं प्राप्स्यसीत्यर्थः ॥१०॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥११॥

**अथेति ।** पारमेश्वरधर्माचरणेऽपि न शक्नोषिचेत्तर्हि यतात्मवान् मद्योगं परमेश्वरैकशरणत्वमाश्रितस्सन् सर्वकर्मफलत्यागं सर्वेषामपि कर्मणां फलाभिसन्धिं परित्यजेत्यर्थः ॥११॥

श्रेयो हि ज्ञानमभ्यासाद्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥११॥

**श्रेय इति ।** अभ्यासात्पारमेश्वरतत्त्वज्ञानरहितात्तस्माद्ज्ञानं पारमेश्वर-

---

मानवाः, तदा शिवमज्ञाय दुःखस्यान्तो भविष्य’तीतिश्रुत्या शोकसागरसन्तरणस्य शिवध्यानैकसाध्यत्वाज्ज्ञानादिति भावः ॥७॥

तत्त्वज्ञानं श्रेयः प्रशस्तं; ज्ञानात्तस्मादपि ध्यानं निदिध्यासनं विशिष्यते। 'तत-स्तुतं पश्यते निष्कलं ध्यायमान' इतिश्रुतेरित्यर्थः। ततोऽपि कर्मफलत्यागः, मया तु परमेश्वराज्ञारूपाणि कर्माणि यथाशक्ति कर्तव्यानि, तत्फलं परमेश्वराधीन-मिति निश्चयेन फलासक्तिपरित्याग इत्यर्थः। त्यागादेवंविधात्परमेश्वरप्रसाद-सिद्धया तदनन्तरमेव सर्वदुःखशान्तिरूपा मुक्तिस्सिध्यतीत्यर्थः ॥१२॥

भक्तस्य परमेश्वरप्रसादनिदानान्धर्मानाह—

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।
निर्ममो निरहङ्कारस्समदुःखसुखः क्षमी ॥१३॥

अद्वेष्टेति। सर्वभूतानामद्वेष्टा अपकुर्वत्स्वपि भूतेषु द्वेषरहितोऽपि च मैत्रः स्नेहवान्, दुःखितेषु करुणो दयाशाली, निर्ममः- देहे तत्सम्बन्धिषु च ममतारहितः, निरहङ्कारः, समदुःखसुखः- सुखे दुःखे च तुल्यभावः, क्षमी-- परिभवेऽपि क्षमावान्निर्विकार इत्यर्थः ॥१३॥

सन्तुष्टस्सततं योगी यतात्मा दृढनिश्चयः।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तस्स मे प्रियः ॥१४॥

सन्तुष्ट इति। सन्तुष्टः- लाभालाभयोः प्रसन्नमनाः, सततं सदापि योगी ध्यानपरः, यतात्मा नियमितान्तःकरणः, दृढनिश्चयो दृढव्रतः, मयि पर-मेश्वरेऽर्पिते मनोबुद्धी यस्योक्तलक्षणः, यो भक्तस्स परमेश्वरस्य प्रियस्सम्मत इत्यर्थः ॥१४॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यस्स च मे प्रियः ॥१५॥

यस्मादिति। यस्माल्लोको जनो नोद्विजते न बिभ्यति; यश्च लोका-दन्यस्मादपि नोद्विजते च; हर्षस्स्वस्वलाभे सन्तोषः, अमर्षः परस्य लाभेऽक्षमा; भयं त्रासः; उद्वेगश्चित्तक्षोभः; एतैरवगुणैर्मुक्तो यस्सोऽपि मे परमेश्वरस्य प्रिय इत्यर्थः ॥१५॥

अनपेक्षश्शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मे भक्तस्स मे प्रियः ॥१६॥

अनपेक्ष इति । अनपेक्षो निष्कामः, शुचिर्बाह्याभ्यन्तरशौचशाली, दक्षो ज्ञातुं कर्तुं च समर्थः, उदासीनः पक्षपातरहितः, गतव्यथो मनोव्याधिरहितः, सर्वारम्भपरित्यागी सर्वान् दृष्टफलानदृष्टफलांश्चारम्भानुद्यमान् परित्यक्तुं शीलं यस्य स तथाविधश्च यस्सोपि मे परमेश्वरस्य प्रिय इत्यर्थः ॥१६॥

यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।
शुभाशुभपरित्यागी भक्तिमान्यस्स मे प्रियः ॥१७॥

य इति । इष्टलाभे यो न हृष्यति, अनिष्टापत्तौ च यो न द्वेष्टि, प्रियनाशे यो न शोचति, अप्राप्तार्थं यो न कांक्षति, शुभाशुभपरित्यागी पापवत्पुण्यस्यापि बन्धकत्वादुभयकर्मपरित्यागी यस्सोऽपि परमेश्वरस्य प्रिय इत्यर्थः ॥

समश्शत्रौ च मित्रे च तथा मानावमानयोः ।
शीतोष्णसुखदुःखेषु समस्सङ्गविवर्जितः ॥१८॥

सम इति । शत्रुमित्रयोर्मानावमानयोश्शीतोष्णयोः सुखदुःखयोश्च सम एकरूपः, सङ्गविवर्जितः क्वचिदप्यासक्तिरहितः ॥१८॥

तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।
अनिकेतस्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥१९॥

तुल्येति । तुल्ये निन्दास्तुती यस्य स तथाविधः, मौनी मौनवान्, येन केनचिद्यथालाभेन सन्तुष्टः, अनिकेतो निकेतनासक्तिरहितः, स्थिरमतिर्व्यवस्थितचित्तः स्थिरभक्तियुक्तश्च, यो भक्तस्स मे परमेश्वरस्य प्रिय इत्यर्थः ॥

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥२०॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः ।

**ये त्विति ।** ये भक्ता अमृतत्वसाधनत्वादमृततुल्यं 'मय्यावेश्य मनो ये मा'मित्यादिनोक्तं धर्मजातं, श्रद्दधानाश्श्रद्धान्विताः, मत्परमाः परमेश्वरनिष्ठाः, पर्युपासते यथोक्तमनुतिष्ठन्ति, ते भक्ता मे परमेश्वरस्यातीव प्रिया इत्यर्थः ॥२०॥

इति श्रीमज्जगद्गुरुश्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्य-
नीलकण्ठभगवत्पादाराध्यकृतौ श्रीमद्भगवद्गीताभाष्ये
भक्तियोगो नाम द्वादशोऽध्यायः ।

---

**ये त्विति । यथोक्तमिति ।** यथाशास्त्रमित्यर्थः ॥२०॥

इति श्रीमल्लोकाराध्यशिवयोगिमहोपाध्यायनागलिङ्गशिवाराध्य-
कृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां
भक्तियोगो नाम द्वादशोऽध्यायः ।



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोऽध्यायः ।

सप्तमेऽध्याये पशुपाशरूपे पत्युः परमेश्वरस्य परापराभिधे द्वे प्रकृती निगदिते । तत्र क्षेत्रज्ञलक्षणायाः पशुरूपायाः पराप्रकृतेः क्षेत्रलक्षणायाः पाशरूपाया अपराप्रकृतेश्च स्वरूपनिरूपणद्वारेण पत्युः परमेश्वरस्य तत्त्वं विविच्य निर्धारयितुं क्षेत्रक्षेत्रज्ञविभागाऽध्याय आरभ्यते । तत्र त्रिगुणा प्रकृतिरपरसंज्ञिता पाशरूपा भोग्यभोगोपकरणभोगायतनरूपेण परिणता पशोर्देहेन्द्रियाकारेण वर्तते । तदेवेदं शरीरं तद्विवृणोति भगवान्—

श्रीभगवानुवाच—

इदं शरीरं कौन्तेय ! क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥१॥

इदमिति । इदं दृश्यमानं बाह्यान्तरिन्द्रियसहितं भोगायतनं क्षेत्रमित्यभिधीयते; सस्यवदत्र कर्मफलसिद्धेरिति भावः । एतच्छरीरं यो वेत्ति ममेदमित्यादिनाऽभिमन्यते तं तद्विदः क्षेत्रज्ञ इति प्राहुरित्यर्थः ॥१॥

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत !
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥२॥

क्षेत्रज्ञमिति । हे भारत ! सर्वक्षेत्रेषु शरीरेषु सर्वेष्वपि क्षेत्रज्ञं जीवं मां परमेश्वरमपि प्रेरकतया स्थितमन्तरात्मानं विद्धि जानीहि । 'द्वासुपर्णा सयुजा

---

इदमिति । क्षेत्रज्ञ इति । कृषीवलवत्तत्फलभोक्तृत्वादितित्यर्थः ॥१॥

सखाया समानं वृक्षं परिषस्वजाते, समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः, यदा जुष्टं पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इति', 'गुहां प्रविष्टावात्मानौ हि तद्दर्शना'दित्यादिश्रुतिसूत्रैर्जीवेशयोरुभयोरपि सर्वशरीरवर्तित्वावगमात् । किं च 'यस्य पृथिवी शरीरं यस्यात्मा शरीर'मित्यादिश्रुतिभिः क्षेत्रस्य क्षेत्रज्ञस्य च परमेश्वरशरीरत्वावगमात्सर्वक्षेत्रेषु क्षेत्रपदोपलक्षितेषु क्षेत्रज्ञेषु च नियन्तृत्वेनान्तर्यामिणं परमात्मानं मां परमेश्वरमपि च विद्धीत्यर्थः । क्षेत्रक्षेत्रज्ञयोः पशुपाशयोस्तद्विलक्षणस्य परमेश्वरस्य च यद्ज्ञानं पशुपाशपतिविषयं यदेव ज्ञानमित्युदीर्यत इत्यर्थः ॥२॥

तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥३॥

तदिति । तत्क्षेत्रं शरीरं यद्यद्रूपं यादृग्यादृग्विधधर्मविशिष्टं यद्विकारि यैरिन्द्रियादिविकारैर्युक्तं; यतश्च प्रकृतिपुरुषसंयोगाद्भवति स क्षेत्रज्ञस्तत्स्वभावः परमेश्वरश्च यादृग्विधप्रभावः; तत्सर्वं मत्तश्शृणिवत्यर्थः ॥३॥

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥४॥

ऋषिभिरिति । ऋषिभिर्वेदव्यासादिभिः, विविधैर्बहुभिः, छन्दोभिरुपनिषद्गणैः, हेतुमद्भिर्युक्तियुक्तैः, विनिश्चितैर्निर्धारितार्थैः, ब्रह्मसूत्रपदैश्चैव ब्रह्ममीमांसान्यायैश्च, बहुधा बहुप्रकारं, गीतं निगदितं, तत्सर्वं संग्रहेण वक्ष्यामि शृण्वित्यर्थः ॥४॥

तत्र क्षेत्रस्वरूपमाह—

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥५॥

महाभूतानीति । महाभूतानि पृथिव्यापस्तेजोवाय्वाकाशाः पञ्च; अहङ्कारस्तत्कारणं; बुद्धिरहङ्कारकारणं महत्तत्त्वं; अव्यक्तं तत्कारणं सत्त्वरजस्तमोगुणात्मकं प्रधानं मूलप्रकृतिः । एवमेवाष्टविधा प्रकृतिरित्यर्थः । इन्द्रि-

---

महाभूतानीति । मूलप्रकृतिरिति । साङ्ख्यमतरीत्येदमुक्तम् ।

याणि दश; त्वक्चक्षुश्श्रोत्रघ्राणरसनात्मकानि ज्ञानेन्द्रियाणि पञ्च; वाक्पाणिपादपायूपस्थारूपाणि कर्मेन्द्रियाणि पञ्च; एकं मनः; इन्द्रियगोचराश्शब्दस्पर्शरूपरसगन्धाः पञ्चेत्यर्थः। एतान्येव साङ्ख्याश्चतुर्विंशति तत्त्वानीति कथयन्ति ॥

इच्छा द्वेषस्सुखं दुःखं सङ्घातश्चेतना धृतिः।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥६॥

इच्छेति। इच्छा द्वेषः सुखं दुःखमिति प्रसिद्धा मनोधर्माः; इच्छाद्वेषादिधर्मकमित्यर्थः। सङ्घातो भूतानां सङ्घातः; चेतनस्य प्राणिन आधृतिराधारभूतमित्यर्थः। एवं च प्रकृत्यादिद्रव्यसङ्घातरूपं चेतनस्य सुखदुःखानुभवसाधनं क्षेत्रं सविकारि कार्यसहितं संग्रहेण निगदितमित्यर्थः ॥६॥

एवं क्षेत्रं प्रतिपाद्य तद्विविच्य क्षेत्रज्ञमीश्वरं च प्रतिपादयितुं तद्ज्ञानसाधनान्याह—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥७॥

अमानित्वमिति। अमानित्वं स्वस्य श्लाघनायामनिष्टत्वं, अदम्भित्वं दम्भराहित्यं, अहिंसा परपीडा तद्राहित्यं, क्षान्तिस्सहनं, आर्जवमवक्रता, आचार्योपासनं सद्गुरुभजनं, शौचं बाह्याभ्यन्तरशुद्धिः, स्थैर्यं स्थिरमतिः, आत्मनिग्रहः कायकरणसंयमः; एतद्ज्ञानमिति प्रोक्तमित्युत्तरेणान्वयः ॥७॥

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥८॥

इन्द्रियार्थेष्विति। इन्द्रियार्थेषु शब्दादिषु, वैराग्यं निस्पृहत्वं, अनहङ्कारो गर्वराहित्यं, जन्मनि गर्भवासरूपे मृत्वा सर्वमर्मच्छेदिन्यां 'जरायां प्रज्ञा-

---

वैदिकपक्षे तु—अव्यक्तं माया पारमेश्वरी शक्तिः- 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर'मितिश्रुतेः; बुद्धिस्सर्गादौ पारमेश्वरमीक्षणं चिच्छक्तिरित्यर्थः। अहङ्कारः श्रु- 'बहुस्यां प्रजायेयेति; सङ्कल्प इच्छाशक्तिरित्यर्थः। 'तस्यैव शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया' चेतिश्रुतेरित्यर्थः। स्वाभाविकीति विशेषणं तस्याः कल्पितत्वव्यामोहं वारयति ॥५॥

शक्त्यादिविलोपनरूपायां च व्याधौ यादृशं दुःखं तद्रूपदोषस्यानुदर्शनमनु-
चिन्तनम् ॥८॥

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥९॥

असक्तिरिति । असक्तिरात्मेतरवस्तुन्यसङ्गित्वं, पुत्रदारगृहादिष्वनभि-
ष्वङ्गस्स्नेहराहित्यं, इष्टानिष्टोपपत्तिषु- इष्टानिष्टयोः प्राप्तौ समचित्तत्वं हर्षविषाद-
शून्यत्वम् ॥९॥

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥१०॥

मयीति । मयि परमेश्वरेऽनन्ययोगेन तदेकविषयाऽव्यभिचारिणी
सुस्थिरा भक्तिश्च, विविक्तदेशसेवित्वं निर्जनदेशवासः, जनसंसदि सभायामरति-
रनासक्तिः ॥१०॥

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतद्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥११॥

अध्यात्मेति । अध्यात्मज्ञाननित्यत्वं जीवेश्वरविषयज्ञाननिष्ठत्वं, तत्त्वानां
पशुपाशपतिरूपाणां त्रयाणां यद्ज्ञानं तस्यानुचिन्तनमित्यर्थः । एतदमानि-
त्वादिकं ज्ञानसाधनत्वाद्ज्ञानमित्येव प्रोक्तं; ततोऽन्यथा तद्विपरीतमज्ञानमित्यर्थः ॥

ज्ञेयं यत्तत्प्रवक्ष्यामि यद्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥१२॥

ज्ञेयमिति । ततो यद्ज्ञेयं तत्प्रवक्ष्यामि; यत्तत्त्वं ज्ञात्वाऽमृतं मोक्षं
प्राप्नोति; अनाद्याद्यन्तरहितं, मन्मत्तो नारायणात्परमतीतं ब्रह्म परमशिवः तत्स-
दिति वा, अथासदिति वा वक्तुं न शक्यते । तथा च- इह यद्यपि कार्यावस्थं
स्थूलचिदचिद्विशिष्टं ब्रह्म सच्छब्दवाच्यं भवति; कारणावस्थं सूक्ष्मचिदचि-
द्विशिष्टं ब्रह्माऽसच्छब्दवाच्यं भवति । तथाप्युभयोरप्यत्रस्थयोर्विशेषणैकगतत्वेन

---

ज्ञेयमिति । मत्तो नारायणात्परमिति । एतेन 'शब्दविशेषा'चेति
सूत्रेण नारायणात्परं ब्रह्मेति वेदाचार्योऽयमर्थं निर्धारितवान् । 'तद्विष्णोः परमं

विशिष्टस्य ब्रह्मणस्तादृशावस्थाभावात्सदसच्छब्दवाच्यं न भवतीत्यर्थः । अत्र ब्रह्मण इव चेतनस्यापि स्थूलसूक्ष्मावस्थयोस्स्वविशेषणीभूताऽचिन्मात्रगतत्वेन सोऽपि न, सदसच्छब्दवाच्यो भवतीत्यर्थः ।

किंच चेतनस्य कार्यकारणावस्थयोः कर्मकृतत्वेन स्वाभाविकत्वाभावा-च्चेतनोपि सदसच्छब्दवाच्यो न भवतीति युक्तम् ।

ननु यद्येवं विशिष्टस्य ब्रह्मणस्स्थूलसूक्ष्मावस्थयोस्स्वगतत्वाभावे स्थूल-सूक्ष्मचिदचिद्विशिष्टं ब्रह्मेति विशिष्टपक्षाऽभ्युपगमोऽसमञ्जस एव स्यादिति चेन्न—'सर्वं खल्विदं ब्रह्म', 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यादिश्रुतिसूत्रैः कार्यकारणयोः प्रपञ्चब्रह्मणोरनन्यत्वस्य प्रमितत्वेन तस्य निर्विशेषपक्षेऽसङ्ग-तत्वात् । विशिष्टपक्षस्यैव तदन्यथानुपपत्त्या श्रुतिसूत्रसम्मतत्वावगमेन तदभ्युप-गमस्यैव परमसमञ्जसत्वात् । तथाहि- निर्विशेषपक्षे कारणभूतं ब्रह्मैव सत्यं, तस्मात्कारणाद्व्यतिरिक्तं कार्यं नास्तीति कारणादनन्यत्कार्यमित्यभ्युपगतम् । अत्र पक्षे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं हि सार्थक्यमश्नुते । अभेदे हि कार्यकारणयोः कारणे विज्ञाते कार्यं विज्ञातमिति शक्यते वक्तुं विज्ञातकार-णाभिन्नत्वात्कार्यस्य । असत्वे पुनः कार्यस्य कारणविज्ञानेन कथं सर्वकार्य-विज्ञानं सर्वस्यैवाभावात् । किंच कार्यस्य मिथ्यात्वे कारणस्यापि मिथ्यात्व-मभ्युपगतप्रायमेव- कार्यकारणयोस्सालक्षण्यनियमात् । तस्मात्पारिशेष्याद्विशिष्ट-पक्षस्यैव श्रुतिसूत्रसम्मतत्वसिद्ध्या विशिष्टपक्षविषयकपरकीयं दूषणमखिलमपि श्रुतिसूत्रविरुद्धमित्यतो न श्रवणीयमित्यलमधिकेन ॥१२॥

---

पद'मित्यादिश्रुतयः परमेश्वरं नारायणात्परमेवाऽऽमनन्त्यस्तमेवार्थं स्वयं भगवानेव मत्परं ब्रह्मेति प्रब्रुवन् यथार्थीचकारेत्याशयः ।

अत्र केचित्—अनादिमदिति विच्छिद्य मतुपः प्रयोगश्श्लोकपूरणार्थ इति नैरर्थ्यमावेदयन्तः । परे च- मत्परं- अहं परो यस्य तन्मत्परं ब्रह्मेति ब्रह्मपदं जीवपरतयाऽवशतो विवृण्वन्तः; स्वकल्पितं गीताशास्त्रविरुद्धमित्यवघोष-यन्तीत्यलम् । नच क्षेत्रक्षेत्रज्ञविभागस्यैव प्रकृतत्वेन ब्रह्मपदस्य जीवपरत्वमे-वोचितमिति शङ्क्यम् । प्रकृते वक्ष्यमाणानां लक्षणानां सर्वेषामपि ब्रह्माधार-

अनाद्यपचारमूलेन पराभिध्यानेन तिरोहितसर्वज्ञत्वादिगुणस्यात्मन एव परमेश्वराद्वैलक्षण्यं न तिरोहितस्वरूपस्येत्याशयेन क्षेत्रज्ञस्य परमेश्वरसालक्षण्यमेव प्रतिपादयति- 'संसारमोक्षस्थितिबन्धहेतुः परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते'... र्भवति, निरञ्जनः परमं साम्यमुपैति', 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ, उत्तराच्चेदाविर्भूतस्वरूपस्तु' इत्यादिश्रुतिसूत्राणि जन्तोर्मलतिरोधानात्परस्तात्पाशापगमात्प्रसादपि परमेश्वरेण परमं साम्यमावेदयन्ति । तस्मादात्मनस्स्वरूपं परमेश्वरासाधारणैरेव लक्षणैः प्रतिपादयति सर्वतः पाणिपादमित्यादिना—

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतश्श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥१३॥

सर्वत इति । सर्वतस्सर्वदेहेषु पाणयः पादाश्चाचेतनास्स्वस्वव्यापारेषु प्रवर्तनीया यस्य क्षेत्रज्ञस्य सर्वेन्द्रियप्रवर्तकत्वेन परब्रह्मणश्च तथाविधमित्यर्थः । सर्वतोऽक्षिशिरोमुखं- सर्वतोऽक्षीणि शिरांसि मुखानि यस्य तत्, सर्वतस्सर्वत्र, श्रुतयश्श्रवांसि यस्य तत्, सर्वं स्वीयया ज्ञानदीप्त्याऽऽवृत्य तिष्ठति सर्वगतमित्यर्थः ॥१३॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥१४॥

सर्वेन्द्रियेति । सर्वाणीन्द्रियाणि तद्गुणान् विषयादींश्चाभासयतीति सर्वेन्द्रियगुणाभासं सर्वेन्द्रियरहितं- 'अपाणिपादो जवनो ग्रहीता' इतिश्रुतेः । असक्तं देहसङ्गरहितं, सर्वभृत्सर्वदेहखण्डनाशक्तं, निर्गुणं प्राकृतगुणरहितं, गुणभोक्तृ सत्त्वादीनां भोगे समर्थं चेत्यर्थः ॥१४॥

---

परत्वेनास्यापि ब्रह्मपरत्वस्यैव समुचितत्वात् । अन्यथा 'यद्ज्ञात्वाऽमृतमश्नुते' इति तदीयज्ञानस्य मुक्तिफलत्वावगमेन 'तमेवं विदित्वाऽमृत इह भवति, नान्यः पन्थाऽयनाय विद्यते, ईशं तं ज्ञात्वाऽमृता भवन्ती'त्यादिश्रुतिभिः परमेश्वरज्ञानस्यैव मोक्षफलकत्वाम्नानेन तद्विरोधापत्त्या गीताया वेदप्रतिषिद्धार्थकत्वतादवस्थ्यादिति दिक् ॥१२॥

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥१५॥

बहिरन्तश्चेति । भूतानां चराचररूपाणां बहिरन्तश्च यथा सुवर्णं कटकमकुटादीनामचरं चरं चराचरात्मकमित्यर्थः । सूक्ष्मत्वादतिसूक्ष्मत्वेनेन्द्रियागोचरत्वाद्ज्ञातुमशक्यं; अमानित्वादिगुणरहितानां दूरस्थं गुणवतामन्तिके वर्तत इत्यर्थः ॥

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तद्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥१६॥

अविभक्तमिति । भूतेषु चराचररूपेषु, अविभक्तं कारणरूपेणाभिन्नमपि विभक्तमिव कार्यरूपेण भिन्नमेव स्थितं परं ब्रह्म भूतेष्वविभक्तं ज्ञातृत्वरूपैकाकारतयाऽभिन्नमपि देवमानवादिषु भिन्नमिव स्थितं चेतनस्वरूपं, भूतभर्तृ- भूतानां प्राणिनां भर्तृ पोषकं ब्रह्म, भूतानां देहरूपेण सङ्गतानां पृथिव्यादीनां भर्त्रधिपतिरात्मा, ग्रसिष्णु प्रलये भक्षयितृ 'महाग्रासा'येति श्रुतेः, प्रभविष्णु प्रशासकं कार्यरूपेण प्रजननशीलमित्यर्थः ॥१६॥

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य निष्ठितम् ॥१७॥

ज्योतिषामिति । ज्योतिषामादित्यादीनामपि ज्योतिर्भासकं ब्रह्म 'येन सूर्यस्तपति तेज'सेत्यादिश्रुतेः, ज्योतिषां ज्ञानसाधनानामपि त्वगादीनामिन्द्रियाणां ज्योतिर्ज्ञानसाधनमित्यर्थः । आत्मन उत्क्रान्तौ त्वगादीनां ज्ञानसाधनत्वविरहादिति भावः । ज्ञानं ज्ञानगुणकं, ज्ञेयं वेदान्तैर्ध्यानयोगेन वा ज्ञानेन गम्यं ज्ञानसाधनेनावगम्यमित्यर्थः । सर्वस्य भूतजातस्य हृदये विष्ठितं प्रविष्टं- 'द्वासुपर्णा सयुजा सखाया'वित्यादिश्रुतेरित्यर्थः ॥१७॥

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥१८॥

इतीति । इत्येवं क्षेत्रं- महाभूतानीत्यादिना प्रोक्तं; ज्ञानं- अमानित्वमित्यादिना प्रोक्तं; ज्ञेयं- अनादिमत्परमित्यादिना समासतस्संग्रहेण प्रोक्तम् । मद्भक्तः परमेश्वरभक्त एतदुक्तं विज्ञाय मद्भावाय परमेश्वरसायुज्यरूपाय मोक्षायोपपद्यते योग्यो भवतीत्यर्थः ॥१८॥

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥१९॥

प्रकृतिमिति । प्रकृतिं पुरुषं द्वावप्यनादीति विद्धि । एवं विकारान् देहेन्द्रियादीन्गुणपरिणामभूतान्सुखदुःखमोहादीन् प्रकृतेस्सम्भूतान् विद्धीत्यर्थः ॥

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥२०॥

कार्येति । कार्यं शरीरं कारणानीन्द्रियाणि येषां कर्तृत्वे क्रियाकारित्वे पुरुषाधिष्ठिता प्रकृतिर्हेतुरित्युच्यते कपिलादिभिः पुरुषः प्रकृतिसंसृष्टस्सुखदुःखानां भोक्तृत्वहेतुः सुखदुःखानुभवाश्रय इति भावः ॥२०॥

पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान्गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥२१॥

पुरुष इति । प्रकृतिस्थः प्रकृतिसंसृष्टः पुरुषः प्रकृतिसम्भवान् प्रकृतिगुणभूतसत्त्वादिसञ्जातान्गुणान्सुखदुःखादीन् भुंक्ते । हि यस्माद्गुणेषु शब्दादिविषयेषु सङ्गः कामः सदसद्योनिजन्मसु, सन्ति देवादिजन्मानि, असन्ति पश्वादीनि तद्रूपेषु जन्मसु जन्मप्राप्तेः कारण काम एव जन्मकारणमित्यर्थः ॥२१॥

एवं प्रकृतिविवेकाभावात्पुरुषस्य संसारः, न तु स्वभावत इति व्यञ्जयितुं तस्य स्वरूपमाह—

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥२२॥

उपद्रष्टेति । उपद्रष्टा यज्ञकर्मणि ऋत्विग्यजमानेभ्योऽन्यः कर्मण्यव्यापृतः समीपस्थो गुणदोषाणामीक्षिता; स एव साक्षिभूत इत्यर्थः । अनुमन्ता--

---

प्रकृतिमिति । अनादीति । अनादेरीश्वरस्य शक्तित्वात्प्रकृतिस्त्वादिः, पुरुषोऽपि तदंशत्वादनादिरित्यर्थः ॥१९॥

पुरुष इति । कामः कारणमिति । सुखदुःखविषयकामनया शुभाशुभरूपकर्माचरणं तेन सदसद्योनिजन्मप्राप्तिश्चेति भावः ॥२१॥

उपद्रष्टेति । अत्र महेश्वर इत्यनेन पुरुषस्यातिरोहितस्वरूपस्य पर-

अनुमोदितेव स्थित इत्यर्थः । भर्ता- विधारकः, भोक्ता- पालकः, महेश्वरः-- ब्रह्मादीनामधिपतिः, परमात्मेति चायं पुरुषो निगद्यते ॥२२॥

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैस्सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥२३॥

य इति । यः पुरुषमात्मानमेवंविधगुणैस्सह प्रकृतिं चोक्तविधां जानाति स सर्वथा यथेच्छं वर्तमानोऽपि पुनर्न जायते मुक्तिं प्राप्नोत्येवेत्यर्थः ॥२३॥

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥२४॥

ध्यानेनेति । केचिदात्मनि देहे स्थितमात्मानं पुरुषं ध्यानेन समाधानात्मना मनसा पश्यन्ति साक्षात्कुर्वन्ति । अन्ये साङ्ख्येन प्रकृतिपुरुषविवेकज्ञानेन कर्मयोगेन च पश्यन्तीत्यर्थः ॥२४॥

अन्ये त्वेवमजानन्तश्श्रुत्वाऽन्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥२५॥

अन्ये त्विति । अन्ये त्वेवमुक्तलक्षणमात्मानं ज्ञातुमशक्ता अन्येभ्यो गुरुभ्यश्श्रुत्वा तमुपासते ध्यायन्ति । तेऽपि च श्रुतिपरायणाः श्रवणमात्रपरायणाः श्रद्दधाना मृत्युं संसारमतितरन्त्येवेत्यन्वयः ॥२५॥

यावत्संजायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ! ॥२६॥

यावदिति । यावत्किमपि सत्त्वं स्थावरं जङ्गमं वा यद्वस्तु सञ्जायते तत्सर्वमपि क्षेत्रक्षेत्रज्ञसंयोगात्प्रकृतिपुरुषसंयोगादेवेति विद्धि ॥२६॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥२७॥

सममिति । सर्वेषु स्थावरजङ्गमात्मकेषु भूतेषु जातितो गुणतश्च

---

ब्रह्मसाधर्म्यस्य परस्तान्निरूपितत्वात्तत्परं ब्रह्म महेश्वरशब्दितमेवेति निर्धार्यते॥२२॥

यावदिति । संयोगादेवेति । प्रकृतिपुरुषविवेकाभावादेव संसारः, तद्विवेकादेव मुक्तिरिति साङ्ख्यशास्त्राशय इत्यर्थः ॥२६॥

विषमेषु सममविशेषेण तिष्ठन्तं तेषु विनश्यत्स्वप्यविनश्यन्तमक्षयमात्मानं परमेश्वरं च यः पश्यति स एव पश्यति ज्ञानी; अन्ये त्वज्ञानिन एवेत्यर्थः ॥२७॥

समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥२८॥

सममिति । सर्वत्र सर्वभूतेषु सममविशेषेण समवस्थितमात्मनो नियन्तृतया स्थितमीश्वरं परमेश्वरं पश्यन्जानन्नात्मना स्वेनात्मानं स्वं न हिनस्ति न विनाशयति । तस्मात्परां गतिं मुक्तिमाप्नोतीत्यन्वयः ॥२८॥

समत्वमुपपादयति—

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥२९॥

प्रकृत्यैवेति । देहेन्द्रियादिरूपया प्रकृत्यैव सर्वशस्सर्वथा कर्माणि क्रियमाणान्यनुष्ठीयन्ते; आत्मानमकर्तारं नाहं करोमी ते यः पश्यति मनुते स पश्यति सम्यग्ज्ञानवानित्यर्थः ॥२९॥

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥३०॥

यदेति । यदा भूतपृथग्भावं भूतानां चराचररूपाणां पृथक्त्वं नानात्वमेकस्थमेकस्यामीश्वरशक्तिरूपायां प्रकृतौ प्रलयकाले स्थितं, ततः प्रकृत्या एव विस्तारं सृष्टिकाले च योऽनुपश्यति विजानाति, तथा तस्मिन्काले ब्रह्मशक्तिविशिष्टमीश्वरं सम्पद्यते प्राप्नोति परमेश्वरपरमसाम्यापत्त्या तत्तुल्यएव भवतीत्यर्थः ॥

अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ।
शरीरस्थोऽपि कौन्तेय! न करोति न लिप्यते ॥३१॥

अनादित्वादिति । अनादित्वादुत्पत्तिरहितत्वान्निर्गुणत्वात्प्राकृतगुणरहितत्वाच्च परमात्मा देहेन्द्रियादिभ्यः परो य आत्मा पुरुषोऽव्ययो नाशरहितोऽयं शरीरस्थो न किमपि कर्म करोति- शुभाशुभरूपेण तत्फलेन च लिप्तो न भवतीत्यर्थः॥३१॥

---

अनादित्वादिति । उत्पत्तिरहितत्वादिति । उत्पन्नस्यैव नश्वरत्वेन नाशरहित इत्यर्थः । प्राकृतगुणरहितत्वादिति । प्राकृतगुणानामेव नश्वरत्वेन तस्मादपि शाश्वत इत्यर्थः ॥३१॥

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥३२॥

यथेति । आकाशस्सर्वगतस्सौक्ष्म्यात्पङ्कादिभिर्नोपलिप्यते सङ्गतो यथा न भवति, तथैवात्मा पुरुषो देहे सर्वत्र विमले समले वाऽवस्थितोऽपि तद्गतेन मालिन्येन न लिप्तो भवतीत्यर्थः ॥३२॥

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ! ॥३३॥

यथेति । एको रविस्सर्वमपीमं लोकं यथा प्रकाशयति, तथा क्षेत्रज्ञोपि सर्वमपि क्षेत्रं प्रकाशयतीत्यर्थः ॥३३॥

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥३४॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्म-
पर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योग-
शास्त्रे श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञविभाग-
योगो नाम त्रयोदशोऽध्यायः ।

क्षेत्रेति । एवमुक्तविधं क्षेत्रक्षेत्रज्ञयोः प्रकृतिपुरुषयोरन्तरं वैलक्षण्यं भूतानां प्रकृतेर्मोक्षसाधनभूतममानित्वादिलक्षणं ज्ञानं च ज्ञानचक्षुषा ज्ञानदृष्ट्या विदुः पश्यन्ति ते ज्ञानिनः परमेश्वरं प्राप्नुवन्तीत्यर्थः ॥३४॥

इति श्रीमज्जगद्गुरुरेवणाचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्य-
नीलकण्ठभगवत्पादाराध्यकृतौ श्रीमद्भगवद्गीताभाष्ये
क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोऽध्यायः ।

---

क्षेत्रेति । वैलक्षण्यमिति । जडत्वचेतनत्वविकारित्वाविकारित्वादि-रूपमित्यर्थः ॥३४॥

इति श्रीमल्लोकाराध्य शिवयोगिमहोपाध्याय नागलिङ्गशिवाराध्य-
कृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां क्षेत्रक्षेत्रज्ञ-
विभागयोगो नाम त्रयोदशोऽध्यायः ।

---



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ।

---

पूर्वाध्यायान्ते 'यावत्सञ्जायते सत्त्व'मिति प्रकृतिपुरुषसंयोगस्य सृष्टिहेतुत्वमुक्तम् । नहि तस्य निरीश्वरसाङ्ख्यानामिव स्वातन्त्र्येण, किन्तु परमेश्वरेच्छयैवेति ब्रुवन् 'कारणं गुणसङ्ग' इत्युक्तगुणस्वरूपं च तेषां बन्धहेतुत्वं तद्विमोक्षमार्गं च बोधयिष्यन् भगवानाह—

श्रीभगवानुवाच—

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यद्ज्ञात्वा मुनयस्सर्वे परां सिद्धिमितो गताः ॥१॥

परमिति । भूयः पुनः ज्ञानानां कर्मादिविषयाणां परमुत्तमं सर्वोत्तमं मोक्षविषयत्वादित्यर्थः । तद्विशिनष्टि—यदित्यादिना । यद्ज्ञानं विदित्वा तन्मननपरास्सर्वेऽपि परां सिद्धिं मोक्षं गताः ॥१॥

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥२॥

इदमिति । इदं वक्ष्यमाणं ज्ञानमनुसन्धाय मम परमेश्वरस्य साधर्म्यं परममुक्तिमागताः प्राप्ताः- 'निरञ्जनः परमं साम्यमुपै'तीतिश्रुतेः । सर्गेऽपि ब्रह्माद्युत्पत्तिरूपे महाकल्पादावपि नोपजायन्ते; प्रलये ब्रह्मप्रलयेऽपि न व्यथन्ति न दुःखमनुभवन्तीत्यर्थः ॥२॥

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
सम्भवस्सर्वभूतानां ततो भवति भारत ! ॥३॥

ममेति । योनिस्सर्वस्यापि जगतः प्रसवस्थानं महद्ब्रह्म भिन्ना प्रकृतिरष्टधेति निगदिताऽचेतना मूलप्रकृतिः; तत्र तस्यां योनौ गर्भं जीवभूतामित्युक्तं चेतनजातरूपं दधाम्यादधामि; गर्भाधानमाचरामीत्यर्थः । ततस्तस्मात्परापरप्रकृतिद्वयसंयोगात्- 'बहुस्यां प्रजाये'येति परमेश्वरसङ्कल्पमूलात्सर्वभूतानां सम्भवो भवतीत्यर्थः ॥३॥

सर्वयोनिषु कौन्तेय! मूर्तयस्सम्भवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥४॥

सर्वयोनिष्विति । कौन्तेय ! सर्वासु देवगन्धर्वादिरूपासु पशुपक्ष्यादिरूपासु च योनिषु या मूर्तयः सम्भवन्ति तासां सर्वासामपि महद्ब्रह्म अचित्प्रकृतिरेव योनिरहं परमेश्वरो बीजप्रदो गर्भाधानकारितया पिता जनक इत्यर्थः ॥४॥

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥५॥

सत्त्वमिति । सत्त्वं रजस्तम इति त्रयः प्रसिद्धाः प्रकृतिसम्भवा गुणाः प्रकृतितस्सम्भवो येषान्ते तथाभूताः, प्रकृतिकार्ये देहे स्थितं देहिनं निबध्नन्ति स्वकार्यैः सुखदुःखमोहादिभिर्बन्धयन्तीत्यर्थः ॥५॥

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥६॥

तत्रेति । तत्र तेषां त्रयाणां मध्ये सत्त्वं निर्मलं स्फटिकमिव भास्वरं प्रकाशकं तस्माद्ज्ञानगुणेनात्मानं संयोजयति । किंचानामयं निर्बाधकं, तस्मात्सुखसङ्गेन बध्नाति । एवमहं ज्ञानी सुखी चेति भावं जनयति, तस्माद्देही ज्ञानसुखसाधनेषु कर्मसु प्रवर्तते । ततश्च तत्फलानुभवयोग्यासु योनिषु जायत इत्येवं सत्त्वं देहिनस्संसारनिदानं भवतीत्यर्थः ॥६॥

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय! कर्मसङ्गेन देहिनम् ॥७॥

रज इति । रज्यते विषयेषु पुरुषोऽनेनेति रागः कामस्स एवात्मा स्वरूपं यस्य तत्तथाभूतं रज इति विद्धि । किंच तृष्णाऽप्राप्तेऽर्थेऽभिलाषस्सङ्गः, प्राप्तेऽर्थे प्रीतिरासक्तिः तयोस्समुद्भवो यस्तत्तथाविधं; रजः कर्मसङ्गेन तत्साधकेषु कर्मसु सङ्गेन देहिनं निबध्नातीत्यर्थः ॥७॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत! ॥८॥

तम इति । तमस्त्वज्ञानजमज्ञानाज्जातमावरणशक्तिप्रधानात्प्रकृत्यंशात्सम्भूतं विद्धि । तस्मात्सर्वेषां देहिनां मोहनं भ्रान्तिजनकं, ततश्च प्रमादेनानवधानतयाऽऽलस्येन मान्द्येन निद्रया च देहिनं बध्नातीत्यर्थः ॥८॥

सत्त्वं सुखे संजयति रजः कर्मणि भारत!
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत! ॥९॥

सत्त्वमिति । सत्त्वं सुखे सञ्जयति सङ्गं जनयति, दुःखादिकारणे सत्यपि सुखाभिलाषिणमेव देहिनं करोतीत्यर्थः । रजः कर्मण्येव सञ्जयति, सुखादिकारणे सत्यपि कर्मस्वेव प्रवर्तयतीत्यर्थः । तमस्तु सत्त्वकार्यं ज्ञानमावृत्य प्रमादे सञ्जयतीत्यर्थः ॥९॥

गुणानां कार्यकरणकालमाह—

रजस्तमश्चाभिभूय सत्त्वं भवति भारत!
रजस्सत्त्वं तमश्चैव तमस्सत्त्वं रजस्तथा ॥१०॥

रज इति । रजस्तमसी उभेऽप्यभिभूय यदा विवर्धेते तदा सत्त्वं स्वकार्यं जनयति; तथा सत्त्वं तमश्चाभिभूय यदा रजो विवर्धेते तदा तत्स्वकार्यं जनयति । एवं तमोपि यदा रजस्सत्त्वं चाभिभूय विवर्धेते तदा कार्यं जनयतीत्यर्थः ॥१०॥

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥११॥

सर्वद्वारेष्विति । अस्मिन् भोगायतने देहे सर्वद्वारेषु चक्षुरादीन्द्रियेषु ज्ञानं रूपादिविषयज्ञानरूपः प्रकाश उपजायते तदा सत्त्वं विवृद्धमिति जानीयादित्यर्थः ॥११॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमस्स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ! ॥१२॥

लोभ इति । लोभोऽत्याशा, प्रवृत्तिर्निरन्तरं प्रयत्नपरता कर्मणामारम्भः, अशमोऽनुपरमः, स्पृहा वाञ्छा, एतानि रजसि प्रवृद्धे सति जायन्त इत्यर्थः ॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ! ॥१३॥

अप्रकाश इति । अप्रकाशो विवेकराहित्यं, अप्रवृत्तिरनुद्यमः, प्रमादोऽनवधानता, मोहो ज्ञानवैपरीत्यं, एतानि तमसि प्रवृद्धे सति जायन्त इत्यर्थः ॥

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥१४॥

यदेति । यदा सत्त्वं प्रवृद्धं भवति तदा देही प्रलयं मृत्युं यातिचेदुत्तमविदामुपासनपराणां प्राप्यानमलान्पुण्यफलरूपान् दिव्यलोकानाप्नोतीत्यर्थः ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥१५॥

रजसीति । रजसि रजोगुणे प्रवृद्धे सति देही प्रलयं तगश्चेत्- कर्मसङ्गिषु मिश्रकर्मफलेषु मनुष्यलोकेषु जायते; तमसि तमोगुणे प्रवृद्धे सति मृतश्चेत्- मूढयोनिषु ज्ञानरहितेष्वर्थात्पशुयोनिषु जायत इत्यर्थः ॥१५॥

कर्मणस्सुकृतस्याहुस्सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१६॥

कर्मण इति । कर्मणस्सत्त्वप्रधानस्य सुकृतस्य सात्त्विकं सत्त्वगुणजन्यं ज्ञानं सुखं च फलमिति कपिलादय आहुरित्यर्थः । तथा रजसो रजोगुण-

प्रधानस्य कर्मणो दुःखं फलमिति, तमसस्तमोगुणप्रधानस्य कर्मणोऽज्ञानं फलमिति तद्विद आहुरित्यर्थः ॥१६॥

सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥१७॥

सत्त्वादिति । सत्त्वाद्ज्ञानं सञ्जायते; तस्मात्सात्त्विककर्मणस्तदनुरूपं फलं सुखं सञ्जायते; रजसो लोभस्सञ्जायते तस्य दुःखनिदानतया तन्मूलकस्य कर्मणः फलं दुःखं भवति । तमसः प्रमादो मोहोऽज्ञानं भवतीत्यर्थः ॥१७॥

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥१८॥

ऊर्ध्वमिति । सत्त्वस्थास्सत्त्ववृत्तिशीला ऊर्ध्वं सत्त्ववृत्तितारतम्यादिन्द्रादिलोकानन्दविशेषशालिनो लोकान्प्रति गच्छन्ति; राजसा रजोगुणशीलास्तु मध्ये मनुष्यलोक एव पुनः पुनर्जन्मशालिनस्तिष्ठन्ति; अथ तमोगुणशालिनस्तु निकृष्टपश्वादिजन्मरूपं निरयरूपं वा गच्छन्तीत्यर्थः ॥१८॥

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥१९॥

नेति । यदा सात्त्विकाहारनिषेवणेन वा फलाभिसन्धिरहितपरमेश्वराराधनपूर्वककर्मानुष्ठानेन वा द्रष्टा विवेकी गुणेभ्यो बुद्धिरूपेण परिणतेभ्यः प्रकृतिगुणेभ्योऽन्यमितरं कर्तारं नानुपश्यति, तेभ्यः कर्ताऽन्यो नास्तीति विजानाति; तेभ्यः परमात्मानं चाकर्तारं विजानाति; तदा मद्भावं मुक्तिं प्राप्नोतीत्यर्थः ॥१९॥

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥२०॥

गुणानिति । अयं देही देहस्य समुद्भवो यैस्तान्त्रीन्गुणान् सत्त्वरजस्तमसोऽतिक्रम्य जन्म च मृत्युश्च जरा च दुःखं च तैर्विमुक्तो रहितस्सन्नमृतं मुक्तिमवाप्नोतीत्यर्थः ॥२०॥

अर्जुन उवाच—

कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो !
किमाचारः कथं चैतां स्त्रीन्गुणानतिवर्तते ॥२१॥

कैरिति। त्रीनेतान्गुणानतीतः कैर्लिङ्गैरुपलक्षितो भवति स कीदृग्विधाचारवांश्च भवति ? एतांस्त्रीन्गुणान्कथं चातिवर्तते, तत्कथयेत्यर्थः ॥२१॥

श्रीभगवानुवाच—

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव !
न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि कांक्षति ॥२२॥

प्रकाशमिति। प्रकाशं सर्वद्वारेष्विति पूर्वोक्तं सत्त्वकार्यं, प्रवृत्तिं रजःकार्यं, तथा मोहं तमःकार्यं च सम्प्रवृत्तानि प्राप्तानि न द्वेष्टि, निवृत्तानि न कांक्षति न कामयते ॥२२॥

उदासीनवदासीनो गुणैर्यो न विचाल्यते।
गुणा वर्तन्त इत्येवं योऽवतिष्ठति नेङ्गते ॥२३॥

उदासीनवदिति। उदासीनवत्तटस्थवदासीनस्स्थितो यो गुणैस्स्वगुणैर्ज्ञानानन्दादिभिर्न विचाल्यते न प्रच्याव्यते; गुणाः प्रकृतिगुणा गुणेषु स्वकार्येषु वर्तन्त इति तूष्णीमवतिष्ठति नेङ्गते न चलति ॥२३॥

समदुःखसुखस्स्वस्थस्समलोष्टाश्मकाञ्चनः।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥२४॥

समेति। सुखदुःखयोस्तुल्यभावः स्वस्थस्स्वरूपनिष्ठः समानि लोष्टाश्मकाञ्चनानि यस्य तादृशः प्रियाप्रिययोस्स्तुतिनिन्दयोरपि समबुद्धिः ॥२४॥

मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः।
सर्वारम्भपरित्यागी गुणातीतस्स उच्यते ॥२५॥

मानावमानयोरिति। मानावमानयोर्मित्रपक्षे विपक्षे च तुल्यः सर्वारम्भपरित्यागी दृष्टादृष्टफलान्सर्वानप्यारम्भान् परित्यक्तुं शीलं यस्य स गुणातीत इत्युच्यते ॥२५॥

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥२६॥

मामिति । यो मां परमेश्वरमव्यभिचारेण स्थिरेण भक्तियोगेन सेवते स एतान्गुणानतीत्यातिक्रम्य ब्रह्मभूयाय मुक्त्यै कल्पते योग्यो भवतीत्यर्थः ॥

ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥२७॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्म-
पर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योग-
शास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभाग-
योगो नाम चतुर्दशोऽध्यायः ।

ब्रह्मण इति । यस्मादहं परमेश्वरो ब्रह्मणः प्रकृतेरव्ययस्य शाश्वतस्यामृतस्य मोक्षस्य नित्यस्य धर्मस्यैकान्तिकस्य सर्वोत्तरस्यानन्दस्य च प्रतिष्ठा आधारभूत इत्यर्थः ॥२७॥

इति श्रीमज्जगद्गुरुश्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्य-
नीलकण्ठभगवत्पादाराध्यकृतौ श्रीमद्भगवद्गीताभाष्ये
गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ।

---

इति श्रीमल्लोकाराध्य शिवयोगिमहोपाध्याय नागलिङ्गशिवाराध्य-
कृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां गुणत्रय-
विभागयोगो नाम चतुर्दशोऽध्यायः ।

---



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## पुरुषोत्तमप्राप्तियोगो नाम पञ्चदशोऽध्यायः ।

पूर्वाध्यायान्ते 'मां च योऽव्यभिचारेण भक्तियोगे'नेति भक्तियोगस्यैव मुक्तिसाधनत्वमुक्तम् । तस्य संसारे वैराग्यमन्तरेणालभ्यत्वात्संसारस्य मोक्षमार्गावरोधतया तिर्यक्कृतवृक्षरूपेण स्थितत्वेन तस्य छेदनमन्तरा मुक्तिनिलयं प्रति गन्तुमशक्यत्वेन च तद्विच्छेदनमावश्यकमिति सूचयितुं संसारं वृक्षरूपेण वर्णयति भगवान्—

श्रीभगवानुवाच—

ऊर्ध्वमूलमधश्शाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥१॥

ऊर्ध्वमूलमिति । ऊर्ध्वमूलं 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर'मिति सर्वाध्यासीतः परमेश्वर एवोर्ध्वं मूलं यस्य तं, अधश्शाखं- अधस्ततोऽधोदेशवर्तिनो हिरण्यगर्भादयश्शाखा यस्य तं, अश्वत्थं- विनश्वरतया श्वः प्रभातपर्यन्तमपि न स्थास्यतीति विश्वसितुमनर्हत्वात् 'ऊर्ध्वमूलोऽर्वाक्शाख एषोऽश्वत्थस्सनातन' इत्याद्याश्श्रुतय आहुरित्यर्थः । छन्दांसि वेदा यस्य पर्णानि धर्माधर्मप्रतिपादनमुखेन छायातुल्यैः कर्मफलैस्संसारवृक्षस्य सर्वजीवाश्रयत्वकारणतया वेदाः पर्णतुल्या इत्यर्थः । यस्तं संसारमेवंविधं वेद स विद्वान् वेदविदेति जानीयादित्यर्थः ॥१॥

अधश्चोर्ध्वं च प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ॥२॥

अध इति । ये दुष्कृतिनः कपूयचरणास्तेऽधश्शाखास्थानीयाः, अथ ये सुकृतिनो रमणीयचरणा देवादियोनयस्ते ऊर्ध्वं प्रसृताश्शाखा गुणैः प्रकृति-गुणैस्सत्त्वादिभिर्देहेन्द्रियविषयादिरूपेण परिणतैर्जलसेचनैरिव प्रकर्षेण वृद्धा विषयाश्शब्दादयः प्रवाल इव रागविषयत्वादित्यर्थः । अधश्च चशब्दादूर्ध्वं चेत्यर्थः । मूलान्यनुसन्ततानि मुख्यं मूलं परमेश्वर एवेत्यान्यनुमूलानीति भावः । अनुसन्ततानि विरूढान्यनुमूलान्युत्तमाधमजन्ममूलानि धर्माधर्मरूपाणि; तानि हि कर्मानुबन्धीनि शुभाशुभकर्मभवानि तानि, मनुष्यलोके मनुष्य एव लोकः तत्र मनुष्याधिकारित्वाच्छ स्तस्ये ते मनुष्यस्यै । कर्माधिकारित्वादिति भावः ॥

अथ कर्तव्यमाह—

न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ॥३॥

नेति । इहात्र लोके स्थितैश्चेतनैरस्य संसारवृक्षस्य रूपं तदा यथाऽव-स्थितमन्तोऽप्रमादिर्मूलं सम्प्रतिष्ठा स्थितिश्च नोपलभ्यते न ज्ञायते । एवंविधं सुविरूढान्यत्यन्तवृद्धानि मूलानि यस्य तं दुरुच्छेद्यमित्यर्थः । एनमश्वत्थं संसार-महावृक्षं दृढेन सुस्थिरेणासङ्गशस्त्रेण पुत्रदारवित्तादिविषयवैराग्यरूपेण शस्त्रेण छित्त्वा विच्छिद्य ॥३॥

ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥४॥

तत इति । ततस्तदनन्तरं तद्वेदान्तप्रसिद्धं पदं ब्रह्म परमेश्वरः परि-मार्गितव्यमुपास्य इत्यर्थः । 'सोऽन्वेष्टव्यस्स विजिज्ञासितव्य' इति श्रुतेः । परमेश्वरं विशिनष्टि- यस्मिन् यत्र गताः प्रविष्टा भूयः पुनर्न निवर्तन्ति नावर्तन्ते—

---

तत इति । शरणं गतोऽस्मीति । एतेन स्वयं भगवानेव स्वस्यापि प्रपत्तव्यं परमेश्वरमाचक्षाणः सर्वेश्वरत्वसर्वोपास्यत्वप्रतिपादकत्वावयेषु स्वेन प्रयुक्त-

'न स पुनरावर्तत' इति श्रुतेः। अहं तमाद्यं ममापि कारणभूतं पुरुषं परमेश्वरमेव प्रपद्ये शरणं गतोऽस्मि। यतो यस्मात्पुराणी प्रवृत्तिः श्रु- 'स ईक्षत लोकान्नु सृजा' इति बहुभवनसङ्कल्परूपा इच्छाशक्तिः प्रसृता प्रादुरासीत्--'शिव एव केवलः, तदक्षरं, तत्सवितुर्वरेण्यं, प्रज्ञा च तस्मात्प्रसृता पुरा'णीति श्रुतिभिः ॥४॥

तादृशपरमेश्वरप्राप्तियोग्यानाह—

निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥५॥

निर्मानमोहा इति। मानोऽहङ्कारः, मोहो मौढ्यं, द्वावपि निर्गतौ येभ्यस्तथाविधाः, जितो दारादिसङ्गदोषो यैस्ते तादृशाः, अध्यात्मनित्याः परमेश्वरनिष्ठापराः, विनिवृत्तो विशेषेण निवृत्तः कामो येभ्यस्ते, सुखदुःखसंज्ञैस्सुखदुःखहेतुत्वात्तत्संज्ञैः, द्वन्द्वैः शीतोष्णादिभिः, विमुक्तास्त्यक्ताः, अमूढा ज्ञानिनः, अव्ययं शाश्वतं, तत्पदं परमेश्वरं, गच्छन्ति प्राप्नुवन्तीत्यर्थः ॥५॥

तमेव गन्तव्यं परमेश्वरं विशिनष्टि—

न तद्भासयते सूर्यो न शशाङ्को न पावकः।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥६॥

न तदिति। सूर्यश्शशाङ्कः पावकोऽपि तत्परमेश्वरं भासयितुं नालमित्यर्थः। 'न तत्र सूर्यो भा'तीति श्रुतेरित्यर्थः। मुक्ता यद्गत्वा न निवर्तन्ते ततो मम परमेश्वरस्यैव धाम स्थानमित्यर्थः। 'न स पुनरावर्तत' इतिश्रुतेः॥

---

मस्मच्छब्दमन्तर्यामिदृष्ट्या परमेश्वरमवबोधयतीति स्पष्टीचकारेति यावत्। अथात्र परे गीतां भागवतीमपि स्वायत्तीकर्तुं व्याचिख्यासवः पदार्थविपर्यासकारिणमिति शब्दमध्याहृत्य केचित्प्रपद्य इति परस्य प्रपद्येतेति परस्मैपदमात्मनेपदत्रयोत्तमपुरुषं तदन्यतया च व्यत्यस्य केचित्प्रपद्येदित्यपपाठं प्रकल्प्य प्रपद्य इयत इत्यवयवान् विच्छिद्य च कतिचित्तदीयं भावं स्वानुकूलतया व्यत्यासयितुं यतमानाः प्रतिकूलां दिव्यकन्यामवयवभङ्गमाकर्षन्त इवासुरास्स्वस्वमतान् भगवतोऽसम्मतानित्येवावेदयन्तीति दिक् ॥४॥

एवं पतिस्वरूपं प्रतिपाद्य पशुस्वरूपं प्रतिपादयति—

**ममैवांशो जीवलोके जीवभूतस्सनातनः ।**
**मनष्षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥७॥**

**ममेति** । जीवलोके जीवानामावासभूते पाशमये जगति जीवभूतः प्राणधारितया सनातनोऽनादित्वेन स्थितो मम परमेश्वरस्यांशभूत एव- 'अंशो नानाव्यपदेशा'दिति सूत्रात् । स प्रकृतिस्थानि प्रकृतिपरिणामरूपदेवमानवादिशरीरनिष्ठानि, मनष्षष्ठानि मनस्सहितानीन्द्रियाणि श्रोत्रादीनि ज्ञानेन्द्रियाणि पञ्चापि कर्षति भोगार्थमाकर्षतीत्यर्थः ॥७॥

इन्द्रियाकर्षणकालमाह —

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥८॥**

**शरीरमिति** । यतो यदा शरीरं शरीरान्तरमवाप्नोति यदुत्क्रामति यस्माच्छरीराच्चोद्गच्छति, तदा तदेश्वरः प्राणेन्द्रियाणामधिपतिर्जीवो वायुराशयात्कुसुमादिस्थानाद्गन्धानिवैतानीन्द्रियाणि गृहीत्वा संयाति गच्छतीत्यर्थः ॥८॥

इन्द्रियजातं तद्ग्रहणप्रयोजनं च निरूपयति—

**श्रोत्रं चक्षुस्स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥९॥**

**श्रोत्रमिति** । अयं जीवश्श्रोत्रादीनि बाह्यानि पञ्च, आन्तरमिन्द्रियं मनश्चाधिष्ठायाऽऽश्रित्य विषयान्शब्दादीनुपसेवते भुंक्त इत्यर्थः ॥९॥

**उत्क्रामन्तं स्थितं वापि भुंजानं वा गुणान्वितम् ।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥१०॥**

**उत्क्रामन्तमिति** । उत्क्रामन्तं देहान्तरं गन्तुमस्माच्छरीरादुद्गच्छन्तं वा स्थितं वा भुञ्जानं विषयान्सेवमानं वा गुणैस्सुखदुःखादिभिस्सहितमेनं विमूढा आत्मानात्मविवेकरहिता नानुपश्यन्ति न जानन्ति; विवेकिन एव पश्यन्तीत्यर्थः ॥१०॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥११॥

यतन्त इति । यतन्तो ध्यानादियत्नपरा योगिन एवात्मनि शरीरेऽवस्थितमेनं जीवं पश्यन्ति; यतन्तः प्रयत्नपरा अप्यकृतात्मानश्चित्तशुद्धिरहिता अचेतसो मन्दधिय एनं न पश्यन्ति न जानन्तीत्यर्थः ॥११॥

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥१२॥

यदिति । आदित्यस्थितं चन्द्रमस्यग्नौ च स्थितं यद्यत्तेजोऽखिलं जगद्भासयते प्रकाशयति, तत्तेजो मामकं परमेश्वरस्य तेज एवेति विद्धि ॥१२॥

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीस्सर्वास्सोमो भूत्वा रसात्मकः ॥१३॥

गामिति । अहं परमेश्वरो गां भुवमाविश्य तत्र स्थित्वेत्यर्थः । 'यः पृथिव्यां तिष्ठ'न्निति श्रुतेः । ओजसा बलेन भूतानि तत्र वर्तमानानि धारयामि बिभर्तीत्यर्थः । स एव रसात्मकोऽमृतमयस्सन्सोमो भूत्वा चन्द्रान्तर्यामित्वेन स्थित्वेत्यर्थः । 'यश्चन्द्रमसि तिष्ठ'न्निति श्रुतेः । सर्वा ओषधीर्व्रीह्यादीन्पुष्णामि संवर्धयतीत्यर्थः ॥१३॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥१४॥

अहमिति । अहं परमेश्वरो वैश्वानरो भूत्वा जाठराग्निरूपस्सन् प्राणिनां देहमाश्रितो देहवर्तिप्राणापानाभ्यां सहितश्चतुर्विधं भक्ष्यभोज्यलेह्यचोष्यरूपमन्नं पचामि रसरक्तादिरूपेण पाचयामीत्यर्थः ॥१४॥

---

अहमिति । भक्ष्येति । दन्तैरवखन्ड्य यद्भक्ष्यते तद्भक्ष्यं, जिह्वया विलोड्य यद्भुज्यते तद्भोज्यं, अथ जिह्वायां निक्षिप्य रसास्वादेन निगीर्यते पायसादि तल्लेह्यं, तथा दन्तैर्निष्पीड्य सारांशं निगीर्यते तच्चोष्यमिति विशेषः ॥१४॥

सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥१५॥

सर्वस्येति । अहं परमेश्वरः सर्वस्य जङ्गमजातस्य हृदि हृदये सन्निविष्टः प्रविश्य स्थितः- 'य आत्मनि तिष्ठ'न्नित्यादिश्रुतेः । तस्मात्स्मृतिः पूर्वानुभूतार्थविषयिणि ज्ञानं विषयेन्द्रियसम्प्रयोगजन्यं चापोहनं तयोरपायश्च- चेतनस्य भवति । अशेषैरखिलैरपि वेदैर्वेद्योऽहं परमेश्वर एव । एवं वेदान्तकृद्वेदार्थविच्च परमेश्वर एवेत्यर्थः । 'ईशानस्सर्वविद्याना'मिति श्रुतेः ॥१५॥

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१६॥

द्वाविति । क्षरश्चाक्षरश्चेतीमौ द्वौ पुरुषौ लोके प्रसिद्धौ । तत्र सर्वाणि भूतानि चेतनशरीराणि क्षर इति निगद्यन्ते; कूटस्थो देहेषु नश्यत्स्वपि कूटः शिलाराशिरिव निर्विकारोऽत्राक्षर इत्युच्यते- 'क्षरं प्रधानममृताक्षरँ हरः क्षरात्मानावीशते देवलोक' इति श्रुतेः ॥१६॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥१७॥

उत्तम इति । अन्यः क्षराक्षरशब्दिताभ्यां पाशपशुभ्यामन्यो विलक्षणत्वादर्थान्तरभूत उत्तमः परमः पुरुषः परमात्मेति सर्वेषामप्यात्मनामन्तर्यामितया नियन्तृत्वात्परमात्मेति निगद्यत इत्यर्थः । अथ परमात्मानं निर्धारयति— य इति । अव्ययश्शाश्वतो य ईश्वरो लोकवेदयोरनन्यविषयेश्वरशब्दाभिधानो लोकत्रयमखिलमपि जगदाविश्य 'यः पृथिव्यां तिष्ठ'न्नित्यादिश्रुतेः । सर्वत्रापि तिष्ठन् बिभर्ति धारयतीत्यर्थः ॥१७॥

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥१८॥

यस्मादिति । यस्मात्कारणादहं परमेश्वरः क्षरं नश्वरं पाशतत्त्व-

---

द्वाविति । शरीराणीति । शरीराणां पुरुषोपाधिभूतत्वात्पुरुषशब्दाभिधेयत्वमिति भावः ॥१६॥

मतीतः; अक्षरादनीश्वरात्पशुतत्त्वादप्युत्तमः परमः। अतः कारणाल्लोके वेदे च पुरुषोत्तम इति प्रथितः प्रसिद्ध इत्यर्थः ॥१८॥

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्।
स सर्वविद्भजति मां सर्वभावेन भारत! ॥१९॥

य इति। यो मां परमेश्वरमेवं पशुपाशविलक्षणमसम्मूढो निश्चितमतिः पुरुषोत्तमं परमात्मानं जानाति सर्ववित्पारमेश्वरतत्त्वविज्ञानेनैकविज्ञानेन सर्व-विज्ञानस्य श्रुतिप्रसिद्धत्वात्सर्वज्ञस्स भक्तवरो मां परमेश्वरं सर्वभावेन 'सर्वो वै रुद्र' इति श्रुत्युक्तविधया भजति सेवत इत्यर्थः ॥१९॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ!
एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत! ॥२०॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्म-पर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योग-शास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमप्राप्ति-योगो नाम पञ्चदशोऽध्यायः।

इतीति। इत्युक्तप्रकारेण गुह्यतमं परमरहस्यभूतमिदं शास्त्रं तत्त्वशास्त्रं मयोक्तम्। एतद्विदित्वा बुद्धिमान् ज्ञानी कृतकृत्यः कृतार्थश्च स्यादित्यर्थः ॥

इति श्रीमज्जगद्गुरुश्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्य-नीलकण्ठभगवत्पादाराध्यकृतौ श्रीमद्भगवद्गीताभाष्ये पुरुषोत्तमप्राप्तियोगो नाम पञ्चदशोऽध्यायः।

---

इति श्रीमल्लोकाराध्य शिवयोगिमहोपाध्याय नागलिङ्गशिवाराध्य-कृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां पुरु-षोत्तमप्राप्तियोगो नाम पञ्चदशोऽध्यायः।



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः ।

नवमेऽध्याये 'मोघाशा' इत्यादिना दैव्यादिप्रकृतयः सूचितास्तास्स विस्तरं दर्शयितुमाह—

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥१॥

**अभयमिति ।** अभयं भयराहित्यं, सत्त्वसंशुद्धिश्चित्तशुद्धिः, ज्ञानयोगव्यवस्थितिः परमेश्वरज्ञानसाधनभूतयोगनिष्ठा, दानं त्यागशीलता, दमो बाह्येन्द्रियनिग्रहः, यज्ञश्शिवयजनं, स्वाध्यायः श्रीरुद्रादिपारायणं, तपः सोमवारव्रतादि, आर्जवमकुटिलत्वं ॥१॥

अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम् ।
दया भूतेष्वलोलत्वं मार्दवं ह्रीरचापलम् ॥२॥

**अहिंसेति ।** अहिंसा परबाधनराहित्यं, सत्यं यथार्थभाषणं, अक्रोधश्चित्तविकारराहित्यं, त्याग आशात्यागः- दानस्य प्रागुक्तत्वात्, शान्तिश्चित्तस्योपशमः, अपैशुनं परदोषप्रकाशनाभावः, भूतेषु दया दुःखितेषु करुणा, अलोलत्वं स्थैर्यं, मार्दवमक्रूरता, ह्रीरकार्यविषये लोकात्त्रपा, अचापलं व्यर्थक्रियाभावः ॥२॥

तेजः क्षमा धृतिश्शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ! ॥३॥

तेज इति । तेजः प्रागल्भ्यं, क्षमा स्वस्य परिभवे सत्यप्यक्रोधः, धृतिर्दुःखादौ स्थिरचित्तता, शौचं बाह्याभ्यन्तरशुद्धिः, अद्रोहोऽजिघांसता, नातिमानिताऽऽत्मन्यतिपूज्यताभावराहित्यं, एते गुणा दैवीं देवयोग्यां सम्पदं सात्त्विकीमभिजातस्य प्रधानतया परिगृह्य जातस्य पुराकृतसुकृतस्य भवन्तीत्यर्थः ॥

दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ ! सम्पदमासुरीम् ॥४॥

दम्भ इति । दम्भः ख्यातिकामनया धर्माचरणं, दर्पो गर्वः, अतिमानस्स्वातिशयः, क्रोधः, पारुष्यमकाठिन्यं, अज्ञानमविवेकः, एतेऽवगुणा आसुरीं राक्षसयोग्यां सम्पदं रजोगुणातिशयं प्रधानीकृत्य जातस्य भवन्तीत्यर्थः ॥

द्वयोः फलविशेषमाह—

दैवीसम्पद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचस्सम्पदं दैवीमुपजातोऽसि पाण्डव ! ॥५॥

दैवीति । दैवी अभयमित्यादिना निगदिता सम्पद्विमोक्षाय मोक्षफलाय भवति हेतुरित्यर्थः । आसुरी दम्भ इत्यादिनोक्ता राक्षससम्पन्निबन्धनायाऽविरत-संसारानुभवाय च भवति । हे पाण्डव ! त्वं दैवीं देवयोग्यां सात्त्विकीमेव सम्पदमभिजातः । तस्मान्मोक्षायार्हसीति भावः ॥५॥

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ ! मे शृणु ! ॥६॥

द्वाविति । अस्मिन् लोके मनुष्यलोके दैवसम्प्रयुक्तः, आसुर आसुर-सम्प्रयुक्तश्च द्वौ द्विविधौ भूतसर्गौ समुदायौ स्तः । तयोर्दैवो दैवसम्प्रयुक्तः; विस्तरशस्सविस्तरं प्रोक्तः । पार्थ ! मे मत्त आसुरं राक्षससम्प्रयुक्तमेव समुदायं तद्गुणपरित्यागाय शृण्वित्यर्थः ॥६॥

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाऽऽचारो न सत्यं तेषु विद्यते ॥७॥

प्रवृत्तिमिति । आसुरा असुरसम्प्रयुक्ता जना धर्मे प्रवृत्तिमधर्मान्निवृत्तिं च न विदुः । तस्मात्तेषु शौचं सदाचारः, सत्यमपि न विद्यत इत्यर्थः ॥७॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥८॥

असत्यमिति । ते आसुरसम्प्रयुक्ता जनाः, जगदसत्यं मिथ्याभूतं, अप्रतिष्ठं धर्माधर्मरूपप्रतिष्ठारहितं, अनीश्वरं नास्ति कर्तेश्वरो यस्य तत्तथाविधं, तर्हि कारणं विना कथं कार्योत्पत्तिरितिचेत्- अपरस्परसम्भूतं स्त्रीपुरुषसंयोगसम्भवं, तस्मात्कामहैतुकं स्त्रीपुरुषसंयोगस्य कामहेतुतया काम एवास्य जगतः कारणं; ततोऽन्य ईश्वरो नास्तीति वदन्तीत्यर्थः । असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरा इत्यपि प्राचीनकोशेषु पाठो दृश्यते; अनीश्वरा ईश्वरः कारणं नास्ति न भवतीति वा तदर्थः ॥८॥

एतां दृष्टिमवष्टभ्य नष्टाऽऽत्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥९॥

एतामिति । एतामुक्तविधां दृष्टिं नास्तिकानां तन्त्रमवष्टभ्य प्रमाणीकृत्य नष्टात्मानो नष्टचित्ता अल्पमतयः, उग्रं क्रूरकर्म येषां ते तथाभूताः, जगतो जनसमुदायस्याऽहिता द्रोहिणः, क्षयाय प्रभवन्ति जायन्ते ॥९॥

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥१०॥

काममिति । दुष्पूरं पूरयितुमशक्यं काममभिलाषमाश्रित्य दम्भादिसहिता मोहवशाद्दुर्दानान्प्रतिगृह्णन्तोऽपवित्रचरिताः प्रवर्तन्त इत्यर्थः ॥१०॥

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥११॥

चिन्तामिति । प्रलयो मरणं तदेवान्तो यस्यास्तामपरिमेयां दुरन्तां

चिन्तामश्रिताः कामोपभोग एव परमपुरुषार्थो येषां ते एतावदिति ततोऽन्यं नास्तीति दृढनिश्चयाः, तथाच सूत्रं वा, स्मृतिर्वा 'कामपरैकः पुरुषार्थ' इति ॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥१२॥

आशेति । आशा एव पाशास्तेषां शतैर्बद्धाः कामक्रोधपराः कामोपभोगार्थमन्यायेन कूटसाक्ष्यादिनाऽर्थसञ्चयान् धनमादातुमीहन्त इत्यर्थः ॥१२॥

तेषां वाञ्छाविशेषान् दर्शयति—

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥१३॥

इदमिति । अद्येदं धनं मया लब्धं; इतःपरं मनोरथं लभिष्ये; इदानीमिदं धनमस्ति; इदं पुनरागमिष्यति ॥१३॥

असौ मया हतश्शत्रुर्हनिष्ये चाऽपरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥१४॥

असाविति । अयं शत्रुर्मया हतः; एवमन्यानपि हनिष्ये; अहं प्रभुः; अहं भोगी; अहं बलवान् ; अहं सुखी ॥१४॥

आढ्योऽभिजनवानस्मि कोऽन्योस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥१५॥

आढ्य इति । अहं धनी, अहं कुलीनः, मत्तुल्यः कोऽन्योऽस्ति ? अहं सोमेन यक्ष्ये, अहं धनं दास्यामि, अहं हर्षप्रकर्षमनुभविष्यामीत्यज्ञानेन विमोहिताः ॥१५॥

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥१६॥

अनेकेति । एवंविधैरनेकैस्सङ्कल्पैरनेकविधभ्रान्ता मोहजालेन विवशीभूताः सन्तः कामभोगेषु प्रसक्ता अत्यासक्ता अशुचौ विण्मूत्रादिमये नरके पतन्तीत्यर्थः ॥१६॥

आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाऽविधिपूर्वकम् ॥१७॥

आत्मसम्भाविता इति । अहमेव श्रेष्ठ इति स्वयमेव स्वं बहु मन्वानाः स्तब्धा विनयरहिता धनेन सम्भूताभ्यां मदमानाभ्यां सहिता दम्भेन ख्यातिकामनया नाममात्रैर्यज्ञैरविधिपूर्वकमेव यजन्त इत्यर्थः ॥१७॥

अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥१८॥

अहङ्कारमिति । अहङ्कारं गर्वं बलं दर्पादींश्चाश्रितास्सन्तः स्वीयेषु परकीयेषु च देहेष्वन्तर्यामितया स्थितं मां परमेश्वरं प्रद्विषन्तोऽभ्यसूयकाः परोत्कर्षासहनपरा नाममात्रयज्ञैर्यजन्त इति पूर्वेणान्वयः ॥१८॥

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१९॥

तानिति । तानसद्वृत्तान् द्विषतः परमेश्वरमविश्वस्य यथेष्टकर्मकारिणोऽशुभान्पापचेतसो नराधमानासुरीषु राक्षससम्पद्विशिष्टासु योनिषु व्याघ्रादिजन्मसु रक्षःप्रकृतियुतासु मनुष्यजन्मसु च सततं क्षिपामि पातयामीत्यर्थः ॥१९॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय! ततो यान्त्यधमां गतिम् ॥२०॥

आसुरीमिति । आसुरीं योनिं प्राप्ता मूढा मां परमेश्वरमप्राप्यैवाधमां ततस्ततो निकृष्टजन्मानोऽधोगतिमेव प्राप्नुवन्तीत्यर्थः ॥२०॥

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥२१॥

त्रिविधमिति । कामः क्रोधो लोभ इति नरकस्य त्रिविधं द्वारं तत्प्राप्तिहेतुत्वात्; अत एवात्मनस्स्वस्य नाशनं सद्गतेविनाशकरमित्यर्थः । तस्माद्धेतोरेतत्त्रयं त्यजेदित्यर्थः ॥२१॥

त्यागे महाफलमाह—

**एतैर्विमुक्तः कौन्तेय ! तमोद्वारैस्त्रिभिर्नरः ।**
**आचरन्त्यात्मनश्श्रेयस्ततो याति परां गतिम् ॥२२॥**

**एतैरिति ।** तमोद्वारैर्नरकद्वारभूतैस्त्रिभिरेतैः कामादिभिर्विमुक्तः पुमानात्मनः स्वस्य श्रेयो योगादिकमाचरति । तस्मात्परामुत्तमां गतिं मुक्तिं यातीत्यर्थः ॥२२॥

**यश्शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥२३॥**

**य इति ।** शास्त्रविधिं परमेश्वराज्ञारूपं वेदविहितं धर्ममुत्सृज्य यो नरः कामकारतस्स्वेच्छाचारपरो वर्तते स सिद्धिं परमेश्वरप्रसादसिद्धिं सुखमैहिकं वा परामुत्तमां गतिं मुक्तिं वा नाप्नोतीत्यर्थः ॥२३॥

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥२४॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः ।**

**तस्मादिति ।** तस्माद्धेतोरत इदं कार्यमकार्यमिति निर्धारणे शास्त्रं वेदशिवागमरूपमेव प्रमाणं; तेषु विहितं कर्म ज्ञात्वा कर्तुमर्हसीत्यर्थः ॥२४॥

इति श्रीमज्जगद्गुरुश्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्यनीलकण्ठभगवत्पादाराध्यकृतौ श्रीमद्भगवद्गीताभाष्ये दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः ।

---

**इति श्रीमल्लोकाराध्य शिवयोगिमहोपाध्याय नागलिङ्गशिवाराध्यकृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः ।**

---



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ।

पूर्वाध्यायान्ते 'यश्शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स सिद्धिमवाप्नो'तीति शास्त्रीयविधिमुत्सृज्य यथेच्छं वर्तमानस्योपासनायां नाधिकार इत्युक्तम् । अथ शास्त्रविधिमुत्सृज्य कामकारं विना श्रद्धया वर्तमानस्य किमधिकारोऽस्ति नास्ति वेति बुभुत्सुरर्जुन उवाच—

अर्जुन उवाच—

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण! सत्त्वमाहो रजस्तमः ॥१॥

य इति । ये शास्त्रविधिमालस्यादुत्सृज्य केवलं वृद्धाचारविश्वासेन श्रद्धयान्वितास्सन्तो यजन्ते तेषां निष्ठा का सत्त्वमुत सात्त्विकी, रजोऽथ वा राजसी, तम उताहो तामसीति ॥१॥

अथोत्तरमाह—

श्रीभगवानुवाच—

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु! ॥२॥

त्रिविधेति । शास्त्रज्ञानतः प्रवर्तमानस्य परमेश्वराराधनविषया सात्त्विक्येकविधैव श्रद्धा; अथ लोकाचारतः प्रवृत्तस्य देहिनो या श्रद्धा सा त्रिविधा; कुतः स्वभावजा स्वस्य भावः पूर्वजन्मसंस्कारः ततो जाता स्वभावजा स्वभाव-

मन्यथयितुं शक्यं शास्त्रीयज्ञानं यतस्तेषां नास्ति ततः केवलपूर्वस्वभावेनैव भवतीति श्रद्धा भवति त्रिधा; तां त्रिविधां शृण्वित्यर्थः । अयमर्थः- 'व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन !' इति पुरस्तादुक्तः ॥२॥

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत !
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धस्स एव सः ॥३॥

सत्त्वानुरूपेति । हे भारत ! सर्वस्यापि जनस्य श्रद्धा सत्त्वानुरूपा भवति । इह यद्यपि श्रद्धा सात्त्विक्येव । तथापि सत्त्वस्यान्तःकरणस्य सत्त्वादिगुणप्रधानतया तत्तदन्तःकरणस्वभावानुरोधिनी तस्माद्यो यच्छ्रद्धो यादृशी श्रद्धा यस्य स तादृशश्रद्धावानेव भवति । ततश्चायं पुरुषः श्रद्धामयः पूर्वसंस्कारसिद्धसात्त्विकाद्यन्तःकरणानुरूपश्रद्धाविशिष्ट एव भवतीत्यर्थः ॥३॥

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥४॥

यजन्त इति । सात्त्विका जना देवान्सत्त्वप्रकृतीनेव यजन्ते; राजसा रजोगुणप्रधाना जना यक्षरक्षांसि रजःप्रकृतीन्येव यजन्ते; तामसास्तमोगुणप्रधानाः प्रेतान्भूतगणांश्च तमःप्रकृतीनेव यजन्त इत्यर्थः ॥४॥

राजसतामसेषु विशेषमाह—

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥५॥

अशास्त्रविहितमिति । अशास्त्रविहितं वेदेन शिवागमेन वाऽविहितं घोरं भयङ्करं तपस्तप्यन्ते आचरन्ति; कथंभूता दम्भाहङ्कारसंयुक्ताः । तथा कामोऽभिलाषः, राग आसक्तिः, बलमाग्रहः तैस्सहितास्तानासुरनिश्चयानि-त्युत्तरेणान्वयः ॥५॥

कर्शयन्तश्शरीरस्थं भूतग्राममचेतसः ।
मां चैवाऽन्तश्शरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥६॥

कर्शयन्त इति । शरीरस्थं शरीरारम्भकं भूतग्रामं पृथिव्यादिभूतसमुदायं कर्शयन्तश्शुष्कोपवासादिभिः कृशीभूतमाचरन्तोऽन्तश्शरीरस्थमन्तर्यामितया हृदते

स्थितं मां परमेश्वरं कर्षयन्तस्तदाज्ञोल्लङ्घनेन द्रुह्यन्तो ये तपश्चरन्ति तानसुरनिश्चयानतिक्रूरस्वभावान्विद्धीत्यर्थः ॥६॥

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥७॥

आहारस्त्विति । सर्वस्य सात्त्विकराजसतामसरूपेण त्रिविधस्यापि जनस्याहारोऽन्नादिः, यज्ञतपोदानान्यपि सात्त्विकादिभेदेन त्रिविधान्येव प्रियाणि भवन्ति । तस्माद्राजसतामसाहारादीन्परित्यज्य सात्त्विकाहारादिपरिग्रहेण सत्त्ववृद्धिस्सम्पाद्येति भावः ॥७॥

आयुस्सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्यास्स्निग्धास्स्थिरा हृद्या आहारास्सात्त्विकप्रियाः ॥८॥

आयुरिति । आयुर्जीवितं, सत्त्वमुत्साहः, बलं शक्तिः, आरोग्यमरोगता, सुखप्रीती प्रसिद्धे, एतासां वृद्धिकरा रस्यास्स्वाद्याः, स्निग्धास्स्नेहयुक्ताः, स्थिरा रसरक्तादिरूपेण देहे चिरकालस्थायिनः, हृद्या मनोज्ञाः, आहारा भक्ष्यादयः, सात्त्विकानां प्रिया भवन्तीत्यर्थः ॥८॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥९॥

कट्वेति । कट्वादयः प्रसिद्धाः, अत्युष्णेत्यतिशब्दस्सर्वत्र सम्पद्यते; अतिकटुरत्याम्लोऽतिलवण इत्यादिरर्थः, अतितीक्ष्णो मरीचादिः, अतिरूक्षस्स्नेहरहितः, अतिविदाहि सर्षपादिः, दुःखं व्यथा, आमयो व्याधिर्दुःखादिप्रदाः, एते आहारा राजसस्येष्टाः प्रिया भवन्तीत्यर्थः ॥९॥

यातयामं गतरसं पूतिपर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥१०॥

यातयाममिति । यातयामं यातो यामः प्रहरः पक्वस्यान्नादेस्तत्, शैत्यावस्थां प्राप्तमित्यर्थः । गतरसं वीतरसमित्यर्थः । पूति दुर्गन्धं, पर्युषितं गतदिनपक्वं, उच्छिष्टं परभुक्तावशिष्टं, अमेध्यमपवित्रं, एवंविधं भोजनं तामसानां प्रियमित्यर्थः ॥१०॥

अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनस्समाधाय स सात्त्विकः ॥११॥

अफलेति । अफलाकांक्षिभिः फलाभिलाषरहितैर्विधिना दृष्टोऽवश्य-कर्तव्य इति विहितो यष्टव्यमेवेति वेदविहितत्वादवश्यकर्तव्यमिति मनस्समाधाय स्थिरीकृत्य यो यज्ञ इज्यते क्रियते स सात्त्विक इत्यर्थः ॥११॥

अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ! तं यज्ञं विद्धि राजसम् ॥१२॥

अभिसन्धायेति । फलं स्वर्गभोगमभिसन्धायोद्दिश्य दम्भार्थमपि च सोमयाजीत्यादिना स्वोत्कर्षप्रकटनार्थमपि य इज्यते स राजस इति विद्धीत्यर्थः ॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥१३॥

विधिहीनमिति । विधिहीनं शास्त्रविधिविपरीतं, असृष्टान्नमन्नदानरहितं, अदक्षिणं 'दक्षिणाभिर्यज्ञ' इतिश्रुत्या यज्ञस्य दक्षिणाप्राधान्येन तद्रहितमित्यर्थः । अश्रद्धया समाचरितं यज्ञं तामसमिति वदन्तीत्यर्थः ॥१३॥

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥१४॥

देवेति । देवः परमेश्वरः, द्विजा माहेश्वराः, गुरुर्दीक्षाप्रदः, प्राज्ञाः पण्डिताः, तेषामाराधनं, शौचं मृज्जलाभ्यां कायशोधनं, आर्जवमकुटिलता, ब्रह्म-चर्यं निषिद्धस्त्रीसङ्गमनिवृत्तिः, अहिंसा प्राणिपीडनाभावः, एतच्छारीरं शरीर-निर्वर्त्यं तप उच्यते ॥१४॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥१५॥

अनुद्वेगकरमिति । उद्वेगो सन्तापः, कस्यचिदप्यसन्तापकरं, सत्यं यथार्थं श्रोतुः, प्रियं श्रुतिसुखं, हितं परिणामे सुखकरं च तथाविधं; यतो वाक्यं स्वाध्यायस्य प्रणवश्रीरुद्राध्यायादेरभ्यसनं च, वाङ्मयं वाचा निर्वर्त्यं तप उच्यते ॥१५॥

मनःप्रसादस्सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥१६॥

मनःप्रसाद इति । मनसो नैर्मल्यं, सौम्यत्वमक्रूरता, मौनं मननं, आत्मनो मनसो विनिग्रहो निरोधः, भावसंशुद्धिः परमेश्वरेतरचिन्तापरित्यागः, एतन्मानसं मनोनिर्वर्त्यं तप उच्यते ॥१६॥

शारीरादिभेदेन तपसस्त्रैविध्यमुक्त्वा पुनस्सात्त्विकादिभेदेन त्रैविध्यमाह परयेत्यादिना—

श्रद्धया परया तप्तं तपस्तत्त्रिविधं परैः ।
अफलाकांक्षिभिर्युक्तैस्सात्त्विकं परिचक्षते ॥१७॥

श्रद्धयेति । परया श्रेष्ठया श्रद्धयाऽफलाकांक्षिभिर्निष्कामैर्युक्तैस्सिद्ध्यसिद्ध्योस्समचित्तैर्नरैर्यत्तपः क्रियते तत्सात्त्विकमाचक्षते ॥१७॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१८॥

सत्कारेति । सत्कारस्साधुरयं तपस्वीति मूर्खैः क्रियमाणा स्तुतिः, मानोऽभ्युत्थानादिभिर्गौरवं, पूजा धनलाभादिस्तदर्थं दम्भेन यत्तपः क्रियते तद्राजसमिति शिष्टैरुदाहृतमित्यर्थः ॥१८॥

मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥१९॥

मूढग्राहेणेति । मूढग्राहेणाविवेकमूलेन दुराग्रहेण देहस्य पीडया यत्क्रियते, अन्यस्य परस्य विनाशार्थं वा यत्तपः क्रियते तत्तामसमिति कथितमित्यर्थः ॥

दानस्य त्रैविध्यमाह दातव्यमित्यादिना—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥२०॥

दातव्यमिति । शास्त्रीयविधिवशाद्दातव्यमित्यनुपकारिणेऽकृतप्रत्युपकाराय प्रतिग्रहीत्रे श्रीशैलादिपवित्रक्षेत्रे महाशिवरात्र्याद्युत्तमकाले शिवयोग्यादिपरमपात्रे यद्दत्तं तद्दानं सात्त्विकमिति स्मृतं महर्षिभिरित्यर्थः ॥२०॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्राजसमुदाहृतम् ॥२१॥

यत्त्विति । अथ यत्प्रत्युपकारं करिष्यतीत्याशयेन वा फलाभिलाषेण वा परिक्लिष्टमतिक्लेशेन दीयते तद्दानं राजसं स्मृतमित्यर्थः ॥२१॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥२२॥

अदेशेति । अपवित्रदेशेऽप्रसिद्धकालेऽपात्रेभ्यो यद्दीयते, उत्तमदेशकालादावप्यसत्कृतं सत्काररराहित्येन वा तिरस्कृत्य वा यच्च दीयते तद्दानं तामसमित्युक्तमित्यर्थः ॥२२॥

ननु यद्येवं यज्ञादयोऽपि राजसतामसरूपतया तदर्थः प्रयासो निरर्थ इत्याशङ्क्य तेषां साफल्यप्रकारं प्रदर्शयिषुराह—

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥२३॥

ओमिति । ओं तत्सदिति ब्रह्मणः परमेश्वरस्य निर्देशो निर्दिश्यत इति निर्देशोऽभिधानमित्यर्थः । त्रिविध इति वेदार्थज्ञैस्स्मृतः । तस्मादेव तेन त्रिविधेनापि पारमेश्वराभिधानेन पुराऽऽदौ ब्राह्मणा वेदा यज्ञाश्च विहिताश्चतुर्मुखेन सृष्टा इत्यर्थः ॥२३॥

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्तास्सततं ब्रह्मवादिनाम् ॥२४॥

तस्मादिति । तस्मात्कारणादोमित्युच्चार्य विधिविहिता यज्ञो दानं तप इति सर्वकर्माणि ब्रह्मवादिनां वेदवादिनां सततं प्रवर्तन्ते प्रकृष्टान्येव भवन्तीत्यर्थः ॥२४॥

अथ द्वितीयं तदित्यभिधानं प्रस्तौति—

तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकांक्षिभिः ॥२५॥

तदिति । उदाहृत्येति पूर्वस्यानुषङ्गस्तदित्युच्चार्य फलमनभिसन्धायानभिरूप्य विविधा यज्ञदानतपांसि दानक्रियाश्च मोक्षमात्रतत्परैरनुष्ठीयन्त इत्यर्थः ॥

अथ तृतीयं सदिति पदं प्रस्तौति—

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ! युज्यते ॥२६॥

सद्भाव इति । सद्भावे सत्तायां साधुभावे श्रेष्ठत्वे च सदितिपदं प्रयुज्यते, तथा प्रशस्ते माङ्गलिके कर्मणि विवाहादौ च प्रयुज्यते ॥२६॥

यज्ञे तपसि दाने च स्थितिस्सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥२७॥

यज्ञ इति । यज्ञतपोदानेषु तत्परतया स्थितिर्निष्ठा च सदित्येवोच्यते स परमेश्वर एवार्थः फलं यस्य तत्; परमेश्वरार्थं क्रियमाणं कर्मापि सदित्येवाभिधीयते । एवमेकैकस्यापि ओमित्यादिपरमेश्वराभिधानस्य प्रशस्ततमत्वात्त्रितयं समुदितं यत्र कर्मणि सङ्कीर्त्यते तत्कर्म साद्गुण्यमश्नुत इति किमु वक्तव्यमित्यर्थः॥

श्रद्धयैव सर्वेष्वपि कर्मसु प्रवृत्त्यर्थं श्रद्धाराहित्येन क्रियमाणं सर्वं विनिन्दति—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ! नच तत्प्रेत्य नो इह ॥२८॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्म-
पर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योग-
शास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभाग-
योगो नाम सप्तदशोऽध्यायः ।

अश्रद्धयेति । अश्रद्धया श्रद्धाजाड्येन यद्धुतं हवनमाचरितं दानं दत्तं तपस्समाचरितमितरमपि यत्कृतं तत्सर्वमसदित्युच्यते । तस्मान्न प्रेत्य परलोके फलति निष्फलत्वात्; नो इहलोकेऽकीर्तिकरत्वाच्चेत्यर्थः ॥२८॥

इति श्रीमज्जगद्गुरुश्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्य-
नीलकण्ठभगवत्पादाराध्यकृतौ श्रीमद्भगवद्गीताभाष्ये
श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ।

---

इति श्रीमल्लोकाराध्य शिवयोगिमहोपाध्याय नागलिङ्गशिवाराध्य-
कृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां श्रद्धा-
त्रयविभागयोगो नाम सप्तदशोऽध्यायः ।



श्री शिवाय गुरवे नमः ।

लघुचन्द्रिकाव्याख्याविलसित

श्रीनीलकण्ठभगवत्पादाराध्यकृतभाष्योपेतासु

# श्रीभगवद्गीतासु

## मोक्षोपदेशयोगो नाम अष्टादशोऽध्यायः ।

आदितोऽत्र गीताशास्त्रे उक्तस्सर्वोऽप्यर्थोऽस्मिन्नध्याये उपसंहर्तुमयमध्याय आरभ्यते । तत्र त्यागसन्न्यासयोः पृथक्त्वैकत्वनिर्णयं तत्स्वरूपं च बुभुत्सुरर्जुन उवाच—

अर्जुन उवाच—

सन्न्यासस्य महाबाहो ! तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश ! पृथक्केशिनिषूदन ! ॥१॥

सन्न्यासस्येति । हे महाबाहो ! सन्न्यासस्य त्यागस्य च तत्त्वं पृथग्विशिष्य वेदितुमिच्छामि । अत्रायमाशयः—'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशु'रिति, 'वेदान्तविज्ञानसुनिश्चितार्थास्सन्न्यासयोगाद्यतयश्शुद्धसत्त्वा' इति च; सन्न्यास इति च त्याग इति च श्रूयमाणौ सन्न्यासत्यागशब्दावेकार्थौ, उत भिन्नार्थौ ? उभयथापि तस्य स्वरूपं ब्रूहीति प्रश्नः ॥१॥

श्रीभगवानुवाच—

काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥२॥

काम्यानामिति । कवयः प्रतिभाशालिनः काम्यानां- 'पुत्रकामो यजेत स्वर्गकामो यजे'तेत्यादिश्रुतिभिः कामिन उद्दिश्य विहितानां कर्मणां न्यासं परि-

त्यागं सन्न्यासं सन्न्यासशब्दवाच्यं विदुः । विचक्षणाः केचन विद्वांसः सर्वेषां कर्मणां नित्यनैमित्तिकादीनामपि फलमात्रत्यागं त्यागमित्याहुः । सन्न्यासत्यागशब्दार्थस्यैकत्वेपि स काम्यकर्मत्यागरूपस्सर्वकर्मफलपरित्यागरूपश्चेति तदर्थ एव मतभेदो विद्यत इति भावः ॥२॥

तत्र विप्रतिपत्तिमितोपि दर्शयति—

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥३॥**

**त्याज्यमिति ।** एके मनीषिणस्साङ्ख्याः दोषवद्धिंसादिदोषयुक्ततया बन्धहेतुत्वात्तादृशं कर्म त्याज्यमिति प्राहुः । अपरे वैदिका मीमांसका यज्ञदानतपोरूपं कर्म न त्याज्यमिति वदन्ति ॥३॥

अथ स्वमतं प्रदर्शयति—

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम !**
**त्यागो हि पुरुषव्याघ्र ! त्रिविधस्सम्प्रकीर्तितः ॥४॥**

**निश्चयमिति ।** तत्रैवं विप्रतिपन्ने त्यागे निश्चयं वक्ष्यामि शृण्वित्यर्थः । पुरुषव्याघ्र ! त्यागस्त्रिविधस्सम्यग्विविच्य कीर्तित इत्यर्थः ।

अत्र यद्यपि सन्न्यासस्य त्यागस्य च तत्त्वं वेदितुमिच्छामीति प्रश्नवाक्येन काम्यानामित्यादि तदुत्तरवाक्येन च सन्न्यासत्यागशब्दौ पृथगर्थावित्येवाऽऽपाततः प्रतीयते । तथापि 'निश्चयं शृणु मे पार्थ ! त्यागे भरतसत्त'मेति त्यागशब्देन निर्णयवचनात् 'नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते, मोहात्तस्य परित्यागस्तामसः परिकीर्तितः, भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचि'दिति द्वयोः पर्यायतया प्रयुक्तत्वाच्च तयोरेकार्थतैव भगवदुद्दिष्टेत्यवगम्यते । अपिच 'त्यागो हि पुरुषव्याघ्र ! त्रिविधस्सम्प्रकीर्तित' इत्यग्रे त्यागस्य त्रैविध्यकथनेन सन्न्यासस्यापि विशेषश्चरितार्थ इति तद्विशेषो न पृथगुपदिष्टः । तस्मादुद्वावप्यभिन्नावेवेति विशदम् ॥४॥

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥५॥

यज्ञेति । यज्ञदानतपोरूपं कर्म न परित्याज्यं, तदवश्यं कर्तव्यमेव । यज्ञादीनि मनीषिणां मुमुक्षूणां पावनान्युपासनप्रतिबन्धकदुरितनिवारकाणीत्यर्थः ॥

एतेषामाचरणप्रकारमाह—

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ! निश्चितं मतमुत्तमम् ॥६॥

एतान्यपीति । एतानि यज्ञादीन्यपि कर्माणि सङ्गमहमेवं करोमीति कर्तृत्वाभिमानं फलानि तत्फलानि च त्यक्त्वा परमेश्वराराधनबुद्ध्यैव कर्तव्यानीति निश्चितं मे मतम् । तत एवेदमुत्तममित्यर्थः ॥६॥

प्रतिज्ञातं त्यागस्य त्रैविध्यमाह—

नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥७॥

नियतस्येति । नियतस्य नित्यस्य कर्मणस्त्यागस्सन्न्यासो नोपपद्यते न युक्तः, मोहात्तस्य नित्यस्य कर्मणः परित्यागस्तामसः- मोहस्य तमोगुणकार्यत्वात् । मोहमूलो नित्यकर्मत्यागस्तामस इत्यर्थः ॥७॥

राजसं त्यागमाह—

दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥८॥

दुःखमिति । दुःखकरमित्याशयेन शरीरायासभयान्नित्यकर्म परित्यजेद्यदि स त्यागो राजसः, तेन त्यागेन स सन्न्यासफलं न लभेत- दुःखस्य राजसत्वात्तन्मूलस्त्यागो राजस इत्यर्थः ॥८॥

सात्त्विकं त्यागमाह—

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन !
सङ्गं त्यक्त्वा फलं चैव स त्यागस्सात्त्विको मतः ॥९॥

कार्यमिति । करणीयमेवेति निश्चयेन नियतमवश्यकर्तव्यतया विहितं कर्म सङ्गं कर्तृत्वाभिमानं फलं च त्यक्त्वा क्रियते यदि स त्यागस्सात्त्विक इत्यर्थः ॥

न द्वेष्ट्यकुशलं कर्म कुशलेनानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥१०॥

नेति । सत्त्वसमाविष्टः सत्त्वगुणेन युक्तः, मेधावी पशुपाशपतिरूपतत्त्वत्रयज्ञानवान्, अत एव छिन्नसंशयः निर्विचिकित्सज्ञानवान् त्यागशीलोऽकुशलं क्लेशकरं प्रातःस्नानादि न द्वेष्टि, कुशली सुखकरे माध्याह्निकस्नानादौ नानुषज्जते आसक्तो न भवति ॥१०॥

ननु कर्माण्यनुष्ठाय तत्फलत्यागात्कर्मत्याग एव वरमित्याशङ्क्याह—

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥११॥

न हीति । देहभृता शरीरधारिणा सर्वाण्यपि कर्माणि त्यक्तुं न शक्यते, शरीरपोषणार्थानामशनादीनामवर्जनीयत्वादित्यर्थः । तस्माद्यः कर्माणि कृत्वा तत्फलं परित्यजति स एव त्यागीत्यभिधीयत इत्यर्थः ॥११॥

कर्मफलत्यागस्य फलमाह—

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित् ॥१२॥

अनिष्टमिति । अत्यागिनां कर्म कृत्वा फलमपरित्यजतां प्रेत्य परलोकेऽनिष्टं नरकेष्वनुभूयमानं दुःखमिष्टं स्वमनुभूयमानं सुखं मिश्रं मर्त्यलोके अनुभूयमानमुभयविधं च फलं विद्यते । सन्न्यासिनां कर्मफलत्यागिनां तु क्वचिदप्येतादृशं फलं न भवति । त्रिविधस्यापि कर्मफलस्य परित्यागादित्यर्थः । अत्र 'न तु सन्न्यासिना'मित्यनेन कर्मफलत्याग्येव सन्न्यासिपदेन विवक्षितः, न तु कर्मत्यागीत्यवगम्यते ॥१२॥

अथ परमेश्वरे नियन्तरि कर्तृत्वानुसन्धानपूर्वकमात्मन्यकर्तृत्वानुसन्धानरूपेण सङ्गत्यागेनैव कर्म कुर्वतः तत्फलेन लेपो न भवतीत्युपपादयितुमाह—

पञ्चैतानि महाबाहो! कारणानि निबोध मे ।
साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥१३॥

पञ्चेति । सर्वकर्मणां सिद्धये इमानि वक्ष्यमाणानि पञ्च कारणानि

मे मत्तः निबोध, अन्यथा आत्मनः कर्तृत्वाभिमानो न निवर्तेत इत्यर्थः। साङ्ख्ये कृतान्ते कापिलतन्त्रे प्रोक्तानीत्यर्थः ॥१३॥

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।
विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥१४॥

अधिष्ठानमिति। अधिष्ठानं शरीरं कर्ता जीवात्मा, पृथग्विधं चक्षुरादिना विविधं, करणमिन्द्रियजातं, विविधाश्चेष्टाः प्राणापानादीनां व्यापाराः, दैवं सर्वप्रेरकः परमेश्वरः- 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठ'तीति वक्ष्यमाणः पञ्चम इत्यर्थः ॥१४॥

शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः।
न्यायं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥१५॥

शरीरेति। शरीरेण वाचा मनसा च नरो धर्म्यं वाऽधर्म्यं वा यद्यत्कर्म प्रारभते तस्य सर्वस्यापि कर्मण एते पञ्च हेतवः कारणानि भवन्तीत्यर्थः ॥१५॥

तत्रैवं सति कर्तारमात्मानं केवलं तु यः।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥१६॥

तत्रेति। तत्र कर्तृत्वे एवं कारणपञ्चकसम्मिते परमेश्वरप्रेरणकृते च सति केवलमात्मानं जीवात्मानमेकमेव कर्तारं पश्यति मनुते स दुर्मतिरविवेकी अकृतबुद्धित्वात्, शास्त्राचार्योपदेशरहितत्वात्सम्यक् न पश्यतीत्यर्थः ॥१६॥

यद्येवंकृतबुद्धिः किंविध इत्याशङ्क्याह—

यस्य नाऽहंकृतो भावो बुद्धिर्यस्य न लिप्यते।
हत्वापि स इमांल्लोकान्न हन्ति न निबध्यते ॥१७॥

यस्येति। यस्याहंकर्तेतिभावो नास्ति, परमेश्वरस्यैव प्रयोजककर्तृत्वेन शरीरादिसङ्घातस्य कर्तृत्वात्। यस्य च बुद्धिः फलसङ्गेन न लिप्यते स इमान् लोकान् न केवलं भीष्मादीन्, किंतु सर्वानपि हत्वा न हन्ति- हननकर्ता न भवति। तस्मान्न बध्यते हननमूलेन दोषेण न निबध्यते- न लिप्तो भवतीत्यर्थः॥

कर्मणस्सात्त्विकस्यैव फलसङ्गरहितत्वेन तदावेदयिष्यन् कर्मचोदनायाः कर्माश्रयस्य च त्रैविध्यं प्रतिज्ञानीते—

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥१८॥

ज्ञानमिति। ज्ञानं कर्तव्यकर्मविषयः प्रकाशः, ज्ञेयं कर्तव्यं कर्म, परिज्ञाताऽनुष्ठातेति कर्मचोदना कर्मविधिः त्रिविध इत्यर्थः। एतेषां त्रयाणामेव सन्निपात एव हानोपादानादिसर्वकर्मणामारम्भस्य दृष्टत्वात्- एतत्त्रितयं कर्मणः प्रवर्तकमित्यर्थः। तथा करणं साधकतममिन्द्रियं, कर्म कर्तुरीप्सिततमं, कर्ता क्रियाया निर्वर्तक एतत्त्रयं कर्मसंग्रहः कर्माश्रयमित्यर्थः ॥१८॥

ज्ञानज्ञेयज्ञातृरूपस्य करणकर्मकर्तृरूपस्य च त्रिकद्वयस्य त्रिगुणात्मकत्वं वक्तुं प्रतिजानीते—

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः।
प्रोच्यते गुणसङ्ख्याने यथावच्छृणु तान्यपि ॥१९॥

ज्ञानमिति। गुणास्सम्यक्कार्यभेदेन ख्यायन्ते प्रतिपाद्यन्ते यस्मिन् तस्मिन् साङ्ख्यशास्त्रे ज्ञानादिकं गुणभेदात्त्रिधैवेति प्रोच्यते तान्यपि यथावद्यथाशास्त्रं शृण्वित्यर्थः ॥१९॥

सर्वभूतेषु येनैकं भावमव्ययमीक्षते।
अविभक्तं विभक्तेषु तद्ज्ञानं विद्धि सात्त्विकम् ॥२०॥

सर्वभूतेष्विति। सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु विभक्तेषु जातितो गुणतश्च परस्परं भिन्नेष्वविभक्तमेकमेकविधयाऽऽत्माख्यं परमात्मसंज्ञमव्ययं शाश्वतं भावं तत्त्वं येन ज्ञानेनेक्षते पश्यति तद्ज्ञानं सात्त्विकं विद्धि ॥२०॥

पृथक्त्वेन तु यद्ज्ञानं नानाभावान्पृथग्विधान्।
वेत्ति सर्वेषु भूतेषु तद्ज्ञानं विद्धि राजसम् ॥२१॥

पृथक्त्वेनेति। पृथक्त्वेन स्थितेषु भूतेषु पृथग्विधान् ननाभावान् जात्यादिभेदान् येन ज्ञानेन पश्यति तद्ज्ञानं राजसं विद्धि ॥२१॥

यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥२२॥

यत्त्विति । एकस्मिन्कार्ये प्रतिमादौ कृत्स्नवत: परिपूर्णवदेतावानेवेश्वर इति भावयुक्तम् । अहैतुकमुपपत्तिरहितमतत्त्वार्थवदयथार्थभूतं यद्ज्ञानं तद्ज्ञानं तामसमित्यर्थः ॥२२॥

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥२३॥

नियतमिति । नियतमवश्यकर्तव्यं नित्यं, सङ्गरहितं कर्तृत्वाभिमानरहितं, अरागद्वेषतो रागद्वेषरहितेन, अफलप्रेप्सुना फलकांक्षारहितेन च यत्कृतं कर्म तत्सात्त्विकमुच्यत इत्यर्थः ॥२३॥

यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥२४॥

यत्त्विति । कामेप्सुना फलकामेनाऽहङ्कारेण बहुलायासमतिक्लेशेन यत्काम्यं कर्म क्रियते तद्राजसमित्यर्थः ॥२४॥

अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥२५॥

अनुबन्धमिति । अनुबध्यत इत्यनुबन्धस्तत्फलं शुभाशुभं, क्षयं वित्तादिव्ययं, हिंसा परपीडा, पौरुषं स्वसामर्थ्यं चानवेक्ष्य मोहादज्ञानादेव यत्कर्म आरभ्यते तत्तामसमुच्यते ॥२५॥

कथ कर्तुस्त्रैविध्यमाह—

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥२६॥

मुक्तसङ्ग इति । मुक्तसङ्गः त्यक्तफलाभिलाषोऽनहंवादी अहंकर्तेति सम्भाषणशीलरहितः, धृतिर्धैर्यमुत्साहः, उद्यमः ताभ्यां युक्तः क्रियमाणस्य कर्मणस्सिद्धावसिद्धावपि निर्विकारः हर्षशोकरहित एवंभूतः कर्ता सात्त्विक इत्युच्यते ॥२६॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥२७॥

रागीति। रागी यशोभिलाषी, कर्मफलप्रेप्सुः कर्मफलकामी, लुब्धः कर्मोपयुक्तद्रव्यव्ययासहिष्णुः, हिंसात्मको घातुकस्वभावः, अशुचिश्शास्त्रोक्तशौचरहितः, हर्षशोकान्वितो लाभालाभयोर्हर्षविशादसहितः, एवंविधः कर्ता राजस इत्युच्यते ॥२७॥

तामसं कर्तारमाह—

अयुक्तः प्राकृतस्तब्धश्शठो नैष्कृतिकोऽलसः।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥२८॥

अयुक्त इति। अयुक्तोऽनवहितचित्तः, प्राकृतो विवेकरहितः, स्तब्धो वृद्धेष्वनतः, शठः परवञ्चकः, नैष्कृतिकः परावमानी, अलसोऽनुद्यमशीलः, विषादी शोकशीलः, दीर्घसूत्री अनर्थपर्यालोचनशीलः, एवंभूतः कर्ता तामस इत्युच्यते ॥२८॥

अथ बुद्धेर्धृतेश्च त्रैविध्यं प्रतिजानीते—

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु।
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय! ॥२९॥

बुद्धेरिति। बुद्धेर्धृतेश्च गुणतस्त्रिविधं भेदं शृण्वित्यर्थः ॥२९॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।
बन्धं मोक्षं च या वेत्ति बुद्धिस्सा पार्थ! सात्त्विकी ॥३०॥

प्रवृत्तिमिति। प्रवृत्तिं धर्मे निवृत्तिं चाधर्मे यत्र देशे यस्मिंश्च काले यत्कार्यमकार्यं च भयाभये कार्याकार्यमूलावर्थानर्थौ बन्धं पाशस्वरूपं मोक्षं तद्विघं च या जानाति सा बुद्धिस्सात्त्विकीत्यर्थः ॥३०॥

यया धर्ममधर्मं च कार्यं चाकार्यमेव च।
अयथावत्प्रजानाति बुद्धिस्सा पार्थ! राजसी ॥३१॥

ययेति। धर्मं शास्त्रविहितमधर्मं शास्त्रप्रतिषिद्धं कर्तव्याकर्तव्ये च अयथावद्याथार्थ्येन यया न विजानाति सा बुद्धी राजसी ॥३१॥

अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
सर्वार्थान् विपरीतांश्च बुद्धिस्सा पार्थ! तामसी ॥३२॥

अधर्ममिति । तमसा तमोगुणेनाऽऽवृता या बुद्धिरधर्मं धर्ममित्येवं सर्वार्थानपि विपरीतानेव या मन्यते सा बुद्धिस्तामसी ॥३२॥

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिस्सा पार्थ! सात्त्विकी ॥३३॥

धृत्येति । अव्यभिचारिण्याऽविनाभूतया यया धृत्या योगेन समाधिना मनसः प्राणस्येन्द्रियाणां च क्रिया नियच्छति पुरुषस्सा धृतिस्सात्त्विकी ॥३३॥

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन !
प्रसङ्गेन फलाकांक्षी धृतिस्सा पार्थ! राजसी ॥३४॥

ययेति । प्रसङ्गेन कर्तृत्वाभिमानेन फलमभिकांक्षमाणो यया धृत्या धर्मकामार्थान् पुरुषो धारयते पुष्णाति सा धृती राजसी भवति ॥३४॥

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिस्सा पार्थ! तामसी ॥३५॥

ययेति । दुर्मेधा दुष्टबुद्धिः पुरुषो यया धृत्या स्वप्नं निद्रां भयं त्रासं शोकं सन्तापं विषादमिन्द्रियदौर्बल्यं मदं विषयपारवश्यं न विमुञ्चति सा तामसी भवति ॥३५॥

अथ सुखस्यापि त्रैविध्यं वक्तुं प्रतिजानीते—

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ !
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥३६॥
यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥३७॥

सुखमिति । सात्त्विकं सुखमाह—अभ्यासादिति । यतो यस्मिन् सुखेऽभ्यासादतिपरिचयान्न तु विषयसुख इव सहसा रमते, यत्र मोदमानो दुःखस्य सांसारिकशोकस्याऽन्तमवसानं च निगच्छति प्राप्नोति, यत्सुखमग्रे आरम्भे विषमिवाऽऽयाससाध्यत्वाद्दुःखमिव भवति, परिणामे परिपाकेऽमृतोपमममृततुल्यमात्मबुद्धिप्रसादजमात्मविषया परमेश्वरध्यानविषया या बुद्धिस्तस्याः प्रसादो निद्रालस्यादिराहित्येन स्वच्छतयाऽवस्थानं ततो जातं सात्त्विकमित्यर्थः ॥

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥३८॥

विषयेन्द्रियेति । यदग्रे आरम्भे विषयेन्द्रियसंयोगाद्विषयाणामिन्द्रियाणां च संयोगात्स्रक्चन्दनवनितादि, अमृतोपमं मनस्संयमनादिक्लेशाभावादमृततुल्यं, परिणामे विपाके बलवीर्यप्रज्ञाधनादिविनाशकृत्वात्, विषमिवेहामुत्र च दुःखकरं, तत्सुखं राजसं स्मृतम् ॥३८॥

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥३९॥

यदिति । यदग्रे आरम्भेऽनुबन्धे विपाकेऽप्यात्मनस्स्वस्य मोहकरं निद्रयाऽऽलस्येन प्रमादेन चोद्भूतं तत्सुखं तामसमित्यर्थः ॥३९॥

प्रकरणार्थमुपसंहरति—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात्त्रिभिर्गुणैः ॥४०॥

न तदिति । पृथिव्यां मानवादिषु वा दिवि देवेषु वा एभिरुक्तैः प्रकृतिसम्भवैस्त्रिभिस्सत्त्वरजस्तमोरूपैर्गुणैर्मुक्तं विरहितं सत्त्वं चेतनमचेतनं वा क्वापि नास्तीत्यर्थः ॥४०॥

नन्वेवमुक्तरीत्या क्रियाकारकफलादिकं प्राणिजातमपि त्रिगुणात्मकप्रकृतिरूपानादिपाशनिबद्धं चेत्तर्हि जन्तोः कथं प्रकृतिबन्धाद्विमुक्तिरित्याशङ्क्य स्वस्वाधिकारविहितैः परमेश्वराराधनरूपैर्धर्मैस्सुप्रसन्नस्य परमेश्वरस्य प्रसादादेवेतीममेव सर्वगीतार्थसारमुपसंहर्तुमुत्तरं प्रकरणमारभ्यते—

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप !
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥४१॥

ब्राह्मणेति । ब्राह्मणानां क्षत्रियाणां वैश्यानां शूद्राणां च शूद्राणां द्वन्द्वात्पृथक्करणं वेदानधिकारद्योतनार्थम् । स्वभावप्रभवैस्स्वभावः पूर्वजन्मसंस्कारः तस्य प्रभवैः कारणभूतैः सत्त्वादिभिर्ब्राह्मणानां स्वभावः रजस्तम उपसर्जनस्सत्त्वगुणः; क्षत्रियाणां स्वभावः सत्त्वोपसर्जनो रजोगुणः; वैश्यानां स्वभावस्तम

---

ब्राह्मणेति । धर्मैस्सुप्रसन्नस्येति । अत एवोक्तं शङ्करसंहितायाम्—

उपसर्जनो रजोगुणः; शूद्राणां स्वभावो रजउपसर्जनस्तमोगुणः। एतेषां चतुर्णां वर्णानामपि कर्माणि शमादीनि प्रविभाक्तानि, प्रकर्षेण विभज्य विहितानीत्यर्थः ॥

तत्र ब्राह्मणस्य कर्माण्याह—

शमो दमस्तपश्शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥४२॥

शम इति। शमश्चित्तोपरतिः, दमो बाह्येन्द्रियोपरमः, तपश्शारीरादि, शौचं बाह्यमाभ्यन्तरं च द्विविधं; क्षान्तिः क्षमा, आर्जवमवक्रता, ज्ञानं वेदार्थविषयं, विज्ञानं पतिपशुपाशविवेकविषयं, आस्तिक्यमस्ति परलोकः- परमेश्वरश्चेति विश्वासः। ब्राह्मणजातेस्स्वभावजं सत्त्वप्रधानस्वभावसम्भवमित्यर्थः ॥४२॥

क्षत्रियकर्माण्याह—

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥४३॥

शौर्यमिति। शौर्यं पराक्रमः, तेजोऽधृष्यत्वं, धृतिर्धैर्यं, दाक्ष्यं कौशलं, युद्धे अपलायनमपराङ्मुखत्वं, दानमौदार्यं, ईश्वरभावः प्रशासनशक्तिरेतत्क्षत्रियस्य स्वभावजं कर्म ॥४३॥

वैश्यकर्माण्याह—

कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥

कृषिरिति। कृषिः कर्षणं, गौरक्ष्यं पशुपोषणं, वाणिज्यं क्रयविक्रयादि वैश्यानां स्वभावजं कर्म। परिचर्यात्मकं त्रैवर्णिकसेवारूपं शूद्रस्य स्वभावजं कर्म ॥४४॥

---

'वर्णाश्रमोचिता धर्माश्शिवेन कथिताः पुरा। ये तानुल्लङ्घ्य वर्तन्ते शिवस्याज्ञापलापिनः ॥ राजाज्ञाभङ्गकृन्नॄणां यथा दण्डो भवेद्ध्रुवम्। शिवाज्ञाभङ्गकृन्नॄणां दण्डो हि नरकस्त'थेति। प्रसादादेवेति। 'य मे वैष वृणुते तेन लभ्यः, यथा जुष्टं पश्यत्यन्यमाशमस्य महिमानमिति वीतशोक' इत्यादिश्रुतिभिः परमेश्वरप्रातिरूपायाः परममुक्तेस्तत्प्रसादैकलभ्यत्वाज्ज्ञानादित्यर्थः ॥४१॥

स्वे स्वे कर्मण्यभिरतस्संसिद्धिं लभते नरः ।
स्वकर्मनिरतस्सिद्धिं यथा विन्दति तच्छृणु! ॥४५॥

स्वे स्वे इति । स्वे स्वे स्वस्ववर्णाश्रमविहिते कर्मणि अभिरतो नरस्संसिद्धिं मुक्तिं लभते । स्वकर्मनिरतस्सिद्धिं यथा विन्दति तद्वक्ष्यमाणं शृणु ॥

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥४६॥

यत इति । यतः परमेश्वराद्भूतानां चराचराणां प्रवृत्तिरुत्पत्तिः- 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतेः । येन परमेश्वरेण सर्वमिदं जगत्ततं व्याप्तम् । 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वं', 'सर्वव्यापी च भगवान् तस्मात्सर्वगतश्शिवः' इत्यादिश्रुतिभ्यः तं परमेश्वरं स्वकर्मणा स्ववर्णविहितकर्मणा तदाराधनबुद्ध्या सम्यगनुष्ठितेन कर्मणा, अभ्यर्च्य तोषयित्वा तत्प्रसादान्मानवस्संसिद्धिं परममुक्तिं लभते ॥४६॥

स्वकर्मणीतिवचनस्य फलमाह—

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥४७॥

श्रेयानिति । विगुणः विफलोऽपि, स्वधर्मः स्ववर्णविहितधर्मः, स्वनुष्ठितात्सम्यगनुष्ठितात्परधर्मात्, श्रेयानुत्तमः । तस्मात्परधर्माद्भिक्षाटनादेर्बन्धुवधादियुक्तस्स्वधर्म एव कर्तव्य इत्याशयः । यस्मात्स्वभावेन सत्त्वादिना नियतं नियमेन विहितं कर्म सदोषमपि कुर्वन् किल्बिषं पापं नाप्नोतीत्यर्थः ॥४७॥

यदि त्वं स्वधर्मे हिंसालक्षणो दोषोऽस्तीति, परधर्मं श्रेष्ठं मनुषे तर्हि दोषवैशिष्ट्यं; तत्रापि तुल्यमित्याह—

सहजं कर्म कौन्तेय! सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाऽग्निरिवावृताः ॥४८॥

सहजमिति । कौन्तेय! सहजं स्वभावजं कर्म दोषयुक्तमपि न त्यजेत्; सर्वेऽपि धर्मा धूमेनाग्निरिव त्रिगुणात्मकत्वाद्येनकेनापि दोषेण सहिता एवेत्यर्थः ॥४८॥

---

सहजमिति । दोषेणेति । यथाऽग्नौ धूमेनावृतेऽपि तमःप्रधानीकृत्य

असक्तबुद्धिस्सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति ॥४९॥

असक्तबुद्धिरिति । सर्वत्र फलादिष्वसक्तबुद्धिः सङ्गरहितचित्तः, जितात्मा वशीकृतमनाः, विगतस्पृहः परमेश्वरकर्तृत्वनिश्चयेनात्मकर्तृत्वस्मृतिरहितस्सन्न्यासेन काम्यनित्यनैमित्तिककर्मगतफलात्मककर्तृत्वादिपरित्यागरूपतया निर्णीतेन सन्न्यासेन, परमां निरतिशयां नैष्कर्म्यरूपां, सिद्धिं मुक्तिमधिगच्छति ॥

सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ।
समानेनैव कौन्तेय! निष्ठा ज्ञानस्य या परा ॥५०॥

सिद्धिमिति । सिद्धिं प्राप्तो मुक्तः यथा ब्रह्म आप्नोति तथा तं विधं मे मत्तः निबोध विद्धि । या ज्ञानस्य परा निष्ठा समाप्तिरतोऽन्यद्ज्ञातव्यं नास्तीत्यर्थः ॥५०॥

बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥५१॥

बुद्ध्येति । विशुद्धया निर्मलया बुद्ध्या मनसा युक्तः, धृत्या सात्त्विक्या आत्मानं मनो नियम्य निरुध्य च, शब्दादीन् विषयान्, त्यक्त्वा परित्यज्य, रागद्वेषौ तद्विषये व्युदस्य, विविक्तसेवीत्युत्तरेणान्वयः ॥५१॥

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥५२॥

विविक्तसेवीति । विविक्तसेवी रहोवस्थायी, लघ्वाशी मितभोजी, मनोवाक्कायान् संयम्य विरक्तस्सन् ध्यानयोगपरः समाधिनिष्ठापरः ॥५२॥

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममश्शान्तो ब्रह्मभूयाय कल्पते ॥५३॥

अहङ्कारमिति । अहङ्कारमनात्मन्यात्माभिमानं, बलं तस्य मूलं वासना-

---

तमश्शीतादिनिवृत्तयेऽग्निस्सेव्यते तथा धर्मोऽपि दोषांशं विहाय परमेश्वरप्रीतये सेवनीय इत्यर्थः ॥४८॥

असक्तबुद्धिरिति । नैष्कर्म्यरूपामिति । निर्गतानि कर्माणि प्रकृतिगुणचोदितानि यस्मान्निष्कर्मा प्रकृतिपाशमुक्तः, तस्य भावो नैष्कर्म्यमित्यर्थः ॥

बलं, दर्पं मदं, कामं वैषयिकं, क्रोधं द्वेषं, परिग्रहमुपकरणं, विमुच्य विशेषेण त्यक्त्वा, निर्ममो ममतारहितः, शान्तश्चित्तविक्षेपरहितः, ब्रह्मभूयाय शिवोऽहमिति निरन्तरभावनाय, कल्पते शक्तो भवति ॥५३॥

ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति ।
समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥५४॥

ब्रह्मभूत इति । ब्रह्मभूतोऽविरतशिवोऽहंभावनायुक्तः, प्रसन्नात्मा क्लेशकर्मादिभिरकलुषचित्तः, नष्टं न शोचति, अप्राप्तं न कांक्षति; किं तु सर्वेषु भूतेषु समस्समवर्ती सन् परमेश्वरे भक्तिं परां परमप्रेमानुभवरूपां लभते ॥५४॥

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥५५॥

भक्त्येति । भक्त्या तयाऽस्मि परमेश्वरो यावान्गुणतो विभूतितश्च स्वरूपतस्स्वभावतश्च यस्तत्त्वतो याथार्थ्येन मां परमेश्वरं जानाति- 'ततस्तु तं पश्यते निष्कलं ध्यायमान' इति श्रुत्युक्तरीत्याऽपरोक्षतया साक्षात्कुरुते । एवं ज्ञात्वा तदनन्तरं 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यत' इति श्रुत्युक्तरीत्या परंज्योतीरूपं परमेश्वरं प्रविशतीत्यर्थः ॥५५॥

उक्तं मोक्षप्रकारमुपसंहरति—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
तत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥५६॥

सर्वकर्माणीति । सर्वाण्यपि कर्माणि कुर्वाणः सदा मद्व्यपाश्रयः परमेश्वरमेव शरणं गतस्सन् मम परमेश्वरस्य प्रसादाच्छाश्वतमनादिमव्ययं नित्यं परं स्थानं प्राप्नोति ॥५६॥

चेतसा सर्वकर्माणि मयि सन्न्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तस्सततं भव ॥५७॥

चेतसेति । सर्वकर्माणि मयि परमेश्वरे समर्प्य, यत्करोषि यदश्नासीत्युक्तरीत्या समर्प्य, अहं परमेश्वर एव, परः प्राप्यः पुरुषार्थो यस्य स तथाविधो बुद्धियोगं ज्ञानयोगं समाश्रित्य, मयि परमेश्वरएव चित्तं यस्य तथाविधो भव ॥

मच्चित्तस्सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनंक्ष्यसि ॥५८॥

मच्चित्त इति । मच्चित्तः परमेश्वरार्पितचित्तो भवसिचेत्तर्हि मम परमेश्वरप्रसादात्सर्वाण्यपि दुर्गाणि दुस्तराणि सांसारिकदुःखानि तरिष्यसि । विपक्षे दोषमाह—न श्रोष्यसिचेद्विनंक्ष्यसि परमपुरुषार्थाद्भ्रष्टो भविष्यसि ॥५८॥

यद्यहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥५९॥

यदीति । मदुक्तमनादृत्याऽहङ्कारेण बन्धुभिर्युद्धं न करिष्यामीति मनुषेचेत्तर्हि ते निश्चयोऽसत्य एव भविष्यति; यतः प्रकृतिस्त्वां नियोक्ष्यति--युद्धे प्रवर्तयिष्यति ॥५९॥

स्वभावजेन कौन्तेय! निबद्धस्स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥६०॥

स्वभावजेनेति । स्वभावजेन सहजेन स्वेन शौर्यादिना कर्मणा निबद्धो नियन्त्रितस्त्वं मोहाद्यद्युद्धं कर्तुं नेच्छसि तदस्वतन्त्रः करिष्यस्येव ॥

जडानीशयोः पाशपशुरूपयोः प्रकृतिपुरुषयोर्न किमपि स्वातन्त्र्यमपि तु पत्युरीश्वरस्यैवेति ब्रुवन् प्रकृतशास्त्रार्थमुपसंहरति—

ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥६१॥

ईश्वर इति । ईश्वरश्शिवस्सर्वेषामपि प्राणिनां हृदि हृदयगुहायां तिष्ठति; किं कुर्वन् यन्त्रारूढानि प्रकृतिविकारभूतशरीरयन्त्रवर्तीनि सर्वभूतानि मायया स्वशक्त्या भ्रामयन् स्वस्वकर्मसु प्रवर्तयन् ॥६१॥

---

यदीति । असत्य एवेति । तवाऽस्वतन्त्रत्वादिति भावः ॥५९॥

ईश्वर इति । 'सर्वस्य चाहं हृदि सन्निविष्ट' इत्यादिना पुरस्तान्मया अन्तर्यामिभूतेश्वरदृष्ट्यैव सर्वकारणत्वसर्वोपास्यत्वादिकमुपदिष्टमित्यनेन द्योतितं--'य आत्मनि तिष्ठन्नात्मानमन्तरो यमय'तीत्यादिश्रुतेरित्यर्थः ॥६१॥

परमार्थसारमुपदिशति—

तमेव शरणं गच्छ सर्वभावेन भारत !
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥६२॥

तमेवेति । तमीश्वरमेव, सर्वभावेन सर्वात्मना मनोवाक्कायकर्मभिश्शरणं गतो भव । परमेश्वरशरणागतेः फलमाह—तस्य परमेश्वरस्य प्रसादादनुग्रहात्, परां शान्तिं मृत्युमयसंसारोपरतिं, शाश्वतं नित्यं, पारमेश्वरं स्थानं च प्राप्स्यसि ॥

इतो वक्तव्यं नाऽवशिष्यत इत्युपसंहरति—

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥६३॥

इतीति । इत्येवं ते तुभ्यं गुह्याद्गुह्यतरमिति रहस्यं ज्ञानं मया सर्वविदा आख्यातमेतत्सर्वं पर्यालोच्य यथेच्छमाचरेत्यर्थः ॥६३॥

आवृत्तिरसकृदुपदेशादिति न्यायमनुसृत्य उपदिष्टमेवार्थं पुनरुपदेष्टुं प्रतिजानीते—

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥६४॥

सर्वेति । त्वं मम प्रियोऽसीति ते हितं पुनर्वक्ष्यामि शृण्वित्यर्थः ॥

शास्त्रदृष्ट्या तूपदेश इति न्यायेन शास्त्रार्थस्य 'अहं सर्वस्य प्रभव' इत्यादिनैवोपक्रमादन्तर्यामिदृष्ट्या निबद्धत्वेनोपसंहारेपि तथैव निबद्धव्य इत्याशयेनाह--

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोसि मे ॥६५॥

मन्मना इति । मयि परमेश्वरे मनो यस्य स मन्मनाः मम परमेश्वरस्य भक्तः, मद्याजी परमेश्वरपूजारतो भव, मां परमेश्वरं नमस्कुरु । एवमाचरसिचेन्मां परमेश्वरमेव प्राप्स्यसि; त्वं मम प्रिय इति ते सत्यमेव प्रतिजान इत्यर्थः॥

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥६६॥

सर्वधर्मानिति । सर्वधर्मान्परित्यज्य वर्णाश्रमादिविहितान्सर्वधर्मान्कुर्वाण

---

सर्वधर्मानिति । परमेश्वरमेवेति । 'शिव एको ध्येयश्शिवङ्करस्सर्व-

एव तत्कर्तृत्वादिकं परित्यज्य, यद्वा सर्वानपि धर्मानधर्मांश्च विहाय मां परमे-श्वरमेवैकं शरणं गतो भव। अहं परमेश्वरः त्वां सर्वपापेभ्यो मोक्षयिष्यामि--शोकं मा कार्षीः ॥६६॥

एवं शास्त्रार्थमुपसंहृत्य तत्सम्प्रदायप्रवर्तने नियममाह—

इदं ते नाऽतपस्काय नाऽभक्ताय कदाचन।
न चाऽशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥६७॥

इदमिति। ते भवते उपदिष्टमिदं रहस्यं तपोरहिताय भक्तिशून्याय परिचर्यामकुर्वते परमेश्वरद्वेषिणे च कदाचिदपि न वाच्यमित्यर्थः ॥६७॥

गीताशास्त्रोपदेष्टुः फलमाह—

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥६८॥

य इति। यो मद्भक्तेषु परमेश्वरभक्तेभ्यः परमरहस्यभूतं गीताशास्त्र-मुपदेक्ष्यति स परमेश्वरभक्तिमधिगम्य परमेश्वरसायुज्यमुक्तिं प्राप्स्यतीत्यर्थः ॥

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥६९॥

न चेति। परमेश्वरभक्तानुद्दिश्य गीताशास्त्रोपदेष्टुरन्यः कोऽपि मनु-ष्येषु मम प्रियतमो न भविता ॥६९॥

अध्येष्यते च य इमं धर्म्यं संवादमावयोः।
ज्ञानयज्ञेन तेनाहमिष्टस्स्यामिति मे मतिः ॥७०॥

अध्येष्यत इति। धर्म्यं धर्मादनपेतमावयोस्संवादं योऽध्येष्यति पठि-ष्यति ज्ञानयज्ञेन तेनाहं परमेश्वरः पूजित इति ममाशयः ॥७०॥

---

मन्यत्परित्य'ज्येति श्रुतेरित्यर्थः। एतेनात्र ये- 'मामुपा'स्वेतीन्द्रवाक्यतुल्यमस्म-त्परं, शास्त्रदृष्ट्या तूपदेश इति न्यायं परित्यज्य यथाश्रुतार्थपरतया व्याचक्षाणा अशिवं शरणीकर्तुमूरीकुर्वन्ति ते वैदिकादध्वनः, शिवादपि प्राप्यादीप्सिततमा-द्दूरीभवन्तीति हन्त! तेषां विधिर्भवति चिन्तनीयः ॥६६॥

शृण्वतोऽपि फलमाह—

श्रद्धावाननसूयश्च शृणुयादपि यो नरः।
सोऽपि मुक्तश्शुभांल्लोकान् प्राप्नुयात्पुण्यकर्मणा ॥७१॥

श्रद्धावानिति। श्रद्धासहितोऽसूयारहितो यो नर इदं शृणुयात्, सोऽपि मुक्तो वा भवेत्, अश्वमेधादिपुण्यकारिणां लोकान्वा प्राप्नुयात् ॥

कच्चिदेतच्छ्रुतं पार्थ! त्वयैकाग्रेण चेतसा।
कच्चिदज्ञानसम्मोहः प्रणष्टस्ते धनंजय! ॥७२॥

कच्चिदिति। कच्चिदिति प्रश्नार्थः। पार्थ! त्वया एतन्मदुपदिष्टमेकाग्रचेतसा श्रुतं कच्चित्तवत्वाज्ञानकृतसम्मोहः प्रनष्टः कच्चित् ॥७२॥

अर्जुन उवाच—

नष्टो मोहस्स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत!
स्थितोस्मि गतसन्देहः करिष्ये वचनं तव ॥७३॥

नष्ट इति। मोहो विपरीतज्ञानं नष्टं, स्मृतिः पतिपशुपाशरूपतत्त्वत्रयविषयं ज्ञानं लब्धं- कर्तव्याकर्तव्यविषयसन्देहोपि गतस्स्वस्थः स्थितोस्मि तव वचनमाज्ञामनुवर्तिष्ये ॥७३॥

संजय उवाच—

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥७४॥

इतीति। इत्यहं पार्थस्य महात्मनो वासुदेवस्य च रोमांचकरमद्भुतं संवादमश्रौषम् ॥७४॥

व्यासप्रसादाच्छ्रुतवानेतद्गुह्यतमं परम्।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतस्स्वयम् ॥७५॥

व्यासप्रसादादिति। मह्यं दिव्यचक्षुश्श्रोत्रादिप्रदानरूपाद्भगवतो वेदव्यासस्य प्रसादात्स्वयमेव साक्षात्कथयतो योगेश्वरात्कृष्णाद्रहस्यमिमं परं योगशास्त्रं श्रुतवानस्मि ॥७५॥

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥

राजन्निति । अद्भुतं पुण्यं केशवार्जुनयोः संवादं स्मृत्वा स्मृत्वा हृष्यामि हर्षविवशो भवामि ॥७६॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान् राजन् ! हृष्यामि च पुनःपुनः ॥७७॥

तच्चेति । अत्यद्भुतं हरेर्योगारूढं तद्विश्वरूपं स्मारंस्मारं पुनःपुनः हर्षविवशो भवामीत्यर्थः ॥७७॥

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षोपदेशयोगो नामाऽष्टादशोऽध्यायः ।

यत्रेति । यत्र युधिष्ठिरपक्षे योगेश्वरः श्रीकृष्णो वर्तत इत्यध्याहारः यत्र धनुर्धरः गाण्डीवधन्वा पार्थो वर्तते, अर्थात्सद्भक्तानपायी परमेश्वरोपि वर्तते 'मद्भक्ता यत्र तिष्ठन्ति तत्र तिष्ठामि माध'वेति परमेश्वरवचनात्तत्र श्रीर्वासुदेवानपायिनी विजयो धनञ्जयस्य सर्वत्र विजयशालित्वेन परमेश्वरप्रसादाद्भूतिरैश्वपरमेश्वरप्रसादसुलभत्वान्नीतिर्नयश्च ध्रुवा स्थिरा इति मम निश्चय इत्यर्थः ममाशय इत्यर्थः ॥७८॥

इति श्रीमज्जगद्गुरुश्वेताचार्यभगवत्पादशिष्य श्रीमल्लोकाराध्यनीलकण्ठभगवत्पादाराध्यकृतौ श्रीमद्भगवद्गीताभाष्ये मोक्षोपदेशयोगो नामाऽष्टादशोऽध्यायः ।

---

इति श्रीमल्लोकाराध्य शिवयोगिमहोपाध्याय नागलिङ्गशिवाराध्यकृतायां लघुचन्द्रिकाख्यतत्त्वामृताकराख्यव्याख्यायां मोक्षोपदेशयोगो नामाऽष्टादशोऽध्यायः ।

ॐ तत्सत्, सर्वं सम्पूर्णं, श्री शिवार्पणमस्तु ।